शास्त्रमुक्तावळी-२०

# ॥ पदवाक्यरत्नाकरः ॥

महामहोपाध्याय श्रीगोकुलनाथ भट्टाचार्य विरचितः,




श्रीकांची प्रतिवादिभयंकरं अनन्ताचार्येण परिशोधितः,

श्रीसुदर्शनमुद्राक्षरशालायाम

अमुद्रयत ।

॥ श्रीकाञ्ची ॥

१९०४



इदानी मेतन्मूल्यं रूप्याणि २-०-०

"Sasthra mukthavali"-20

# PADAVAKYARATNAKARA

( A work on Sanskrit Lozic )

By

MAHAMAHOPADHYAYA SRI GOKULANADHA BHATTACHARYA.

Edited by

P. B. ANANTHACHARIAR




Printed and Published By the Proprietor of

SRI SUDARSANA PRESS.

Conjeeveram.

Price Rs 2- 0- 0

1904.

# भूमिका।

पदवाक्यरत्नाकरनामायं ग्रन्थो व्युत्पत्तिवादशब्दशक्तिप्रकाशिकादिभ्योऽपि बहुलतमगम्भीरविचारपूर्णो व्युत्पित्सूना मथ च व्युत्पन्नानां बहूपकारक इति स्पष्ट मामूलाग्र मेतद्ग्रन्थदर्शिनां विदुषाम्।

ग्रन्थस्या स्य प्रणेता श्रीमान् महामहोपाध्यायः श्रीगोकुलनाथशर्मा मिथिलादेशे "मंगरौनी" नाम्नि ग्रामे सकलविद्यानिधेः पीताम्बरशर्मणः फणदहवंशावतंसस्य उमादेवीनाम्न्यां पत्न्या मजनि। अमु मर्थ ममृतोदयनाम्नि नाटके स्वय मेव ग्रन्थकर्ता विस्तरेणाह।

"...भाषितेर्ष्याकलुषखलोचनविषानलैः।
फणं दहन्ति शेषस्य ततः फणदहामताः॥"

इति फ...नाम्नो वंशस्य महिमा प्रपंचितः।

"तत्र वंशे विद्यत एव विद्यानिधिः पीताम्बरो नाम,
यः किल — प्रकृतिगहने तन्त्रे वैशेषिके विवृतिं व्यधा
दकृत चतुर्वर्गव्याख्यामृतानि च भारते।
भरतवचसां तत्त्वख्यात्यै निबन्ध मभाषत
व्यतनुत तथा तिस्रो वाणीविलासकविः
कथाः॥"

इति पीताम्बरनामा स्वपिता प्रशंसितः।

"भगवति! अस्ति तस्य परापरब्रह्ममीमांसनमांसलविज्ञानवासनस्य सकलसारस्वतसंसारसरणिविभागविदो विद्यानिधेः पीताम्बरस्य चतुर्णां पुत्राणा मेकतमो गोकुलनाथो नाम।"

इति गोकुलनाथनाम्न स्स्वस्य पीताम्बरपुत्रत्वं व्यक्तीकृतम्।

पीताम्बरपुत्रेषु त्रिलोचन धनंजय गोकुलनाथजगद्धरसंज्ञके स्वयं गोकुलनाथ स्त्रिलोचनकविधनंजययो रनुजः, जगद्धरस्याग्रज इति च—

"यो जन्मत श्च गुणत श्च मतः कनिष्ठः
श्रीमत्त्रिलोचनकवे श्च धनंजया च।
स श्रीजगद्धरधरा तिलकाग्रजन्मा
निर्मास्यति प्रगुणतत्त्वरसप्रबन्धम्॥"

इत्यमृतोदयनाटकश्लोकेन व्यक्तीकृतम्।

अनेन च स्वपितुः पीताम्बरा देव सर्वाण्यधीतानि शास्त्राणीति-

“ अधिगत मुपाध्याया द्विद्यानिधे रनुचिन्तितं
विरळविषयग्राहिण्यापि स्वया जडया धिया ।
बहुळ मथवा स्तोकं यद्यन्मया श्रुत मर्जितं
परिणति ·रियं तस्य प्रीत स्तयास्तु परः पुमान् ॥ ”

इति ग्रन्थकर्त्रैवा मृतोदयान्ते प्रोक्तम् ।

अयं च कविः पंचदशाधिकषोडशशततमविक्रमशकाब्दे ( 1558 A.D.) मिथिलाया मभूत् । फत्तेसाहाभिध श्रीनगराधिपते र्बहुमानभाजन मय मभूदिति चावगम्यते । तत्र तत्र चामृतोदयादिग्रन्थेषु फत्तेसाहोयं ग्रन्थकृता प्रशंसितो दृश्यते ।

अनेन च (१) चक्ररश्मिः - तत्वचिन्तामणिटीका, (२) दिक्काल निरूपणं, (३) मिथ्यात्वनिर्वचनं, (४) कुसुमांजलिटिप्पणं, (५) काव्य प्रकाशटीका, (६) कुण्डकादम्बरी, (७) द्वैतनिर्णयटीका, (८) कादम्बरी प्रश्नोत्तराणि, (९) एकावळी, (१०) कादम्बरीकीर्तिश्लोकाः, (११) शिव स्तुतिः, (१२) अमृतोदयनाटकं, (१३) पदवाक्यरत्नाकरः, (१४) ला-घवगौरवरहस्यं, इत्यादयो ग्रन्था निर्मिताः । तत्राद्यावधि अमृतोदय नाटकं शिवस्तुतिरिति ग्रन्थद्वयं काव्यमालायां मुद्रितं वर्तते ।

अस्य च शिष्येषु विभक्त्यर्थनिर्णयकर्ता गिरिधरोपाध्यायो प्यन्त भवतीति विभक्त्यर्थनिर्णया देवावगम्यते ।

अस्य च -

अस्मदीय श्रीहयवदनलीलासदनस्थ मेकं पत्र लिखितं प्राय श्शुद्धं,

विद्वद्वर्याणां श्रीमतां ति- अ- कु- श्रीनिवासाचार्याणां तादृशं पुस्तकद्वयं, चेति पुस्तकत्रयाधारेणैव शोधन मकारीति सर्वं सुस्थम् ।

इति ।

प्रतिवादिभयंकरम् अनन्ताचार्यः । ( सम्पादकः )



श्रीरस्तु ।

श्री हयग्रीवाय नमः ।

# शास्त्रमुक्तावळी ।

## पदवाक्यरत्नाकरः ।

नान्यसाधारणो विश्वविषयो यो विभो र्गुणः ।
तस्यैषा शक्ति रखिलप्रपञ्चस्य प्रकाशने ॥ १ ॥

विभोः – संयोगेन मूर्तद्रव्य सामान्यं अनादि निधनेन चैतन्येन सकलमपि वस्तु व्याप्नुवतो भगवतो भवस्य । यो गुणो नित्यसर्वविषयत्वादिना जीवादिगुण व्यावृत्तेन धर्मेण लोकोत्तरः, विषयतया विश्वमभिव्याप्य वर्तते । तस्य द्वैताप्रतिहतस्य इदं कृत्स्नजन्य जातजननानुकूल सामर्थ्यम् । अथच – यश्शब्दत्वेनानुगतीकृतस्सन्नेक इव व्यवह्रियमाणो गगनेतरत्र समवायेना वर्तमानो जगतिविषये विवर्तमानव्यापारो ऽनवच्छिन्नपरिमाणस्याकाशस्य वर्णलक्षणो गुणस्तस्य सर्वधर्मिबोधाय प्रभवत्य भिधानाम वृत्तिरिति । विश्वेश्वरस्य कृति रिवा काशस्य शब्दोपि तत्वतो ज्ञात स्संसारा न्मोचयतीति प्रयोजनसम्बन्धध्वनिः ।

ननु –घटादिवर्णानां प्रपञ्चप्रकाशनसामर्थ्यं नप्रत्येकपरिसमाप्तम् , घश्रवणमात्रेण कलशावगमप्रसङ्गात् । नापि समुदायव्यासक्तं, क्षणद्वयमात्रप्राणनस्य तेन पुरुषेणो च्चारितस्य घकारस्य तत्पुरुषोच्चारयिष्यमाणेन टकारेण यौगपद्येनो त्पत्ते रसम्भवात् । विभिन्न पुरुषोच्चारित घकार टकार व्यतिकरेणा र्थ प्रत्यायना भावाच्च । नच – एकपुरुषोच्चारितयो रेव घकार टकारयोः स्थिरयुत्पत्ति यौगपद्य मव्यवधानेन पौर्वापर्य वा समुदितत्वमित्यपि सम्भवति । तथाहि – प्रथमं स्वतः पुरुषार्थतावच्छेदक सुखदुःखाभावत्वा-

दिविशेषितसुखादिज्ञानात् स्वस्य सुखे दुःखाभावेवा इच्छायांतत्साधनप्रतिसन्धाना त्परस्य वाक्यार्थबुद्धौ तत्कारणत्वाकलना च्छब्दे तदुपायत्वप्रत्यया त्कण्ठतालुसंयोगे वक्तु रिच्छा, अथ चेष्टाया स्तन्निमित्तत्वप्रतिसन्धानं स्वकीयेदानीन्तन कृतिसाध्यता प्रतिसन्धानसमवहितम् , ततश्चेष्टा कण्ठतालुसंयोगसाधनं मदीयेदानीन्तन कृतिसाध्याचेति प्रतिसन्धानम् , अथमदीयेदानीन्तन कृतिसाध्यायाः कण्ठतालुसंयोगसाधनस्य चेष्टायाः समवायीकण्ठइति कण्ठांशे लौकिक मुपनीतचेष्टाद्यंशे पुनरलौकिकं त्वाचप्रत्यक्षंचोत्पद्यते; अन्तर्भागावच्छिन्नत्वञ्च एवा न्तश्शरीरावयव ग्राहकत्वात् । अतएवान्तर्नाडी मवलम्ब्य मनो नोदनादि गोचराः प्रयत्ना उत्पद्यन्ते । तेनेष्टसाधनत्वकृतिसाध्यत्वे चेष्टाया मवगाहमानेनो पादानस्य कण्ठस्य त्वाच प्रत्यक्षेण चेष्टाचिकीर्षां जनयित्वा कण्ठोपादानिका चेष्टासाध्यिका प्रवृत्तिर्जन्यते । इष्टसाधनसमवायितयो पादानप्रत्यक्षस्य तदुपादानक प्रवृत्तौ जनकत्वात्। शरीरावयव वृत्त्यवच्छेदकतासम्बन्धेन चेष्टासाध्यकप्रवृत्तौ चेष्टोपादानावयवत्वाचस्य चेष्टाविशेषणतानिरूपित विशेष्यतासम्बन्धेन वि.शिष्य कारणत्वाञ्च । परशरीर मिष्टसाधन चेष्टावदित्येवं बाह्यत्वाच सत्वेपि न परशरीरावच्छेदेन प्रवृत्तिः । अवच्छेदकतया तदात्मीय विशेषगुणे तदात्मीयादृष्टस्या वच्छेदकता संसर्गेण कारणत्वात् । उत्पद्यते च परशरीरोपादानिका चेष्टासध्यिका प्रवृत्ति निजमहाशरीरे, न त्ववच्छेदकतया शरीरावयवे । भवतु – वोपादानत्वविशिष्टावच्छेदकतैव निरुक्तत्वाचजन्यतावच्छेदकः सम्बन्धः, तेन महाशरीरावच्छेदेन उत्पतनादिचेष्टासाध्यक प्रयत्नोत्पत्त्यभ्युपगमेपि नक्षतिः ।

यत्तु – कण्ठाद्यन्तरावयवावगाहिना मन्धकारे 'वक्रांगुळिः प्रविरळांगुळि रेष हस्त' इत्यादि बाह्यावयवावगाहिनांच प्रत्यक्षाणां नत्वाचत्वं, तद्गतपरिमाणमार्दवादे रपि ग्रहणप्रसंगात । अपि त्वात्मत्वेन कण्ठहस्ताद्यवगाहि मानसमेव, योग्यधर्मपुरस्कारेणा यो–

ण्याना मपीन्द्रिययोग्यत्वाभ्युपगमात् । अत एव दधिधवळ माकाश मिति नायनो निश्चय इति । – तन्न, मम कण्ठ इति प्रतीत्याऽऽत्मत्वेन कण्ठो गृह्यत इत्यस्यानुभवबाधितत्वात् । वक्रांगुळि र्हस्त इत्यादौ च वक्रत्वांगुळित्वादी नामग्रहप्रसंगाच्च ।

तया कण्ठोपादानिकया कण्ठावच्छिन्नया प्रवृत्त्या कण्ठसमवेता चेष्टा जन्यते । उपादानविषयत्वावच्छेदकत्वोभयसंसर्गेण प्रवृत्तेः समवायेन चेष्टांप्रति कारणत्वात् परशरीरचेष्टासाध्यकप्रवृत्त्या उपादानतया विषये परशरीरे स्वावच्छेदके महति शरीरे च चेष्टाया अजननात् । कण्ठचेष्टया च विभाग पूर्वसंयोगनाशौ जनयित्वा तालुना कण्ठस्य संयोगो जन्यते । तेन स्वाश्रयावच्छिन्नत्वसंसर्गेणा काशे प्रत्यासीदता धकारादिशब्दो निजाश्रयावच्छेदेनो त्पाद्यते । तालवादिप्रेरितो वायुश्च यथायथं कदम्बगोळकन्यायेन वीचीतरंगन्यायेन वा शब्दान्तरं बाह्यदेशावच्छेदेनो त्पादयन् प्रसारयतीति शब्दोत्पत्तिप्रक्रिया ।

तथाच प्रयोजकचेष्टागोचरप्रयत्नकाले पूर्वेषां सर्वेषामेव ज्ञानानां विनष्टत्वात् तदनंतरं सुखादिज्ञानतदिच्छाक्रमेण टकारप्रयोजक चेष्टागोचर प्रयत्नोत्पत्तिं यावद्यावन्तः क्षणाः तावत्क्षणान्तरेणैव घकारोत्पत्ते रनन्तरं टकारोत्पत्तिरिति क्व तयो र्यौगपद्यमव्यवधानश्चेति ।

चतुर्भिः पंचभि र्वापि प्रायेणान्तरितः क्षणैः ।
पूर्ववर्णा त्परो वर्णः पदत्वं प्रतिपद्यते ॥ २ ॥

सुखेच्छानन्तरं सुखसाधनं शिष्यवाक्यार्थ बुद्धिरिति स्मरणेन जनिता बुबोधयिषा सुखमपि विषयीकरोति, उपायेच्छायाः फलविषयकत्व नियमात् । सुखसाधनं बुद्धिरिति ज्ञानस्य सुखेच्छायाश्च सुखनिष्ठफलत्वाख्य विषयतानिरूपित बुद्धिनिष्ठोद्देश्यताकेच्छात्वावच्छिन्नं प्रत्येवजनकत्वात् । अन्यथा दुःखध्वंस जनकताज्ञान दुःखध्वंसेच्छाभ्यां जनितायां बुद्धीच्छायां व्यभिचारप्रसंगात । फलत्वाख्य विषयता सुखायधनमिच्छामीत्यनुभवसिद्धा । भवतुवा सुखसाधनता ज्ञानस्यापि सुखज्ञानत्वात्तज्जनि-

तेच्छा सुखतदुपायोभय समूहालम्बन स्वरूपा । एवं वर्णगोचरमिष्ट-साधनता स्मरणमपि पूर्वगृहीतयावदिष्टसाधनता समूहालम्बन स्व-रूपमिति तज्जनितापीच्छा सुखं बुद्धिं वर्णश्चावगाहते । वर्णास्तु या-वन्तएव घत्वघोत्तरटत्वादिना तदिच्छाविषयाः । ततो निरुक्तयावदिष्ट-साधनसमूहालम्बन स्वरूपं प्रत्येकं तावद्वर्णसाधनतया तत्तस्थान चे-ष्टाजातमवगाहमानं स्वकीयकृतिसाध्य प्रथमवर्णजनक चेष्टाविषयं स्मरणम् । अथपूर्वगृहीतयावद्वर्णविषयिणी चेष्टास्विच्छा । ततः प्रथम-वर्णानुकूलं चेष्टाया मिदानींतनस्वकीय कृतिसाध्यत्वे इष्टसाधनत्वयो र्मानसंजायमानमनुभूत चरा ण्यखिला नीष्टतत्साधनानि सुखबुद्धि वर्णचेष्टान्तराणि गोचरीकरोति, उपनायकसत्वात् । इदानीं काल स्तुमनोयोग्यज्ञानादिस्वरूपो लौकिकादपि सन्निकर्षान्मनसागृहीतुं श-क्यः । कृत्यधिकरणकालानवगाहिनोपि स्वाधिकरणकाल गोचरस्य कर्तव्यता ज्ञानस्य प्रवर्तकत्वोपगमात् । भवतुवा पूर्वोक्तमिष्ट-साधनता स्वकीयकृतिसाध्यतयो स्स्मरणमेव कालत्वेन ताद्रूप्येणवे दानींकालविषयकं, तदुपनीतएव कृत्यधिकरणकालः कर्तव्यताघ टक कृतिविशेषणतया मनसा गृह्यते । अतएव वर्तमानस्य ज्ञानस्य मन स्सन्निकृष्टस्यापि पूर्वागृहीतत्वेन कृतिविशेषणतया मानसम्भान मनु-पपन्नमिति समाहितं । सम्भवतिच कृत्यधिकरणकालस्य तद्रूपेण – स्मरणम् , अनवच्छिन्न प्रकारताकत्वेना नुभवस्य स्मरणं प्रति कारणत्वा भावात् । कालिकाधिकरणतावच्छेदक धर्मवानित्यनुभवेन विषयी-कृतानां कालेदन्तानां उद्बोधकविशेषबला दनवच्छिन्नयापि प्रकारत-या स्मरणेन ग्रहणे बाधकाभावात् । तेनच प्रथमवर्णानुकूल चेष्टायां इष्टसाधनत्व स्वकीयदानींतनकृतिसाध्यत्वे वर्णान्तर तदनुकूलचेष्टादौ चेष्टसाधनतामात्र मवगाहमानेन मानसेन प्रथमव-र्णचेष्टायां चिकीर्षा, अन्यत्र चेच्छामात्रं । जन्यतांवा संस्कारोद्बोधक विशेषप्रभवेन कालिकाधिकरणतावच्छेदक धर्मवत्कालिक स्वकीय कृतिसाध्यत्वानुभव समुत्थेन प्रमुषित कालिकाधिकरणतावच्छेदकत्व-स्वरूप तत्तोपलक्षणधर्मेण प्रथमवर्णानुकूलचेष्टाया मिदानीन्तन

कृतिसाध्यत्व मन्यत्रचेष्टसाधनतामात्रमवगाहमानेन स्मरणेनैव निरुक्ता चिकीर्षा। जनितायां तु निरुक्तमानसेन कथितस्मरणेन वा सकलेष्टप- रम्परावगाहिन्यां प्रथमवर्णचेष्टाचिकीर्षायां तादृशकृतिसाध्यत्वेष्टसा धनत्वविशिष्ट प्रथमवर्णानुकूल चेष्टावान्कण्ठ इत्युपादान प्रत्यक्षंत्वा चम्। अत्रच द्वितीयादिवर्णचेष्टानिष्ठेष्टसाधनत्वादिक मप्युपनीतं विष यः। इष्टसाधन द्वितीयवर्ण जनक चेष्टादीनां पूर्वकालीनत्वादिसंसर्गेण प्रथमचेष्टायां विशेषणतया भानसम्भवात्। उपादानीभूत कण्ठावच्छेदेन प्रथमवर्णानुकूल चेष्टासाध्यकः प्रयत्नः। तज्जनितचेष्टोत्पत्तिकालेतु द्वितीया दिवर्णानुकूल चेष्टादिष्विच्छा, प्रथमचिकीर्षास्वरूपफलेच्छासमानकाली नस्योपादानप्रत्यक्षात्मकस्येष्टसाधनताज्ञानस्य पूर्वं सत्वात्। अतएव फले च्छा नस्वत उपायेच्छाजनिका, किन्त्विष्टसाधनता ज्ञानोपलक्षणीभूय जन- कतावच्छेदिकेति सम्प्रदायः। ततः प्रथमचेष्टाजनित विभागकाले मदीयेदानींतनकृतिसाध्या द्वितीयवर्णचेष्टा मदिष्टसाधन मित्याका- रक मखिलानां फलपरम्पराणां अग्रिमवर्णचेष्टानां चेष्टसाधनत्वावगा- हिस्मरणं, अथ प्रथमचेष्टाजनित पूर्वदेशसंयोगनाशकाले द्वितीयवर्ण चेष्टाचिकीर्षा सकलेष्टावगाहिनी, ततः प्रथमचेष्टाजनितोत्तरसंयोगदशायां द्वितीयवर्णचेष्टोपादानस्य स्थानस्य त्वाचप्रत्यक्षम् उपनीतप्रथमवर्ण तदनु- कूलचेष्टेतर यावदिष्टतत्साधनत्वविषयकं, अथ प्रथमशब्दोत्पत्तिकाले द्वितीयवर्णानुकूलचेष्टासाध्यक स्तदुपादानस्थानान्तरावच्छेदेन प्रयत्नः, तत स्तत्स्थानचेष्टाविभाग पूर्वदेशसंयोगनाशोत्तर देशसंयोगोत्पत्ति क्षणचतुष्क मन्तरा व्यतिक्रम्य द्वितीयशब्दोत्पत्तिः। एव मुत्तरोत्तरेषा मपि वर्णानां। यदिच स्मरणं न चिकीर्षाजनकं, अथतु तन्मूलकं मा- नसं तदा पंच क्षणाः शब्दयो रन्तराकाले पतिताः। प्रायिकंचेदम्। अतः क्वचिदधिकविलम्बसम्भवेपि न क्षतिः। द्रुतं विलम्बितं वा वदतीत्यनुभवस्य विश्वजनीनत्वात। श्रोतातु घकारोत्पत्ते रनन्तरं जातिव्यक्ती साक्षात्कृत्य घत्वेन घकारविकल्पानन्तरं घविशेषितं ध्वंसं साक्षात्कुरुते, स्मरतिच टकारोत्पत्तिकाले, तत्स्मरणोपनीत घकारध्वंसविशेषितं टकारं साक्षात्कुरुते, प्रत्येतिच घध्वंसवट्टत्वाव-

च्छेदेन कलशादि शक्तिमिति भवति सुशकापदप्रवृत्तिरिति । घटादि पदप्रत्यक्षेणतु बध्वंसवत्त्वं रेफएव प्रतीयते, नतु टकारे । यदितु पूर्वोपनय वशा त्प्रतीयते, तदा घटपदप्रत्यक्षकार्याणि जायन्त एव । अतएव-चित्रकाव्यादौ व्यवहिता न्यक्षराणि योजयित्वा तदर्थं स्मरतीतिकेचित् ॥

नव्यास्तु - ज्ञानयोरेव यौगपद्यं सिद्धान्तविरुद्धं, नतु योग्यात्मविशेषगुणसामान्यस्य , तथाच घकारजनक चेष्टाचिकीर्षा-काले टकारजनकचेष्टाया मिष्टसाधनत्व मदीयेदानीन्तन कृतिसाध्यत्वे - मूर्धादिस्थानेतु तादृशचेष्टासमवायित्व मवगाहमानं त्वाच मुपादानप्रत्यक्षं, पूर्वं तेषा मुपस्थितत्वात । अथ प्रथमकृत्युत्पत्ति काले द्वितीय चिकीर्षा , तदनन्तरं द्वितीयाकृतिरिति कृत्यो रव्यवधानव-शा त्सम्भवत्येक कर्णावच्छेदेना व्यवधानेन घकारटकारयो रुत्पत्तिः । प्रतिसन्धीयतेच घविकल्पविषये टकारे ऽव्यवहितोत्तरत्वरूपं घ-वैशिष्ट्यम् । तच्च स्वकालीनं प्रागभाव प्रतियोगित्वं स्वावच्छेदकावच्छेद्यत्वं कालिक विशेषणता चेत्येत त्रितय स्वरूपम् । कालमुद्रया स्वस्वध्वंसोभयाधिकरणत्वेसति स्वावच्छेदका-वच्छिन्नत्वंवा । तेन घकाराच्चिरान्तरितस्य घकाराव्यवहितपूर्वकाले ऽनुत्पत्तिकालेवोत्पन्नस्य घकारानवच्छेदककर्णावच्छिन्नस्य च टकारस्य व्युदासः । यदिच चैत्रीय घकाराव्यवधानेनै कस्मिन्नेव श्र-वस्युत्पन्नो मैत्रीयटकारोव्यावर्तनीयः, तदेकपुरुष प्रयोज्यतावच्छेदिका घत्वटत्वव्याप्याजातय एव घत्वटत्वस्थाने प्रवेशनीयाः । एवञ्च निरुक्ताव्यवहितोत्तरत्व संसर्गेण घविशिष्टटत्वमेव घटपदत्वम् । व्यवहितोच्चरिते तद्भ्रमादेव पदार्थप्रतिसन्धानम्, नतु तदनुरोधेन बहुक्षण साधारण मव्यवधानं प्रकृते प्रवेशनीयं, गौरवादिति प्राहुः ।

ननु प्रतिपद्यतामुपनीत पूर्ववर्णेन तध्वंसेन वा विशिष्ट उत्तरो वर्णः पदत्वं, तथापि पदस्वरूपमेवार्थस्य नस्मारकम् , अतिप्रसंगात , अतः पदज्ञानमेव तथेति वक्तव्यम् , तच्चानुपपन्नम् , भिन्न-विषयकज्ञानेन स्मरणाजननादितिचेत् ? उच्यते -

पूर्वानुभूत्या संस्कार शेषया स्वार्थगोचरा ।
जन्यमाना स्मृति श्शब्द मुद्बोधक मपेक्षते ॥ ३ ॥

आसीत्पूर्वं विषयेगवादौ गौरयमित्येवमाकारको ऽनुभवो गवि-व्यवहारादिना गोपदसंबन्ध ग्रहश्च । तस्य चेदानीमविद्यमानस्यापि गवानुभवस्य व्यापारो भावनानामस्मरणोपधाने प्रभवति । तत्सहकारितयातु पदज्ञानमुद्बोधकं स्मृत्याजनकत्वेना पेक्ष्यते । यद्धर्मावच्छिन्नसम्बन्धो यद्धर्म विशिष्टे पूर्वंगृहीतः तद्धर्मावच्छिन्न गोचरसंस्कारे तद्धर्मावच्छिन्नदर्शनस्य-नियतो द्बोधकत्वात । दृष्टाहि गजे हस्तिपकसम्बन्धग्रहाहित संस्कारसहकृतेन हस्तिपकदर्शनेन गजस्मृतिः। यद्यपि स्मरणसामान्ये संस्कारोद्बोधकानि नानुगतानि , तथापि गोपदज्ञानविशिष्ट गोस्मरणत्वावच्छिन्नं प्रति गोपदज्ञानत्वेन भवत्येव याव त्सम्भविन्याया दनुगता कारणता । अगृहीतपदपदार्थसंगतिकानां पदज्ञानादर्थस्मरणानुदयात् गौ गौपदसंगते त्यनुभवजनित संस्कारोपि पदज्ञानसहकारित्वेना पेक्ष्यते । तस्यच शुद्धगोत्वप्रकारकस्मरणोपधायकत्वं नक्लृप्तकारणतानिर्वाह्यमिति गोपदसंगति संस्काराव्यवहितो त्तरोत्पन्न शुद्धगोस्मरणम्प्रति साहशसंस्कारत्वेन पृथगेव कार्यकारणभावः कल्प्यते । तेनो द्बोधकान्तरजनित गोस्मरणे नव्यभिचारः ।

शाब्दिकास्तु-गोपदज्ञानस्य गोपदसंगत गोस्मरणत्वमेव जन्यतावच्छेदकं, तदवच्छिन्नेच गौ गौपदसंगतेति संस्कारस्य क्लृप्त एव कार्यकारणभावः । अत एव पदपदार्थोभयविषयकमेव प्रतिसन्धानं वाक्यार्थबोध श्चोपपद्यते । इति प्राहुः ।

स्यादेतत् , यदि पदस्यार्थेन सह संगतिस्स्यात् , नत्वेवम् । नहि पद मर्थेन सह संयोगसमवाय तद्घटित सामानाधिकरण्यव्याप्तचादिभि स्संगतम् , अन्नाग्निवाशीशब्दे मुखस्य पूरणप्रदाहपाटनापत्तेः। नचाभिधा नामार्थेन शब्दस्य संगति स्सप्तभ्यः पदार्थेभ्यो ऽतिरिच्यत इति वाच्यं, मानाभावात । पारिभाषिक घुनादिशब्दाना मंगुल्याद्य भिनयाना मप्यर्थेन सहातिरिक्त संगतिसिद्धिप्रसंगात ।

यत्तु – गोबुद्धिजनकतैव गोपदस्य गविसंगतिः , सेव शक्तिः । गोज्ञानस्य शक्यत्वमेव गोपदार्थे ष्युपचर्यते । तद्बुद्धिजनकतया गृहीतं पदं तमर्थं स्मारयति, धूमइव वह्निं तथाविधम् । संगतेरेव संस्कारेण पदज्ञानसहकृतेन जनितं पदार्थस्मरण मनुभवम्प्रति हेतुः । यदाहु रभियुक्ताः –

“ इन्द्रियाणां स्वविषये ष्वनादिर्योग्यता यथा ।
अनादिरर्थैं श्शब्दानां सम्बन्धो योग्यता तथा ॥ ” इति ।

साचतद्बुद्धिजनन योग्यता भाषाया मसत्यप्याधुनिकै रारोपिता गाव्यादिशब्देभ्यो बोधंजनयति । व्युत्पन्नास्तु गाव्यादिशब्दै र्गवादिशब्द मनुमाय स्मृत्वावा तत एव गवादिकं प्रतियन्ति । यदाह हरिः-

“ तेसाधुष्वनुमानेन प्रत्ययोत्पत्तिहेतवः ॥
तादात्म्य मुपगम्यैव शब्दार्थस्य प्रकाशकाः ॥
नशिष्टै रनुमन्यन्ते पर्याया इव साधवः ।
नयतः स्मृतिशास्त्रेण तस्मा त्साक्षा दवाचकाः ॥
अम्माम्मेति यदाबाल शिशक्ष्यमाणः प्रभाषते ।
अव्यक्तं तद्विदां तत्र व्यक्ते भवति निर्णयः ॥
एवं साधौ प्रयोक्तव्ये योपभ्रंशः प्रयुज्यते ।
तेन साधुव्यवहितः कश्चिदर्थोभिधीयते ॥ ” इति ।

भवतु वा पभ्रंशेष्वपि ज्ञापकत्वलक्षणं वाचकत्वम्, व्याकरणेनतु दैवानां वाचां क्रतूपकारकत्व लक्षणं साधुत्वमेव व्याक्रियते । “ नाप [ भ्रंशि ] भाषि तवै ” इति श्रुत्या ऽपभ्रंशानां परिसंख्यानात ।

यदाहुः-

“ प्रतिपादकतामात्रं म्लेच्छेष्वप्य वगम्यते ।
वाचकत्वा विशेषेऽपि नियमः पुण्यपापयोः ॥ ” इति ।

तन्न, परिभाषा शब्दे तदर्थबुद्धिजनकता मगृहीत्वापि संकेत मात्र ज्ञानादन्वयमते रुपपत्तेः , शक्तिसंकेत ज्ञानयो वैकल्पिकजनकत्वे गौरवादिति ।

उच्यते –

तादृशार्थावगाहित्व तत्पदप्रभवत्वयोः ।

एकत्र बुद्धौ संकेत श्शब्दस्यार्थेन संगतिः ॥४॥

गवादिपदजन्यत्व गोत्वादिविशिष्टविषयकत्वोभय मेकस्यां बुद्धा वेकत्रद्वयन्यायेन विशिष्टवैशिष्ट्यरीत्यावाऽवगाहमानो गोपदाद्गोत्वविशिष्टविषयिका बुद्धिर्जायतामित्याकारक स्संकेत एव गोपदस्य गोत्वविशिष्टेन सह संगतिः । गोत्वविशिष्टविषयताच्च गोत्वप्रकारतानिरूपित विशेष्यतारूपा बुद्धिविशेषणत्वेन संकेतविषयः । अतएव गोत्वोपलक्षित गोविषयक बुद्धित्वावच्छेदेन द्रव्यपदजन्यत्वावगाह्याधुनिकसंकेतो न गोत्वेन गोबुद्धावुपयोगी, नवा पारमार्थिकं द्रव्यपदस्य गोत्वविशिष्टशक्यत्वं, किन्तु द्रव्यत्व विशिष्टे, तद्धर्मविशिष्ट विषयकबुद्धित्वावच्छेदेन तत्पदजन्यत्वावगाहिनः संकेतस्य तद्धर्मविशिष्टतत्पदयो स्संसर्गत्वस्वरूपं शक्तित्वमितिव्युत्पत्तेः । अतएव वाहीकादौ सत्रापि गोपदबोध्यत्वगोचरः भगवत्संकेतो न शक्तिः, आजानिकप्रयोगस्य कोशव्याकरणादेश्च शक्तिग्राहकस्याभावेन वाहीकत्वविशिष्टे गोसदृशत्वविशिष्टेवा तादृशसंकेतो नगोपदसंकेत इत्यवधारणात् । भगवादिच्छायाः सर्वविषयकत्वस्य विशृंखलविषयताभि रेवोपपत्तौ वाहीकविषयक बुद्धित्वावच्छेदेन बाधितस्यापि गोपदजन्यत्वस्यावगाहित्वे प्रमाणाभावात् । वाहीकस्मरणं गोपदस्य तज्ज्ञानस्यवा जनकत्वेपि वाहीकानुभवशाब्दत्वावच्छेदेन तज्जन्यत्वं बाधितमेव, लाक्षणिकस्या ननुभावकत्वात् । तदनुभवत्वावच्छेदेन तत्पदजन्यत्वावगाहिसंकेत एव तत्र तत्पदशक्तिरित्यपि वदन्ति ।

नन्वेवमपि जातिविषयकबुद्धौ गोपदजन्यत्वावगाही संकेतोपि गवि गोपदस्य संगति स्स्यात, ? नचानवच्छिन्नप्रकारता निरूपित तादृशधर्मविशिष्टवृत्तिविशेष्यताक बुद्ध्यवगाही संकेतएव पदसंगति रिति वाच्यम्, लोमविशिष्टलांगूलत्वावच्छिन्नप्रकारताक पशुनिष्ठ विशेष्यताकबुद्ध्यवगाहिनः संकेतस्य पशुपदसंगतित्वविरहप्रसंगात् ।

किंच शब्दाश्रयत्वबुद्धिविषयत्वाद्युपलक्षित धर्मविषयकबुद्ध्यवगाही संकेतः कथ मनवच्छिन्ने गगने पर्वतत्वादिविशिष्टेवा व्योमादिपदस्य तदादेर्वा संगतिः? कथं वैकत्वगोत्वोभयविशिष्टबुद्धौ गोपदजन्यत्व-संकेतः शुद्धगोत्वावच्छिन्ने गोपदस्य नसंगतिः? गौरित्यत्रैकवचन सहकृतेन गोपदेन तदुभयप्रकारकबुद्धिजननात् । तदितरप्रकार-त्वानिरूपक तत्प्रकारतानिरूपक तद्विशिष्टविषयताक बुद्ध्युद्देश्यक एव संकेतः शुद्धतद्विशिष्टे पदसंगतिरिति चेत? शुद्धपद्मत्वाव-च्छिन्ने पंकजपदसंगते रनुपपत्तेः, पंकजपदजन्यशाब्दबोधीयपद्मविशे ष्यतायाश्च पद्मत्वेतरपंकजनिकर्तृत्व प्रकारतानिरूपकत्व नियमात् । शुद्धपद्मत्वावच्छिन्न स्मरणावगाही संकेतएव पंकजपदसंगतिरिति चेत ? एवमपि वाहीकत्वेन वाहीकं गोत्वेन गांच स्मारयतु गोपदमिति संकेतो गोपदसंगति स्स्यात् । बुद्धिवृत्तिसंकेतोद्देश्यतायां तदितरप्रकारक बुद्धित्वानवच्छिन्नत्वमपि प्रवेशनीय मिति चेत? सूर्यत्वेन सूर्यं चन्द्रत्वेन चन्द्रं बोधयतु पुष्पवन्तपदमिति संकेतस्य कुत्रापि कस्याप्यसंगतित्वप्रसंगादिति ।

मैवम्-प्रवृत्तिनिमित्तवैचित्र्येण संकेतानां संगतित्ववैचित्र्यात् ।

तथाहि -

संकेतविषयीभूत प्रकारत्वविशेषणम् ।<br>
शुद्धं धर्मान्तरेणोपलक्षितं तद्विशेषितम् ॥ ५॥<br>
एकं नानैकत्र नानाव्यक्तौवा बुद्धिगोचरे ।<br>
परिच्छेदक मेतेन विचित्रा पदसंगतिः ॥ ६॥

संकेतोद्देश्यायां बुद्धौ प्रतियोगित्वेन तादृशबुद्धिविशेष्यतायांवा निरूपकत्वेन विशेषणं या प्रकारता तस्या माधेयतया प्रकारीभूय संकेतविषयो धर्मः प्रवृत्तिनिमित्तम् । तन्निष्ठासंकेतप्रकारता काचि दनवच्छिन्नैव, यथा गोपदसंकेतस्य गोत्वनिष्ठा प्रकारता । आधेय

स्वसंसर्गावच्छिन्ना प्रकारतानिष्ठविशेष्यतानिरूपिताच नधर्मान्तरेणा-वच्छिद्यते, समवायेतरसंसर्गावच्छिन्नाया जातिप्रकारताया धर्मा-वच्छिन्नत्व नियमे मानाभावात् । अतएव गौरिति बुद्धे रनुव्यवसा-येन प्रकारताविशेषणतया शुद्धस्य गोत्वादे र्ग्रहणं, नतु गोत्वत्ववि शिष्टस्य, तथोपनायकस्य व्यवसायस्याभावात् । अतएवच जाति शक्तिवादिनोऽपि शुद्धगोत्वमेव शक्तिविशेषणतया वगाहमानं गोत्वशक्तं पदमिति प्रतियन्ति । अपरा प्रवृत्तिनिमित्तपरिच्चायकधर्मावच्छिन्ना, यथा – बुद्धिविषयधर्मप्रकारतानिरूपित बुद्धिविषयवद्वृत्तिविशेष्यताक बुद्धिस्तत्पदजन्येति सर्वनामपदसंकेतस्य या गोत्वादेः प्रका-रत्वांशे प्रकारता, साहिस्वरूप सद्बुद्धिविषयत्वावच्छिन्ना । नहि तत्र संकेतेन प्रकारतायां बुद्धि विषयत्वावच्छिन्नत्वमपि विष-यीक्रियते । इतरा संकेतप्रकारतायां यद्धर्मावच्छिन्नत्वमवगाहते तद्धर्मावच्छिन्ना, यथा - धन्यपदात् पुण्यत्वावच्छिन्नया प्रकार-तया निरूपितायाः पुण्यवद्विशेष्यतायाः प्रतियोगिनीबुद्धिर्जायतामिति संकेतस्य पुण्यवृत्तिः प्रकारता । यथावा लोमत्वावच्छिन्न लोम प्रकारतानिरूपितलांगूलत्वावच्छिन्न विशेष्यत्वेना ऽभिन्नावच्छिन्नावा - लोमलांगूलत्वोभयावच्छिन्ना या लोमवल्लांगूलवृत्तिः प्रकारता-तन्निरूपकपशुवृत्ति विशेष्यताक बुद्धिः पशुपदजन्येति संकेतस्य लांगूलादिवृत्तिः प्रकारत्वविशेषणता - प्रकारतावच्छेदकतया-भासमानेन लांगूलत्वलोमादिना अवच्छिन्ना । एषा त्रिविधापि प्रवृ-त्तिनिमित्ते संकेतोद्देश्यबुद्धिविशेषण प्रकारत्वविशेषणता क्वचिदेकैव, तदितरप्रकारकत्वानवच्छिन्ना तत्प्रकारताक बुद्धित्वावच्छिन्ना संकेतो द्देश्यतेतियावत् । तथाच - कश्चित्संकेत एकमात्र धर्मप्रकारक बु द्ध्युद्देश्यकः, यथा गोपदस्य तत्पर्याय तदादिपदस्य धन्यादिप-दस्य च । अपरो नानाधर्मप्रकारक बुद्ध्युद्देश्यकः, यथा धा-वल्यपद्मत्वोभयविशिष्टवाचिनः पुण्डरीकादिशब्दस्य, धामकर्मत्व

गोत्वोभय विशिष्टव्यक्तिवाचिनो धेन्वादिशब्दस्य । सचाद्विविधः एकत्र विशेष्ये नानाधर्मप्रकारकत्वावगाही, नानाधर्मिणि नानाप्रकारकत्वावगाहीच । आद्य उदाहृतः । अन्त्यो यथा - स्ववैयधशरीरद्वयवृत्तियज्जातिद्वयं तत्प्रत्येकप्रकारतानिरूपित प्रत्येक विशेष्यताक बुद्धिगोचरो नासत्यपदसंकेतः, यथावा सूर्यत्वेन सूर्यं इन्दुत्वेनेन्दु मवगाहमाना बुद्धिजायतामिति पुष्पवन्तपदसंकेतः।

यत्तु पुष्पवन्तपदा च्चन्द्रसूर्यवृत्तिद्वित्ववत्त्वैव बुद्ध्यते। तथाच सामानाधिकरण्येन चन्द्रसूर्यत्वाभ्या मवच्छिन्नया द्वित्ववृत्तिप्रकारतया निरूपिताया श्चन्द्रसूर्योभय वृत्तिविशेष्यतायाः प्रतियोगिनीं बुद्धिमवगाहमान एव संकेतः । तज्जनित स्मरणशाब्दबोधादिकन्तु सामानाधिकरण्येन चन्द्रत्वसूर्यत्वाभ्या मवच्छिन्नं द्वित्वमिव चन्द्रत्व सूर्यत्वोभयमपि धर्मिणि विशेषणतया गृह्णाति, सामानाधिकरण्येन तद्धर्मविशिष्टस्य वैशिष्ट्य मवगाहमानाया बुद्धे स्सविषयकस्यवा सामानाधिकरण्यघटक संसर्गेण धर्मिणि विशेषणतावच्छेदकीभूत तद्धर्मवैशिष्ट्यावगाहित्वनियमात् । अतएव गुणकर्मान्यत्वविशिष्ट सत्ताया द्रव्ये वैशिष्ट्य मवगाहमाना बुद्धि र्द्रव्ये गुणान्यत्वादेरपि वैशिष्ट्य मवगाहते, तेन गुणादौ नतादृशी प्रतीतिः, जायमानापिवा नप्रमाणमिति ।

तन्न, पुष्पवन्तपदात् द्वित्वबुद्धे रनुभवविरुद्धत्वात् । "द्वौ पुष्पवन्तौ जगति द्वौ दस्रौ द्वे पुन र्वसू" इत्यादावन्वयानुपपत्तेः। अतएव भिन्नया भिन्नया शक्त्या तत्तदुपस्थापका न्नानार्थशब्दा त्पुष्पवन्तादिपदस्य वैलक्षण्यद्योतनाय "एकयोक्त्या पुष्पवन्तौ दिवाकर निशाकरौ" इत्यत्र शक्त्यैक्य मेकयोक्त्ये त्यनेनोक्तम्। संकेतविषयस्य भेदेपि बोधवृत्तेः संकेतोद्देश्यताया ऐक्येन शक्त्यैक्यव्यवहारः । नानार्थपदसंकेतीयन्तु बुद्धे रुद्देश्यताद्वयं तत्तद्धर्मप्रकारक बुद्धित्वावच्छिन्नम् । इहतु यदेवोद्देश्यत्व मकत्वप्रकारकत्वावच्छिन्नं तदेवेन्दु-

स्वप्रकारकत्वावच्छिन्न मिति विवेकः । अतएव " जात्या कृति व्यक्तयः पदार्थ " इति सूत्रे पदशक्यत्वस्वरूपस्य जात्या कृति व्यक्तिषु पदार्थत्वस्यैकत्व द्योतनाय ' पथार्थ ' इत्येकवचनम् । प्रातिपदिकार्थयो रभेदान्वये तत्रैव तुल्यवचनान्त प्रातिपदिकोपस्थाप्यत्वं तन्त्रम्, यत्रो द्देश्यान्वित संख्या विरुद्धसंख्याया विधेये तद्विशेषणेषान्वयो न विवक्षितः । " वेदाः प्रमाणम् " " जात्याकृतिव्यक्तयः पदार्थः " " शक्तिव्युत्पत्त्यभ्यासाः काव्यं प्रातिहेतुः " "शक्यमोषधिपते र्विलासिभि श्छेत्तमग्र नखकोरकैः कराः ' इत्यादिषु च वेदत्वनप्रमाणे नवर्तत इति, जातिमात्रं व्यक्ति मात्रंवा न पदशक्यमिति, शक्त्यादिमत्येकमात्र न काव्योपधायकमिति, विरहिणामिव विलासिनामपि न चन्द्रकरस्पर्शो खेदइति, ध्वनयितुं प्रमाणतावच्छेदकनिर्दोष वाक्यत्वादिस्वरूपे प्रामाण्य, गवादिपदार्थत्वे, काव्योपधायकतावच्छेदक समुदायत्वे, विलासिकर्तृकशक्तौच, सुबर्थैकत्वान्वयो विवक्षित ए । " कराः छेत्तुं शक्य " मित्यत्र " शक्यश्वानेन श्वमांसादिभिः पि क्षुत्प्रतिहंतुम् " इति महाभाष्य निर्देशसिद्धं सामान्यक्लीबत्वम् । पदार्थैकदेशेसुबर्थसंख्यान्वयोपि"जात्याख्यायामेकस्मिन् बहुवचनमन्यतरस्याम्"इति सूत्रसिद्धम् । एवं प्रवृत्तिनिमित्तवैचित्र्येण संकेतवैचित्र्यमुपपादितम् ।

इदानो मन्यथापि तद्वैचित्र्यमुपपाद्यते –

संकेतो द्विविधो नित्यो जन्यइत्यादिमाऽभिधा ।
अपरः परिभाषा ता वविशेषेण बोधकौ ॥७॥

नित्यो भगवत्समेवतोभिधेति व्यवह्रियते, जन्योजीव समवेतःपरिभाषेत्युच्यते। तयोस्संकेतत्वेनैव स्मारकत्व मनुमापकत्वंचेतियुज्यते नित्यसंकेतितात् गवादिपदादिव पाणिन्यादिनापित्रावा संकेतितात्गुणवृद्ध्यादिपदा च्चैत्रादिपदादद्देङामादैचां मनुष्यविशेषस्यच स्मरणमन्वय बोधश्च।

ननु – पितृसंकेतितस्य पदविशेषस्याप्यभिधैव, अतएव " पितानाम कुर्या " दितिश्रूयते । तदभिधायकत्वमेवहितन्नामत्वं,

अतएव " द्व्यक्षरं चतुरक्षरंवा घोषवदाद्यमन्तस्थं दीर्घाभिनिष्ठानं-कृतं कुर्यान्नतद्धित " मित्यादिगृह्येन वर्गादिद्वयभिन्नैः स्पर्शैर्हकारेण च घोषवद्भिरादौ यरलवैरन्तस्थैर्मध्ये दीर्घेणोपान्त्येन घटितं कृदन्तं देवराजादि पदमेवाभिधायकमिति नियम्यते, तदितरत् - पित्रादि-संकेतितमपि तद्धितान्तादिपर्युदस्यते। अन्यथा स्मृतिवैयर्थ्यादितिचेन्न; - परिभाषयैवोपपत्तावभिधाकल्पनायां मानाभावात् । आजानिकप्रयोग विरहस्याभिधा बाधकत्वाच्च। नामपदन्तु संकेतितशब्दमात्रे शक्तं, नतु नित्यसंकेतितशब्दे । अदेङ्गुणोनामेति शास्त्रकारीय परिभाषामादायापि नामपदप्रवृत्तिः। घोषवदादिविधिनातु सुतसंस्कारकत्वं क्रतूपकारकत्वंवा पदविशेषस्य नियम्यते, नत्वभिधेति बहवः ।

मणिकृतस्तु आधुनिकनाम्ना मशक्तत्वे शक्यसम्बन्धस्वरूपलक्ष-णाया अप्ययोगाद्वृत्तिमत्वस्वरूपमर्थवत्त्वमपि नस्यात्, तथाच प्रातिपदिक संज्ञा अनुपपन्नैवस्यात्, अपभ्रंशवत्, तथाच सुपामप्यनुत्पत्त्या पत्तिः, अतस्तत्राप्यभिधाभ्युपेतव्या। " द्वादशेहनिपितानामकुर्या " दित्यत्र नाम-पदस्य प्रातिपदिकपर्यायतया तदर्थपर्यालोचनेनार्थवत्त्वाक्षेपात्तत्रश-क्ति सिद्धेः। व्याकरणव्युत्पाद्यत्व लक्षणसाधुत्वमपि तत्र नानुपपन्नम्, " उणादयोबहुळ " मित्यादिना तेषां व्युत्पादनादित्याहुः ।

इत्थमपि टिशब्दादीनां प्रातिपदिकसंज्ञानुत्पत्त्या "अव्ययसर्वना म्नामकच्प्राक्टे" रित्यादौ विभक्त्यनुत्पत्त्यापत्तितादवस्थ्यात्, टिसंके-तग्राहकवाक्यस्य पञ्चम्यप्रकृतितया तदुपस्थिते पञ्चमीप्रत्ययार्थान्व-यानुपपत्तेः । अन्यथा लाक्षणिकशब्दस्य लक्ष्यार्थोपस्थापकत्वाभि-निवेशोमाणिकृतामेवानुपपन्नस्स्यात् । गंगायां घोषइत्यादौ पूरस्मा रिते तीरे सप्तम्यर्थान्वयसम्भवात् । यदिच टेरित्यादिपाणिनि प्रयो-गान्यथानुपपत्त्या निरर्थकेष्वपि संज्ञाशब्देषु प्रातिपदिकसंज्ञाविधिरा-क्षिप्यते, तदा " पितानामकुर्या " दितिनामपदप्रयोगान्यथानुपपत्त्या निरर्थकेपि तदाक्षेपसम्भवादिदमनुपपन्नमिव प्रतिभाति।

यद्यपि " स्वं रूपं शब्दस्याशब्दसंज्ञा " इति व्याकरण-बलेन सर्वशब्दानां स्वरूपे शक्तिरिति प्रतीयते । तथाच देवराजादिसंज्ञाशब्दानां मनुष्यविशेषे निरूढलक्षणैव गृह्यसूत्रेण ग्राह्यते । शब्दार्थस्वरूपेण सह पितृसंकेतस्यैव लक्ष्यार्थे सम्बन्धत्वादिति न प्रातिपदिकसंज्ञाद्यनुपपत्तिरिति । तन्न, ' अशब्दसंज्ञे ' त्यनेन पर्युदस्तानां डित्थुभाडीनामेव वृत्तिमत्त्वानुपपत्तितादवस्थ्यात् । ' गवित्याह ' त्यादौ गोशब्दस्य स्वरूपपरतायां प्रातिपदिकसंज्ञापत्तेश्चेत्यधिक मुपरिष्टात् ।

ननु – भवतु संकेतो नाम पदार्थेन संगतिः, सा किं संकेतत्वेन, उत गोत्वविशिष्टविषयकबुद्धौ गोपदजन्यत्वावगाहि संकेतत्वेन, ज्ञाता गवानुभवस्मरणहेतुः ? आद्ये ऽतिप्रसंगः । द्वितीये ताद्रूप्येणोपमानादिना ग्रहणासम्भवः । तथाहि – प्रथमतोतिदेशवाक्या द्गवयसदृशो गोपदवाच्य इत्याकारका द्गवयसादृश्य मुपलक्षणीकृत्य गोपदवाच्यत्वं प्रतीयते । तच्च वाच्यत्वं नगोत्वादिविशिष्ट विषयताक बुद्धित्वावच्छिन्नो द्देश्यताकसंकेतस्वरूपं, गोत्वादेः पूर्वमप्रतीतेः । अपितु गोपदजन्यबुद्धित्वावच्छिन्नोद्देश्यताक संकेतविषयत्वमात्रम् । अन्यथा ऽतिदेशवाक्यादेव गोत्वविशिष्टशक्तिसिद्धे रुपमानवैयर्थ्यात् । ततो गोत्वावच्छेदेन गवयसादृश्यप्रत्यक्षेण जनितातिदेशवाक्यार्थस्मृति गोत्वावच्छेदेन स्वविषयीभूतसंकेतविषयत्व मेवोपमापयति । संकेतेतु गोत्वविशिष्टविषयक बुद्धित्वावच्छिन्नोद्देश्य ताकत्वं कथं गमयेत्, असामर्थ्यात् । एवं – पिकः कोकिलः इत्यादिकोशोऽपि कोकिलत्वावच्छिन्न पिकपदजन्य बुद्ध्युद्देश्यकसंकेत विषयत्वमात्रं ग्राहयति । नतु तादृशबुद्धौ कोकिलत्वविशिष्टविषयकत्वमपि । तादृशविशिष्टसंकेतस्य पूर्वं मग्रहे तद्विशिष्टे पिकपद् लक्षणाया अप्यग्रहात् । एवं " शीतं गुणे " " मत्सरोन्यशुभ द्वेष " इत्यादिकः कोशोऽपि शीतपदत्वाद्यवच्छेदेनगुणविशेषत्व विशिष्टविषयक बुद्ध्युद्देश्यक संकेतविषयत्व मात्र गुणविशेषार्थक गुणपं-

दसमभिव्याहृत सप्तम्याप्रत्याययति । नतुशीतपदजन्यत्वावच्छिन्न संकेतोद्देश्यत्वमपि तादृशबुद्धौ बोधयितुमीष्टे । विशिष्टस्यकोशप्रवृत्तेः पूर्वमनुपस्थित्या सप्तम्या स्मरणाभावात् । एतेन " कर्तरि कृदि " त्यादिव्याकरणमपि व्याख्यातम् । आप्तवाक्य मप्यतिदेशवाक्यवन्न विशिष्टशक्ति बोधयितु मर्हति । नहि कलशो घटपदवाच्य इत्यत्र वाच्यपदेन घटत्वविशिष्टविषयक घटपदजन्यबुद्ध्युद्देश्यक संकेतविषयः पदार्थविधया बोधयितुं शक्यते , प्रागनुपस्थितेः । अन्यथोपदेशवैयर्थ्यात् । व्यवहारवाक्यशेषविवरणशब्दान्तरसामानाधिकरण्यानि त्वनुमानविधयैव संकेतग्राहकाणीति व्युत्पादयिष्यते । तथा च – यवपदं दीर्घशूकवाचकं, वृत्त्यन्तरं विना आप्तै स्तत्र प्रयुज्यमानत्वादित्याद्यनुमानेनापि यवत्वविशिष्टविषयक यवपदजन्यबुद्ध्युद्देश्यक संकेतघटितं साध्यं यवपदेन नसाधयितुं शक्यते, प्रागनुपस्थितेः । उपस्थितौ वा किमनुमानेनेति चेत् ?

उच्यते –

गोशब्दजन्यबुद्धौ या संकेतोद्देश्यता तया ।<br>
निरूपिता विशेष्यत्वे वर्तते या प्रकारता ॥ ८ ॥<br>
तदवच्छेदकत्वं य द्विषयीभावलक्षणम् ।<br>
तद्गोपदेन वाच्यत्वं गवादा वुपमीयते ॥ ९ ॥<br>
विशिष्ट वैशिष्ट्यबुद्धि मर्यादा वशतस्तु सा ।<br>
अवच्छेदकता गोत्वगोसंसर्गेषु गृह्यते ॥१०॥<br>
विद्यतेहि विशेष्यत्वोपरि संसर्गभेदतः ।<br>
व्यक्तिसंसर्गजातीनां संकेतो गोचरीक्रिया ॥ ११ ॥

गौ गोपदवाच्या इत्युपमित्या गोत्वविशिष्ट मुद्दिश्य गोपदजन्यबुद्ध्युद्देश्यतया निरूपिता या विशेष्यत्ववृत्ति विशेषणता तन्निरूपितं य द्विषयीभावलक्षणं विशेष्यत्वीयस्वरूपसंसर्गावच्छिन्न मवच्छेदकत्वं तेन संसर्गेण संकेतः संकेतीयः तादृशसंसर्गो वा विधीयते । तादृश मवच्छेदकत्व मेवहि गोपदसहकृत वाच्य

पद प्रवृत्तिनिमित्त मतिदेशवाक्येनोपनीत मुपमितेः पूर्वं सादृश्य विशिष्ट पिण्ड प्रत्यक्षेण स्मार्यते । विद्यते च गोत्वविशिष्टायां गवि गोविशेष्यिका गोपदजन्या बुद्धिरिति संकेतस्य निरुक्त संसर्गेण वृत्तिः ।

ननु-एतादृश संसर्गेण गवि संकेतस्य संकेत प्रतियोगिक तादृश संसर्गस्य वा सत्यामप्युपमितौ गोत्वावच्छिन्न विशेष्यताकबुद्धि र्न गोपद संकेतोद्देश्येति बुद्धेरुत्पत्तौ बाधक विरहात् तदा गोत्वेन गोस्मरणशाब्दबोधादे रनुत्पत्त्या नेय मुपमिति रन्वय बोधांगमिति चेन्न ; - गोत्वविशिष्टे तादृशसंकेत प्रकारतावच्छेदकत्वोपमिति जायमाना विशिष्ट वैशिष्ट्यावगाहिन्या बुद्धेः स्वभाव वैचित्र्येण परस्पर विशृंखलित विषयतापन्नेषु गोत्वगोसमवायेषु विधेयधर्मं गृह्णाति , रक्तदण्डोज्ञायत इति प्रतीतिरिव रक्तदण्डत्व समवायेषु ज्ञान विषयतां , धर्मि पारतन्त्र्येण धर्मितावच्छेदकादेरपि विशेष्यत्वा भ्युप गमात् । अत एव लम्बकर्ण आनीयतां , यष्टयः प्रविशन्ति , स पुत्र आगतः , कुटादिर्गणः , भूवादिर्धातु, रित्यादौ धर्मि विशेषणता पन्नेषु कर्णयष्टि पुत्रकुटभूवादि प्रभृतिषु आनयनकर्मत्व प्रवेशकर्तृत्वे आगत गण धातु तादात्म्यानि च प्रति विशेष्यत्व मनुभवसिद्धम् ।

स्यादेतत् , यदि गोपदा द्गोविशेष्यिका बुद्धिर्जायतामिति संकेतस्य विशेष्यतावृत्तिप्रकारताया अवच्छेदकत्वं गवेतरत्र वर्तते ; नचैवं, शाब्दबोध विशेष्यत्वांशे गोरिव गोत्वस्या प्याधाराधेय भावेन संकेत विषयत्वे बाधात ; नहि शाब्दी प्रमितिरपि गोत्वादि विशेष्यिकेति चेन्न ; - संकेतो हि शाब्दबुद्धि विशेष्यताया माधाराधेय भावेन गां स्ववृत्ति प्रकारता निरूपकत्वेन - स्वावच्छिन्न प्रकारता निरूपकत्वेन च गोत्व समवायावपि विशेषणीकृत्या वगाहते । अवच्छेदकता सैव विशेषणता तन्नियता तदन्या वेत्यन्यदेतत् ।

अथवा गौ र्गोपदजन्य बुद्धित्वावच्छिन्नसंकेतोद्देश्यत्वेन निरू-पिताया विशेष्यत्वप्रकारताया अवच्छेदक मित्युपमितौ धर्मितावच्छे-दकतया भासमानं गोत्वं स्वप्रकारतावच्छिन्नावच्छिन्नत्व संसर्गेण विशेष्यत्वप्रकारताया मवच्छिन्नत्वसंसर्गेणा वच्छेदकतायां च विशेष-णीभूय भासते । गोत्वप्रकारतावच्छिन्न गोविशेष्यताकबुद्धि र्गोपदा दित्याकारक श्चोपमितिविषयीभूतः संकेतः । दृश्यतेहि विशिष्ट वैशिष्ट्यबुद्धा वुद्देश्यतावच्छेदकधर्मेण विधेयस्येव तद्विशेषणस्यापि वैशिष्ट्यावगमः । अत एव गन्धप्रागभावकालीनो घटो गन्धवि-शिष्ट पृथिवीत्ववानिति बुद्धे रप्रामाण्यं, गन्धगन्धप्रागभावयो रव-च्छेद्यावच्छेदकभावस्य भासमानस्य बाधात् ।

एतेन-गौ र्गोपदवाच्या, वृत्त्यन्तराजन्य गोपदजन्यप्रतीतिविशेष विषयत्वा, दित्यनुमान मप्युपमानतुल्यतया व्याख्यातम् । व्याख्याता श्चोपदेशकोशविशेषाः । अनुमानोपमानयो रुद्देश्यविधेयभावेन वाच्यत्वं, कोकिलः पिकः इत्यादौ तादात्म्येन वाच्यं भासते, इति विवेकः ।

एव मर्थविशेष्यकबोधजनकानि वाच्यता ग्राहकाणि प्रमाणानि व्युत्पाद्य पदे धर्मिणिवाचकताग्राहकाणि व्याकरणादिप्रमाणानिप्रस्तूयन्ते-

भूसत्तायां कर्तरिक्त च्छेवे षष्ठी धने वसु ।
इत्यादौ वाचकत्वार्था सप्तमी भ्वाद्यपेक्षते ॥ १२ ॥

विशेष्यतावद्बुद्धित्वावच्छिन्नोद्देश्यतानिरूपित जनकत्व प्रकारता वच्छेदकत्वरूपा संकेतविषयता वाचकता । सैव भूसत्ताया मित्यादौ सप्तम्यर्थः । तदेकदेशे विशेष्यतायां सत्तात्वादिविशिष्टस्य विशेषण तयान्वयः । सप्तम्यर्थविषयताया स्तु भ्वादौ ।

ननु -

भूशब्दस्य निर्विभक्तिकत्वेना साधुत्वा त्पदवृत्त्यनुपस्थित-त्वाच्च कथं तत्र पदार्थान्वयः । यत्तु - भूशब्देन वाच्यवाचकत्व

लक्षणया "स्वं रूपं शब्दस्ये" ति सूत्रेण ग्राहितसंकेतेन वा स्मारिते भूधातौ सत्तावाचकत्वान्वयो नानुपपन्नः; वृत्त्या अर्थप्रतिपादकत्व रूपार्थवत्त्वेपि भुवो न प्रातिपदिकसंज्ञा, "अर्थव दधातु रप्रत्ययः प्रातिपदिक" मित्यत्र धातोः पर्युदासादि ति। तन्न; "भू सत्ताया" मित्यत्र भूपदस्वरूपे वृत्तिमत्त्वे क्रियावाचित्वाभावेन धातुसंज्ञाप्रवृत्त्यभावा दधातु रिति पर्युदासाप्रसक्तेः सुब्रुत्पत्ते दुर्वारत्वात। अन्यथा "भुवो वुक्" "ब्रुवो वचिः" "भाषायां सद वसश्रुव" इत्यादा वपि तदनुत्पत्त्या पत्तेः। "इक्श्तिपौ धातु निर्देश" इत्यनेन भुवि भवति प्रयोगापत्तेः। भूशब्दस्यागृहीत शक्तिकत्वेन तद्वाच्यवाचके लक्षणानुपपत्तेः।

नच - भूशब्दः सप्रवृत्तिनिमित्तकः, साधुशब्दत्वा, दित्यनुमानेन सामान्यतः शक्ति र्गृहीतेति वाच्यं; शक्तिपदार्थस्य शक्यतावच्छेदक विशेषघटितत्वेन तदग्रहणे ग्रहासम्भवात्।

यदिच सर्वनामशब्दाना मिव वस्तुत्व मुपलक्षणीकृत्य वस्तु विशिष्टविशेष्यक भूशब्दजन्य बुद्ध्युद्देश्यकः संकेतो विशिष्य प्रवृत्तिनिमित्ताग्रहेपि सुग्रह इत्युच्यते, तदापि एतादृशसामान्यशक्य सम्बन्धस्वरूपा लक्षणा नानुभवौपयिकस्मरणोपयोगिनी। अत एव सर्वनाम्नि न लक्षणेति वदन्ति।

एतेन -भूधातोः स्वरूपे परिभाषा "स्वं रूप" मित्यादिसूत्र ग्राहिता, तया स्मारिते भूधातौ सत्ताद्यर्थकत्वान्वय इत्यपि न सम्भवति; प्रातिपदिकसंज्ञापत्तेः। नच स्वरूपार्थकस्यापि भुवो क्रियावाचित्वा नपाया दधातु रिति पर्युदासा न्न प्रातिपदिकसंज्ञा प्रसक्तिः, 'ब्रुवो वचि' रित्यादौ तु सौत्रीयप्रातिपदिकसंज्ञा वैकल्पिकी, इक्श्तपा वपि वैकल्पिकावेव। यद्वा - भूशब्दो द्विविधः, एको गणपठितत्वे सति क्रियावाची धातु रिति संज्ञायते, स स्वरूप

परो ऽप्यधातु रिति पर्युदासा न्न प्रातिपदिकसंज्ञकः । द्वितीयस्तु गणापठितत्वा दधातुः, तस्य विकल्पेन प्रातिपदिकसंज्ञा इक्श्तिप्च स्यादिति वाच्यम् । " ब्रुवो वचिः " " भुवो वुक् " इत्यादौ ब्रुवो भुवश्च धातुत्वाभावेन " अचिश्नुधातुभ्रुवां य्वोरियङुवङा " वित्येते नोवङो विरहप्रसंगात् ।

यत्तु श्रोत्रोपस्थिते भूशब्दादौ स्वस्व वाचकत्वादे रन्वयः, पदार्थोपस्थितीनां विषयभेदेन शाब्दबुद्धिंप्रति कारणता भेदात्, पदोपस्थितौ पदजन्यत्वाप्रवेशा दन्यथा ऽप्युपस्थिते पदे पदार्थान्तरान्वय सम्भवात् । तथा च भूसत्ताया मित्यत्र भुवोवृत्त्यापदार्थानुपस्थापकत्वेनार्थवत्त्वाभावान्नप्रातिपदिकसंज्ञा । यत्रतु भुवोनुकार्यानुकरण भावेन भेदोविवक्षितः, तत्रानुकार्यस्य श्रोत्रेणानुपस्थितत्वा त्तदुपस्थितत्वाय श्रूयमाणस्य लक्षणा परिभाषा वा वृत्ति रभ्युपेयेति तयार्थवत्त्वा द्भुवोभुव इत्यपि प्रयोग स्सूपपादः । अत एव 'गवित्याह' त्यादा वितिनिपातोपस्थितायां कर्मतायां श्रोत्रोपस्थितस्य गोशब्दस्यान्वयः । अन्यथा निपाताभिहिते कर्मणि प्रथमा श्रवणापत्तेः । " आमगृह्य स्स्मृतौ वाक्ये प्यास्तुस्यात्क्रोधपीडयोः " " चान्वाचय समाहारेतरेतर समुच्चये " इत्यत्र कोशे श्रोत्रोपस्थितेषु निपातेषु प्रगृह्य संज्ञकतादात्म्यस्य तदर्थकत्वस्य चान्वयः । " खलु वाक्यालंकार " इति प्रत्यक्षालोके श्रोत्रोपस्थितस्य खलु शब्दस्य वाक्यज सुख चमत्कारात्मकालंकार द्योतकत्वान्वयः । अत एव श्रोत्रोपस्थिते विव्रियमाण वाक्ये पचतीत्यादौ पाकंकरोतीत्यादि विवरणवाक्यं तथाविध समानार्थकत्वेन तदुपस्थापितः पाककर्तृत्वाद्यर्थोवा प्रतिपादकत्वेन संसर्गेणान्वेति । पाकंकरोतीति वाक्यप्रतिपादितकर्तृत्वस्या ख्यातार्थस्यापि प्रतिपादकता संसर्गेण प्रथमान्तार्थभिन्नेपि पचत्यादा वन्वयोनानुपपन्नः; आख्यातार्थकर्तृत्वस्या श्रयत्वसम्बन्धेना न्वय एव प्रथमान्तपदापेक्षा।

अत एव निर्विभक्तिक नञ्पदोपस्थाप्ये त्यन्ताभावे नपचतीत्यादौ प्रतियोगितया पाकभावनान्वयः । एतादृश निर्विभक्तिक शब्दानां साधुत्वमपि ज्ञापकसिद्धम् । अनुकरणशब्दा स्साधव इति सामान्यत एव भूसत्ताया मित्यनेन ज्ञापनात् । अत एव " गवित्याह " "प्रतिजानीते प्रत्यक्षविती " त्यादि ष्वनुकरण निरर्थक शब्दान्तर्गत स्यौतो वादेशः । " हे ऽ लयो हे ऽ लय इति वदन्तो ऽ सुराः पराबभूवु " रितिश्रुता पभ्रंशानुकरणालय शब्दान्तर्गत स्याकारस्य पूर्वरूपवत्त्वं, " कुमारीलृतक इति ब्रूत " इत्यादौ लृतकानुकरण प्रथमावयवस्वरस्य पूर्वांया देशनिमित्तत्वं संगच्छते । अन्यथा अवादि विधीनां साधुमात्र विषयतया – 'गो' 'आलो' 'अलन्ति' 'अपि' 'अशता' इत्यादौ भाषायामिव तदप्रसक्तं स्यादिति । तन्न ; – एवं सति लतिष्ठति शब्दो गो इत्यादेरपि साधुत्व प्रसंगात् । आ- प्रगृह्य इत्यादौ विभक्तिं विनापि तादात्म्यान्वयस्य पचति पाकंकरोति इत्यादि विवरण वाक्ये प्रतिपादकतया शब्दे आख्यातान्वयस्य च त्वयैव स्वहस्तितत्वात् । तस्मा दनुपपन्नमेव भूसत्ताया मित्यादि वाक्यमिति ।

अत्रोच्यते –

यदर्थ शक्त्या धातुत्वं निपातत्वं च वादिषु ।
तदर्थ सम्बन्धभक्त्या बोधकत्वेपि तत्तथा ॥ १२ ॥

वाकारस्यैव गतिविशेष शक्ति निबन्धनं धातुत्वं विकल्प शक्ति निबन्धनं च निपातत्व मित्यन्येषामपि भूकार प्रभृतीनां धातुत्व निपातत्व प्रयोजिका भवत्यर्थ विशेषशक्तिरिव तदाश्रय सबन्ध स्वरूप लक्षणया बोधकतापि । अत एव स्थितिशक्तस्य तत्सम्ब- न्धेन गतिलक्षकस्यस्थाधातोः प्रतिष्ठत इत्यादौ धातुत्वं, अभाव शक्तस्य तदधिकरण लक्षकस्य नञो ऽ घटं भूतलमित्यादौ निपातत्वं

च संगच्छते । तथा च स्व शक्य सत्ता वाचकत्वेन स्व लक्षकस्य भूशब्दस्य धातुत्वेन पर्युदस्तत्वा न्न प्रातिपदिक संज्ञा । चकारस्य च स्वार्थवाचके स्वरूपे लाक्षणिकत्वेपि निपातत्वानपायात् ' सुपो लुकि ' " चा न्वाचये " इत्याद्यमरो प्युपपद्यते ।

परिभाषास्वरूपेण संकेतेन तु वृत्तिमत् ।
भवद्भ्वादिपदं प्रातिपदिकत्वं प्रपद्यते ॥ १४ ॥

" स्वं रूपं शब्दस्या शब्दसंज्ञे " ति सूत्रेण प्रतिपादितेन पाणिनिसंकेतेन वृत्तिमान् भ्वादिः शब्दः प्रातिपदिकसंज्ञा मपि लभते, चकारादि रव्ययसंज्ञां त्यजति, टिघुप्रभृतिषु परिभाषाया अप्यर्थवत्वसम्पादकत्वस्य दृष्टत्वादिति भुवो वुक्चस्त्वर्थ इत्यादयः प्रयोगाः सूपपादाः ।

गवित्याहे त्यादिवाक्ये श्रोत्रेणोपस्थिते गवि ।
इतिशब्दपरामृष्टे ज्ञेया वचनकर्मता ॥ १५ ॥

इतिशब्दः सर्वनामप्रकृतिकतया बुद्धिस्थप्रकारेण परामृशति । बुद्धिश्च क्वचिच्छब्दजन्या तदिदमादि सर्वनामपरामर्शबीजम् । यथा - यो धूमवान् स वह्निमानिति । क्वचित्पूर्ववाक्यरूप प्रक्रमजन्या, यथा - अभून्नृपो दशरथः - सोध्यैष्टवेदानिति । क्वचिद्व्रियमानानुभवात्मक प्रसिद्धिरूपा, यथा - घटं दृष्ट्वा गोपदं श्रुत्वा वा वदति इम मानय शृणु वेति । क्वचित् स्मरणरूपा, यथा - ते लोचने क्षिपतः स्मेति । गवित्याहेत्यादौ त्वितिशब्दपरामर्शबीज मनुभवं सम्पादयितुं प्रयुक्तो गोशब्दो न वृत्तिमानिति न प्रातिपदिक संज्ञकः । इतिशब्दानन्तरं तु लुप्तापि प्रतिसंहिता द्वितीयाकर्मतां ब्रूयात् । अव्ययानां नित्यप्रथमान्तत्वे निर्विभक्तिकत्वे वा इत्यर्थस्य क्रियायां कर्मभावसंसर्गेण साक्षादन्वयोपि सम्भवति । दृष्टोहि ' नारद इति

पश्यती ' त्यत्र निपातोपात्तायाः कर्मतायाः कर्मणो वा, स्तोक मेव पचतीत्यत्रैवकारेण बोधितस्य स्तोकान्यतादात्म्यव्यवच्छेदस्य, कु-टिलं न गच्छतीत्यत्र नञा प्रतिसंहितस्य कुटिलान्योन्याभावस्य च, दर्शनपाकगमनेषु धात्वर्थेषु भेदान्वयः ।

ननु – तथापि पचति पाकं करोतीत्यादिविवरणे पचतिपदध-र्मिकः प्रतिपादकतया विव्रियमाणवाक्यान्वयः कथं स्यात्, पचति पदस्य पदानुपस्थितत्वात् । पचतीत्यस्य वाक्यतया लक्षणाया अ प्ययोगात् । लकार एव पचति पदलक्षक इति चेन्न; – पच धात्वर्थस्या नन्वयप्रसंगात् । पचे स्तात्पर्यमात्रग्राहकत्वे प्रत्ययानां प्रकृत्यर्थान्वित स्वार्थबोधकत्व व्युत्पत्तिभंगप्रसंगात् । पचधातुः पच तिलक्षको, लकारो भावतिङ्साधुत्वप्रयोजनक इति चेन्न;– निर र्थकतिङात्मनेपदत्व यक्समभिव्याहृतत्वादि नियमभंगापत्ते रिति । मैवं, विव्रियमाणवाक्याख्यातस्य प्रतिपाद्यत्व लाक्षणिकत्वात् ।

तथाहि –

पचतीतिपदं ब्रूते पचिं लेड्विषयत्ववाक् ।
पच्यर्थेनान्वितो लार्थो व्याख्या वाक्यार्थ अन्वितः ॥१६॥
सप्तम्यन्तोद्भवपदा र्थकोद्भवपदात्परा ।
सप्तमी बोध्यता माह व्याख्यावाक्य व्यपेक्षया ॥ १७ ॥

पचति पाकं करोतीत्यत्र पचेः पचतीति पदे लक्षणा । लट स्तु बोध्यत्वे लक्षणा । तद्वाक्यार्थः पचतिपदबोध्यत्वं पाकं करोतीति विवरणवाक्यार्थे पाककर्तृत्वेन्वितं प्रभवत्यर्थां द्वया ख्यानव्याख्येययो रेकार्थकत्वं गमयितुम् । एवं – “ तस्य काव्य-स्योद्भवे निर्माणे समुल्लासेच हेतु ” रित्यत्रोद्भवपदं सप्तम्यन्तोद्भवपदे लाक्षणिकं, सप्तमीच प्रतिपाद्यत्वे लाक्षणिकी, तद्वाक्यार्थो –

'निर्माणे समुल्लासेचे' ति व्याख्या वाक्यार्थे निर्माणप्रतियोगिकत्व समुल्लासप्रतियोगिकत्वादा वन्वेति । वाक्यैकवाक्यतया पदार्थयो रन्वये विलक्षणव्युत्पत्तिस्वीकारेण विभक्त्यर्थयोरपि परस्परमन्वयो न विरुद्धः । अत एव यजेते त्यत्राख्यातार्थे भावनायां तरति मृत्यु मित्याद्यार्थवादिकाख्यातेन लक्षणया अन्यथावोपस्थापितप्राश-स्त्यं सर्वंच सुबर्थकारकमन्वेतीति मीमांसकाः । चैत्रः पचति पाककृति जन्यचेष्टाश्रयत्वा दित्यादिन्याये हेतुपंचम्यर्थ आख्यातार्थे ऽन्वेतीति नैयायिकाः ।

इति संवलितं यत्र व्याख्येयस्य वपुः स्थितम् ।
तत्र श्रोत्रोपस्थितं तदितिना परिमृश्यते ॥ १८ ॥

यत्र "पचतीति – पाकं करोतीत्यर्थः" एवं व्याख्यानग्रन्थः, तत्र तिद्वयं श्रोत्रोपस्थितस्य पचतिपदस्य पाकं करोतीति वाक्य-स्य च परामर्शकम् । तदर्थस्तु प्रतिपाद्यप्रतिपादकभाव सम्बन्धेनार्थ पदार्थेन्वेतीत्यर्था द्व्याख्यानव्याख्येययो रेकार्थकत्वं लभ्यते ।

नन्वेवमपि विवरणेन पदसंकेतग्रह इति कथ मुपपद्यता मिति चेत् ? इत्थं –

पचतेः पाककर्तृत्वबोधकत्वे व्यवस्थिते ।
सुग्रहा पाचिना पाकलाभा त्कृत्यर्थता तिङः ॥ १९ ॥

विवरणेन पाककर्तृत्वबोधकत्वे पचतिपदस्य प्रमापिते – तिङ्-कर्तृत्वबोधिका, पाकार्थक पचिभिन्नत्वेसति पाककर्तृत्व बोधकपचति पदान्तर्गत साधुपदत्वा दित्यनुमानेना वापोद्वापाभ्यां तिङः कृतौ शक्तिर्ग्राह्येति व्युत्पादयिष्यते ।

एवं व्याकरणा त्कोशा दुपमानाच्च वस्तुनि ।
गृह्यते पदसंकेतः पदे वा वस्तुवाचिता ॥ २० ॥

व्यवहारे विवरणे प्रसिद्धपदसन्निधौ ।
वाक्यशेषे चानुमानद्वारा तदुभयग्रहः ॥ २१ ॥
तद्ग्रहाहितसंस्कारसाचिव्यात् पदश्रुतिः ।
स्मारयत्यर्थ मेषैव स्मृति र्थानुभाविकी ॥ २२ ॥

"कर्तरि कृत्" "शेषे षष्ठी" त्यादिव्याकरणेन "शीतं गुणे तद्वदर्थाः सुषीमः शिशिरो जडः" इत्यादिकोशेन च पदे वस्तुवाचकता, अतिदेशवाक्यार्थस्मरणसहकृत सादृश्यविशिष्ट पिण्डप्रत्यक्षेण वस्तुनि पदवाच्यता, व्यवहारस्थलीयानुमानेन पुनरनियमेन क्वचिद्वस्तुनि पदवाच्यता क्वचित्पदे वस्तुवाचकताच, गृह्यते । तादृशग्रहणाहितसंस्कारस्तु पदज्ञान मुद्बोधक मासाद्य वस्तु स्मारयति । तस्याश्च स्मृतेः गोपदज्ञानत्वविशिष्टजन्यत्वे सति गौ गोपदशक्येति संस्कारत्वावच्छिन्न कारणतानिरूपित कार्यताधिकरण गोस्मरणत्वेन गोशब्दबुद्धौ जनकत्वं, तेन सम्बन्धान्तरज्ञानेन गोपदज्ञानेनैव वा पुरुषान्तरसमवेतेन कालविधया पदेन सह तुल्य कालीनत्वादिसंसर्ग गोचरसंस्कारेण गवि गोपदशक्यत्वसंस्कारेणैव वा पुरुषान्तरसमवेतेन समयविधयोत्पादितायाः गौरिति स्मृते र्न शाब्दबोधांगत्वम् । वस्तुतस्तु - पदज्ञानशक्तिसंस्कारयोः पदार्थ स्मरणंप्रति साक्षा दनुभवं प्रतिच स्वजन्यपदार्थानुसन्धानद्वारा कारणत्वं, पदार्थस्मरणस्य च्चानुभवत्वादिजात्यसत्त्वे शाब्दस्मरणोभयवृत्तिजात्या - तत्तत्त्वेत्वे तदन्यतरत्वेन ज्ञानत्वेन वा शाब्द बुद्धे र्जनकत्वम् । शाब्दबोधोत्पादकसामग्रीप्रवेश स्तु गोपदज्ञान तद्वृत्तिमद्गोचरसंस्कारो भयजज्ञानत्वेन, नातः प्रत्यक्षाद्युपस्थितस्य गो रन्वयबोधः । दृश्यतेच चिरान्तरितकरणव्यापाराणां जनकताव च्छेदकेनापि करणविशेषजन्यत्वादिना सामग्री घटकत्वम् । अत एवानुभवव्यापाराणां निर्विषयत्वमते घटानुभवजनित संस्कारत्वेन

पटस्मरणसामग्र्यां, यागव्यापारस्या पूर्वस्य च दानजन्या पूर्वादि वैलक्षण्येन यागजन्यापूर्वत्वेन स्वर्गविशेषसामग्र्यां च घटकत्वम् । अन्यथा - घटानुभवजनित संस्कारदानजनिता पूर्वसत्वे पटस्मरणस्वर्ग विशेषयो रुत्पादापत्तेः ।

यदिचा तएव संस्कारस्य सविषयकत्व मपूर्वस्यच्च वैजात्य मभ्युपेयते, तदवच्छिन्नमेव सामग्रीमध्ये प्रविशतीति मतम् । तदा प्रकृतेपि यदवच्छेदेन पदज्ञान वृत्तिसंस्कारजन्यत्वं सधर्मएव तदुभ-या व्यवहितोत्तरस्मरणत्वादि रन्वयबुद्धिं प्रति जनकतावच्छेदकः, नतु तत्र जन्यताप्रवेशः, गौरवात् । शाब्दबुद्धित्वादिना पृथगेव शा ब्दबुद्धौ जनकत्वम् । अतएव यत्र पटपदाम्पदादीनां प्रतिसन्धानं, अथ कर्मत्वादीनां स्मरणम् , अथ पदाना माकांक्षा प्रतिसन्धानम् , ततो विशेष्यविशेषण न्यायेन शाब्दबुद्धिः, अथ विशिष्टवैशिष्टयबुद्धिः, तत्र पदेन साक्षाज्जनिताया उपस्थिते रसत्वेपि न विशिष्टवैशिष्ट्य-बुद्धे रनुपपत्तिः ।

शाब्दिकास्तु -

संकेतसंसर्गेण पदपदार्थ वैशिष्टयावगाही गौ गों-पदवान् गोपदं वा गोमादित्याकारकः संगतिग्रहएव पदार्थ स्मा रकः । संकेतस्तु भगवत्समवेत एकोपि यत्पदजन्यत्वेन य द्धर्मवि-शिष्टविशेष्यिकां बुद्धिमुद्दिशति, तद्धर्मावळीढ स्तत्पदस्यैव संसर्गोभवति, नत्वन्यस्य । संसर्गतातु तस्य संकेतत्वेनैव । समवायोपिहि यदनु योगिकत्वावच्छेदेन यत्प्रतियोगिक स्तयोरेव विशिष्टबुद्धिंजनयति, नतु वायुरूपयोः । संसर्गतातु तस्य समवायत्वेन नकेनापिवा वच्छिन्ना। कोशव्याकरणादिरपि पद तदर्थयोः संकेतेन वैशिष्ट्यमात्रं ग्राहयति । अतएवागृहीतेपि प्रवृत्तिनिमित्ते दशरथपदवानिति निर्धर्मितावच्छेदक शक्तिग्रहेण तादृशीं स्मृति मुत्पाद्य तादृशएव शाब्दबोधो जन्यते । दशरथत्वादिजातीना माधुनिकायोग्यत्वा त्तद्विशिष्टे शक्तिग्रहासम्भवात् । दशरथत्वसंसर्गिका बुद्धिरपि न दशरथत्व विशिष्टमुपनेतुं प्रभवति ।

सांसर्गिकविषयता भिन्नविषयताया एवोपनीत भानप्रयोजकतावच्छेद-कत्वात । अन्यथा संयोगसंसर्गक बुद्धे रनन्तरं संयोगं जानामीत्य नुव्यवसाय सम्भवेन सांसर्गिकविषयत्वा योग्यत्वप्रवादस्य निर्युक्तिक त्वापत्तेः । जातिमानिति विशिष्टबुद्धिरपि नानवच्छिन्न दशरथत्वप्र-कारकस्मरणं जनयितुमर्हति, समानप्रकारता कानुभवस्यैव स्मरणोप धायकत्वात् । अन्यथा जातिमानिति निखिलजात्यवगाहिन्या बुद्ध्यामुण्डितसर्वजाति प्रकारकस्मरणे सार्वज्ञ्य प्रसंगात् । नच दशरथपदवाच्ये दशरथपदस्य लक्षणा, शक्ति ज्ञान स्येव तदाश्रय सम्बन्धज्ञानस्यापि शक्यतावच्छेदकविषयत्व नियमेन तदग्रहे लक्षणाया अपि ग्रहणायोगात् । संकेतत्वे नैव संकेतस्य लक्षणाज्ञान विषयत्वेतु शक्ति ज्ञानेऽपि तथैव विषयत्वौचित्यात् । तादृशस्य संकेत संसर्गकस्य निर्धर्मितावच्छेदकस्य पदप्रकारकग्रहस्य तथैव स्मरणंप्रति संस्कारद्वारा क्लृप्त कार्यकारण भावेनैव निर्वाहः । दर्शितमतेतु दशरथपदवाच्यत्वा वच्छेदेन दशरथपदलक्षणा गोचरस्य संस्कारस्य कार्यकारण भावान्तरं कल्प्यमिति गौरवम । एवं गौ र्गोपद वाच्येति सधर्मितावच्छेदकस्य शक्ति ग्रहस्य तदाहित संस्कारस्यवा तादृशस्मरणे क्लृप्तकारणभावः, नतु शुद्धायां गौ रिति स्मृता वतिरिक्त कारणता कल्पनं युज्यते । संकेत संसर्गेण या दशरथपदत्वावच्छिन्न प्रकारता तदतिरिक्त प्रकारत्वा निरूपित विशेष्यताकपदार्थ प्रतिसन्धानस्य तादृशान्वयानुभवे तादृश गोपदत्वा वच्छिन्न प्रकारता निरूपित गोत्वावच्छिन्न विशेष्यताक निश्चयस्य च तादृशान्वय बुद्धौ तद्रूपेण कारणत्वं, नतु गोपद ; प्रतिसन्धान जन्या गवि गोपदसंस्कारजन्याच या गोत्वावच्छिन्नस्मृतिः, तस्या स्तत्वेन गोत्वावच्छिन्ना न्वयानुभवे कारणतावच्छेदक गौरवात् । शाब्दपदार्थज्ञानस्य तादृशविशिष्ट बुद्ध्यजनकत्व प्रसंगात् । शाब्द बोधे संस्कार कारणताकल्पने गौरवात । सुरभिपदजन्ये गवानुभवे

लाघवेतरबाधा द्युपनीत गोविशिष्टत्वानुभवे च व्यभिचार प्रसंगात् । गोपदजन्य गोस्मरण नाशकानुभवत्वस्या व्यवहितोत्तरत्व सामानाधिकरण्योभय संसर्गेण तादृश स्मरण विशिष्टानुभवत्वस्य वा विनश्यदवस्थ तादृश स्मरणजन्य गवानुभव व्यापकत्वात् । विभिन्न क्षणिकयो वैशिष्ट्य विरहात् । विनश्यदवस्थ स्मृतीनां तत्त द्व्यक्तित्वेन तत्त द्व्यक्तिप्रति हेतुत्वेचा विगौरवात । तस्मा द्गोत्वावच्छेदेन संकेत संसर्गेण गोपदवत्वग्रहस्य विशेषण विशेष्यतावच्छेदक प्रकारताक निर्णय विधया गोमानयं गौरस्तीत्यादि पदजन्यानुभवे क्लृप्तेन कार्यकारणभावेन निर्वाहा दतिरिक्त कार्यकारण भावकल्पने गौरवात् वृत्तिग्रहतुल्यविषयताकएव शाब्दबोधोयुक्तः । कोशव्याकरण व्यवहारादिजनित शाब्दानुमित्यादि रूप इव संकेत ग्रहः प्रात्यक्षिकोपि भवत्यन्वयबोधांगम् , यदि विद्यते पदयो राकांक्षादिग्रहः सहकारी । अत एव शाब्दबोधानन्तर मपि शाब्द बोधान्तरं नानुपपन्नं, प्रथमशाब्दबोधस्यापि पदवृत्तिमत्पदार्थविषयकत्वात।

नतु दशरथपदवानिति निर्धर्मितावच्छेदकक प्रतिसन्धानस्य यदि संकेतसंसर्गावच्छिन्न दशरथपदप्रकारकत्वेन कारणता, तर्ह्यसौ दशरथपदवा न्नवा वस्तु संकेतसंसर्गेण दशरथपदव न्नवेत्यादि संशयादपि शाब्दबोधप्रसंगः । यदिच संकेतसंसर्गाव च्छिन्न दशरथप्रकारताभिन्न प्रकारताऽनिरूपित विशेष्यताकत्वेन, तदा दशरथो दशरथपदवानिति तथाविधान्वयबोधे व्यभिचारः; यदि च जन्यतावच्छेदककुक्षावपि दशरथपदवृत्ति तादृशावच्छेदक ताभिन्ना वच्छेदकत्वानिरूपकस्य तादृशदशरथपदावच्छिन्न विषय त्वस्य प्रवेश स्तदा दशरथपदवानिति निर्धर्मितावच्छेदककग्रहा दनन्तर मितरबाधाद्युपनीत पुरुषत्व राजत्व दशरथत्वाद्यवगाहिनो न्वयबोधस्या नुपग्रह इति चेन्न; - इतरबाधाद्युपनीत धर्मस्य तत्र प्रकारत्वेपि तन्निष्ठविषयतानवच्छेदकतया दशरथपदमात्रावच्छिन्न विषयत्वस्या भिहितान्वयबोधेपि सत्वात् ।

एतेन – गोपदस्य विशिष्य संकेताग्रहणकाले निर्धर्मितावच्छेदकक गोपदप्रकारकज्ञानेन जनितो गोपदवाच्ये लाघवेतरबाधाद्युपनीतं गोत्वमप्यवगाहमानो न्वयबोधोपि व्याख्यातः, तत्र गोत्वस्य प्रकारत्वेपि गोपदवाच्यत्वावच्छिन्न विषयतानवच्छेदकत्वात । अन्याहि गोत्वगोपदवाच्यत्वोभयप्रकारता निरूपित विषयतातो गोत्वगोपदवाच्यत्वोभयावच्छिन्ना विषयता । अत एव तादृशस्थले गोत्वावच्छेदेन गोपदवाच्यत्व ग्रहकारणतायां न व्यभिचारः । नापि सुरभिपदेन गोशब्दबुद्धौ जन्यमानायां, इतरबाधाद्युपनीते गोपदवाच्यत्वे इतरबाधोपनीतस्य विषयतानवच्छेदकत्वात । अत एवानुमितावपि विधेयांशे लाघवाद्युपनीतो महानसीयत्वादि र्न विधेयतावच्छेदक इति शुद्धवह्निमत्तासिद्धिकालेपि तथाविधानुमितिः । नच तथाविधानुमितिस्थले भिन्नविषयक प्रत्यक्षादिप्रतिबन्धाय लाघवादिज्ञानघटिता पृथक्सामग्री, अवश्यं च दार्शनिकै रपि तादृशस्थले विशेषणविशेष्यतावच्छेदक प्रकारनिर्णयकारणता व्यभिचार परिहाराय कोपि प्रकार आदरणीयः । नहि मया विशेषणविशेष्यतावच्छदक प्रकारक निर्णयकारणत्वा दन्य त्पदवृत्तिम त्पदार्थोपस्थितेः कारणत्व मुररी क्रियते । एवं कोशानुमानादिजनितपद धर्मिक पदार्थवाचकताग्रहस्य न साक्षा त्पदार्थशाब्दबोधोपयोगः । किन्तु पदार्थे पदवाच्यताग्राहक मानान्तर मुत्थाप्यते । यदि विशेषण विशेष्यतावच्छेदक विशेषणाद्युभय वैशिष्ट्यावगाहि निश्चयत्वेन विशिष्टवैशिष्यबुद्धौ नकारणत्वसम्भवः, तदा वाचकताग्रहस्तु पदशाब्दबुद्धावेव साक्षा दुपयुज्यते । गामुच्चारयेत्यादौ गोपदार्थवाचकं किञ्चिद्वाचकंवा गोपदं तत्कर्मकं त्वत्कर्तृक माशंसाविषयउच्चारणमिति वाक्यार्थबोधे संकेतनिरूपकत्वसंसर्गावच्छिन्नया गोत्वेनवा केनाप्यवलीढया प्रकारतया निरूपितगोपदत्वावच्छिन्नविशेष्यतस्य निरूपकं ज्ञान मपेक्षिणीयमितिन्यायादेव सिद्धं । एवं विलोमानुलोमवाच्यवाचकभावग्रहेणैव

पदार्थविशेष्यकस्यैव क्वचि त्पदविशेष्यकस्यापि अन्वयबोधस्योपपत्तौ स्वरूपे शब्दानां न लक्षणा, नवा स्वरूपवाच्यत्वावच्छिन्ने, शक्तयै वोभयदोष सम्भवात् । अतएव विनैवलक्षणां वाजपेय पदाद्वा जपेयपदवाच्य [ याग ] त्वादिना यागादे र्बोधइति विधौ व्युत्पा-दयिष्यते । अतएव घटपदाम्पदयो रेकपदव्यतिरेक प्रयुक्तान्व-या ननुभवप्रयोजकव्यतिरेक प्रतियोगिद्वितीयपदत्वरूपायाः पदान्तरा व्यवहित घटपदोत्तरत्व विशिष्टाम्पद स्वरूपायावा आकांक्षायाज्ञान-स्य घटपद वाच्यघटत्वावच्छिन्नप्रकारता निरूपिताम्पदवाच्यकर्म-त्वावच्छिन्न विशेष्यताकान्वयबुद्धि प्रति जनकत्वं सुवचम् । अन्य-था कलशइति जानामीत्यादाविति नोपात्ते कर्मणि कलशान्वयबोधे व्यभिचारणवारणाय प्रयासापत्तेः । घटाद्वितीययो राकांक्षाज्ञानसत्वे-पि कर्मनामपदवाच्यमिति विपरीतबुद्धिसत्वे कर्मपदोपस्थिते कर्मणि घटतादात्म्यान्वयापत्तेः, अम्पदधर्मिक घटपदाकांक्षाज्ञानस्य घट-पदजन्य घटोपस्थित्य म्पदजन्यकर्मोपस्थित्योः सहकारित्वकल्पनेप्य म्पदविषयक कर्मपदज्ञानजनितेन कर्मस्मरणेन तथाविधस्थले घटः कर्मेत्यन्वयबुद्धे र्दुर्वारत्वात् । अम्पदज्ञानत्वावच्छिन्न कारणतानि-रूपित कार्यतावच्छेदकीभूतेना म्पदज्ञानाव्यवहितोत्तर कर्मस्मरणत्वे नावलीढतया कथमपि तादृशस्मरणवारणासम्भवात् । सम्भवति च तादृशस्थले बाधग्रहकाले प्यनुद्बुद्धः कर्माम्पद वाच्यमित्याका रक संस्कारइति तज्जन्यत्वादिप्रवेशेनापि तादृशसंस्काराव्यवहि-तोत्तरस्य ज्ञानस्य वारयितु मशक्यत्वात । एतेन यत्रपदे आकां-क्षा ग्रहस्तज्जनिता पदार्थोपस्थितिः कारणमिति व्यक्तिभेदेनापि कार्यकरणभावो निरस्तः । नचाम्पदधर्मिकेण घटपदधर्मिकेणचा कांक्षाज्ञानेन शाब्दिकमते प्येकविधान्वय बोधजनने परस्परं व्यभि चारः , तत्तदाकांक्षाविशिष्टपदवाच्यत्वेन पदार्थानामन्वयबोधप्रवे शेचा त्यन्तिकानुभव विरोधादिति वाच्यम् ; घटपदस्य बहु-वर्णघटिततया तद्घटिता कांक्षायां द्वेधा प्रवेशेन घटाकांक्षा निर्णयत्व स्य गुरुतया लघुना घटपद धर्मिका म्पदाकांक्षा निर्णयत्वेनैव जन

कत्वा तद्व्यतिरेकेण फला नुत्पत्तेः । गोभ्य इत्यादौतु प्रत्ययस्य बहुवर्ण घटिततया तद्धर्मिक एव प्रकृत्याकांक्षानिर्णयः कारणम् । गवा मित्यादौ विनिगमना विरहा दुभयसत्व एव शाब्दबोधो ना न्यथा, क्लृप्तकारण बाधे कार्यबाधस्य न्याय्यत्वात । ननु तथापि विपरीत व्युत्पन्नानां अम् घट इत्यादि वाक्यादम्पदोत्तरं घट पद मित्याकांक्षा ज्ञानेन जनिते घटपदवाच्य घटा भिन्नमम्पदवाच्य कर्मे त्यन्वय बोधे व्यभिचार इति चेत् ? नह्य वहितोत्तरत्व पूर्वत्वादि- कमाकांक्षा, किं त्वाकांक्षा ग्राहकम् । आकांक्षात्वं यद्व्यतिरेक प्रयु- क्तोन्वय बोधाभाव स्तत्प्रयोजक व्यतिरेक प्रतियोगि घटपदत्वम् । प्रयुज्यतेहि कारणाभावेन कार्याभावः । अन्व यबोधश्च घटपदवा- च्यत्वावच्छिन्न विषयता निरूपिताम्पद वाच्यत्वावच्छिन्न विषयताको ग्राह्यः, तेन घटरूपं पश्येत्यादौ विशिष्ट शाब्दबोध प्रतियोगिका भाव विशेषं प्रति घटपदाम्पद व्यतिरेकयोः प्रयोजकत्वेपि न घटः कर्मेति शाब्दबोधः । आकांक्षा शरीरेच न प्रवृत्तिनिमित्तानां घटत्व कर्मत्वादीना मन्वयबोध विषयतया प्रवेशः, प्रयोजनविरहात ; सकल पदार्थ साधारण्या आकांक्षाया अभ्युपगमात । वृत्ति ज्ञाने नैव पदार्थाना मन्वयबुद्धौ प्रतिं नियमना सम्भवाञ्च । आकांक्षा ज्ञान जन्यतावच्छेदकमपि तद्वाच्यत्वावच्छिन्न प्रकारता निरूपितापर पद वाच्यत्वावच्छिन्न विशेष्यताकान्वय बुद्धित्वम्। भिद्यते पुनराकांक्षा अन्वयभेदन । अन्यथा सत्यां पदार्थोपस्थितौ सर्वत्र सर्व संसर्गेणा न्वय बुद्धि प्रसंगात । सेयमाकांक्षा “प्रत्ययः परश्च” “बहुच् पुरस्ता” दित्यादिभि राप्तवाक्यै रुपमीयते अनुमीयते वा। परः प्रत्ययः प्रकृतिव्यतिरेक प्रयुक्तान्वय बोधाभाव प्रयोजक व्यतिरेक प्रतियोगीत्यति देशवाक्यार्थं स्मारयता घटाद्युत्तरोम शब्द इति प्रत्यक्षेणा म्शब्दे घटपद साकांक्षत्वोपमिति जननस्यापि सम्भवात् । एव मेव “कर्तरिकृ” दिति व्याकरणेन कृत्त्वोपलक्षिते कर्तृवा- चकताग्रहानन्तरं ण्वुलादौ कृत्त्वग्रहा दतिदेशवाक्यार्थं स्मृत्वाण्वु लिकर्तृवाचकत्व मुपमित्यापरिच्छिद्यते । विपरीतव्युत्पन्नैस्तु वैप

रीत्येन सैवाकांक्षापरिच्छिद्यइति कव्यभिचारः । स्याद्वा तादृशाकांक्षा ज्ञानस्यानायत्त्वा तत्तदव्यवहितोत्तरत्वादिजन्यतावच्छेदकं । अतएवशक्य लक्ष्यार्थसहस्रभेदे नाकांक्षाज्ञानकार्यकारणभावभेदः । इत्थंच तल्लक्षणा ज्ञानस्यापि तत्तल्लक्ष्यत्वेन तत्तदर्थविषयीणां स्मृति रेव तत्तल्लक्ष्या र्थानुभवे हेतुः, शक्तिज्ञानतुल्ययोगक्षेमत्वात । प्रतिपाद्यत्वमेव वा शक्य लक्ष्यसाधारण मविशेषेण जनकजन्यज्ञानयो र्विषयः । यदाहु रभियुक्ताः - ॥ * ॥ "ग्राह्यत्वं ग्राहकत्वंच द्वे शक्ती तेजसो यथा । तथैव सर्वशब्दाना मेते पृथगवस्थिते ॥ न सोस्ति प्रत्ययो लोके य श्शब्दानुगमा दृते । अनुविद्धमिव ज्ञानं सर्वं शब्देन दृश्यते ॥ * ॥ " इति । तस्मात्-" ॥ * ॥ स्मरणं पदेन जनितं पदवृत्ति मतः पदार्थस्य । अन्वयबुद्धा वर्थः कथं न तादृक् परि स्फुरतु ॥ * ॥ "

-इति व्याकुर्वते ।

आलंकारिकास्तु-

व्यंजनया वृत्त्योपस्थितानां पदानामन्वयबुद्धौ क्वचित्तादात्म्येन क्वचिद्वाच्यवाचकभावेन पदार्थानुप्रवेशः । तथाहि-"दया तितिक्षा सत्यंच युक्तं त्यक्तं ननु त्वया । अपवर्गव्यंजनानि कथं स्यु र्भीमभूमिपे ॥" इत्यत्र भीमाभिधाने राजनिप्रकृते-भीमभूमिपपदस्य व्यंजनालभ्यस्य तादात्म्य मारोप्य, तस्मिन्नपवर्गव्यंजनाना मासन्नार्थसिद्धिसूचकानां दयातितिक्षादीनां प्रस्तुतानां ध्वनिप्रतीत पवर्गेतरस्वरान्यवर्णाभेदेना ध्यवसितानां मसम्भवः कथं स्यु रित्यनेन प्रतिपाद्यते, तेन प्राकरणिकयो रर्थयोः कोपि स्वारसिको विरोध इति तदुपपादकतया गुणीभूतमत्रव्यंग्यम् । तथा " उदेति सविता ताम्र स्ताम्र एवास्तमेति च । सम्पत्तौ च विपत्तौ च महता मेकरूपता ॥ " इत्यत्र विशेषस्य प्रक्रान्तस्य सामान्येन समर्थनस्वरूपे ऽर्थान्तरन्यासे उदयस्य सम्पत्तित्वेनास्त मयस्य विपत्तित्वेन ताम्रस्वरूपस्य चैकरूपताभावेन समर्थनस्यो पपादनाय ताम्रपदवाच्यं स्ताम्र इति ताम्रपदद्वयजन्यो बोधोंगी कार्यः । रक्तपदोपादानेतु रक्तपदबोध्यत्व ताम्रपदबोध्यत्वयो

धर्मयो र्वैरूप्या देकरूपतोपन्यासाय तु प्रतीतिस्थगनं स्यात् । अत एव एतादृशस्थले कथितपदं न दोषः । प्रत्युत पदान्तरोपादान मेव । "तादृगेवास्तमेति चे" ति सर्वनामशब्दोपादानन्तु न प्रतीतिं स्थगयति । सर्वनाम्ना ताम्रपदबोध्यताम्रत्वेनापि परामर्शसम्भवात् । एव मेव " सकलकलं पुर मेत ज्जातं सम्प्रति सुधांशुबिम्ब मिव " इत्यादौ सकलकलपदबोध्यत्वं विधुपुरयोः साधारणो धर्मः सम्भवती त्याहुः । तदुभय मपि दर्शनविरोधा दुपेक्षणीयम् ।

नन्वेकपदजनितया पदार्थस्मृत्या सह द्वितीयपदजनिताया स्तस्या मेळकासम्भवात् कथ मुभाभ्यां पदार्थान्वयधी रिति चेत् ? उच्यते -

समूहालम्बनस्मृत्या रूढयोः सव्यपेक्षयोः ।
पदयो र्यौगपद्येन स्मृतार्थो न्वय मर्हति ॥ २३॥

प्रत्येकानुभवजनितसंस्कारै र्जनिता द्वयो र्बहूनां वा स्मृतिः परस्परव्यपेक्षा मप्यवगाहमाना अव्यवधानेन तावतः पदार्थान् स्मारयति, सा च स्मृतिः पदार्थान्वयविषयां बुद्धिं जनयतीति किमनुपपन्नम् ।

## इति पदवृत्तिग्रहविवरणम् ॥

---

अन्वयबुद्धिविषयाणा मन्वयानां विभागः प्रस्तूयते -

अभेदो भेद इत्येव मन्वयो द्विविधोऽर्थयोः ।
आद्य स्तत्रान्वयो नेष्टो निपातार्थेन कस्य चित् ॥ २४ ॥

पदार्थयो रन्वयो द्विविधो ऽ भेदोभेदश्च । अभेदश्च प्रायेण निपातार्थेन सार्धमितरस्य संसर्गतया नभासते । " यल्लक्ष्मी रिव तेन विश्व मखिलं मत्तीकरोत्युन्मदा यल्लोकोत्तरचेष्टितेव रमणीवर्गा त्तदुत्क्रम्यते । यत्रोपप्लुत मति तेन शिथिले त्याख्यायते तद्गति र्यज्जागर्ति नवा सरोरुहमुखी तत्राभिसर्तुं क्षमे " । यदभिन्नं लक्ष्मीसादृश्यं

तद्धेतुकस्याखिलविश्वमत्तीकरणस्याश्रयः, यदभिन्नो लोकोत्तरचेष्टितान्यतादात्म्यव्यवच्छेदस्तद्धेतुकस्य रमणीवर्गाधिकस्योत्कर्षस्याधिकरणं, सरोरुहमुखी, यदभिन्नेनो पप्लुतभेदेन विशिष्टगमनकर्त्री तत्प्रवृत्तिनिमित्तकशिथिलाभिन्नाख्यानकर्म तद्गतिः, यदभिन्नस्य जागरणतदभावकोटिकसन्देहस्य विषयः साच – तत्प्रयुक्ताभिसरणक्षमत्वाभाववती नहि, मित्याकारकेशाब्दबोधे यत्पदार्थाभेद इवैवतद्वाकाराणां निपातानामर्थे भासत इति प्रायिकमेवेतत् । यल्लक्ष्मी रिवेत्यादौ सरोरुहमुखी त्यनुषङ्गेणास्तीत्यध्याहारेण च सरोरुहमुखीकर्तृके लक्ष्मीसदृशास्तित्वे अस्तेरर्थे यदितिद्वितीयांतक्रियाविशेषणार्थस्यान्वयो नतु निपातार्थ इति नित्यसक्रियवाक्यवादिनो वैयाकरणाः । यदाह कात्यानः–" अस्तिर्भवन्तिपरः प्रथमपुरुषे अप्रयुज्यमानो ऽप्यस्ती " ति । भवन्तिरिति " भुवोझिजि " त्यौणादिकेन सूत्रेण सिद्धो वर्तमानकालार्थकोऽपि तद्वाचकत्वलक्षणया लट्परः, तेन प्रथमपुरुषे लडन्तास्तिधातुरप्रयुज्यमानक्रिये नित्य मध्याह्रियते इति कात्यायनवाक्यार्थः । सूत्रे भुवइति वदे रवतेश्चोपलक्षणम्, तेन वदन्ति रवन्ति श्चेत्यपि सिद्धम् । झिच्प्रत्ययान्ताः सर्वेस्त्रियां द्वयोर्वा, " किं वदन्ती जनश्रुतिरि ", ति दर्शनात् ।

नाम्नो नाम्ना धातुना च विभक्त्या तद्धितेन च ।
सामानाधिकरण्यं स्यात् किंवा नाम्नैव केवलम् ॥ १९ ॥

तादात्म्यसंसर्गावच्छिन्नतत्पदार्थविषयतानिरूपितस्वार्थविषयताकबुद्धिजनकपदत्वं तेन तस्य सामानाधिकरण्यम् । तच्च प्रथमं प्रातिपदिकेन सह प्रातिपदिकस्य । तदपि समानविभक्तिकयोः समासान्तर्गतयो रभेदापन्नयोश्च नाम्नोरिति त्रिविधम् । तत्राद्यं यथा–"पुण्यजन प्रीतिकरी कुवलयदलकोमला कान्तिः । कथमन्धकार भवतः सर्वेषां नयनहारिणी नस्यादि " त्यत्र सम्बोध्यस्यान्धकारस्यारोपितनीलिमस्वरूपायां कान्तौ सर्वेषां प्रथमान्तार्थानां तदात्म्येनान्वया त्सामानाधि

करण्यं प्रातिपदिकानाम् । एवं नीलो घट इत्यत्र नील घटयोरपि सामाना धिकरण्य मवसेयं। नीलघटपदयोः सामानाधिकरण्ये द्विविधा आकांक्षा, एका नीलप्रकारताक घटविशेष्यताकबोधव्यतिरेकप्रयोजक व्यतिरेक प्रतियोगितावच्छेदकप्रथमान्तघटनीलोभयपदत्वस्वरूपा । द्वितीया घटप्रकारतानिरूपित नीलविशेष्यताकबोधाभावघटिता । यादृशबोधा भावघटिता या आकांक्षा सा तादृशमेव बोधं प्रयोजति । व्यज्यते च विशेष्यपदस्य विशेषणप्राथम्येन तदर्थविशेष्यकबुद्धिप्रयोजका कांक्षा । अत एव वह्निमान् पर्वत इत्यादौ पर्वतविशेष्यकबुद्धिजन काकांक्षाव्यंजकाभावा त्तदनभिव्यक्त्या न पर्वतविशेष्यका बुद्धिः । विपरीतव्युत्पन्नानां तु व्यंजकान्तराभिव्यक्ताकांक्षाज्ञाना द्भवत्येव । परन्तु तादृशबोधतात्पर्येण प्रयुक्त मिदं वाक्य मसाधु यज्ञकर्मणि प्रयोगानर्हम् । अतो न्याये काव्ये च तत्प्रयोगानर्हम् । तादात्म्य संसर्गकस्थले विशेष्यत्व मेवोद्देश्यत्वं विशेषणत्व मेव विधेयत्वम् । यदुद्देश्यका न्वयबुद्धि स्तस्मिन् सिद्धत्वं विधेयेच्चा गन्तुकत्व मेवो त्सर्गतो व्यंजयति । अत एव जातिगुणवाचिनो र्जातिवाचिनः प्राधान्य मिति कर्मधारयघटकनामपौर्वापर्यनियामकः प्राचीनानां प्रवादः । अत एव "न्यक्कारो ह्यय मेव मे यदरय" इति वाक्ये न्यक्कारस्य पूर्वसिद्धत्वध्वनने गर्वभावापकर्षप्रसक्ति रित्यविमृष्टविधेयांशकत्वं दोष इति रसविद्याविदः । अत्र विशेष्यनिघ्नपदस्य प्रातिपदिकान्तरसा मानाधिकरण्ये एकलिंगबोधकसुबन्तत्वं प्रायेण तन्त्रं । अत एव नीलं घट इत्यादि र्न प्रयोगः, प्रयोग श्च पृथिवी घट इत्यादिः । यत्र च लिंगानन्वयिपदार्थद्वारा पदार्थतादात्म्य मितरपदार्थे न्वेति न साक्षा त्तत्राजहल्लिंगपदसामानाधिकरण्येपि विशेष्यनिघ्ने नियतं नपुं-सकत्वं, सामान्यविधिप्राप्तत्वात्; यथा – क्षुदुपहन्तुं शक्य मित्यत्रो पहननकर्मणि क्षुधि उपहननतदर्थशक्तिकर्मण स्तादात्म्येन साक्षा दन्वयो बाधित इत्युपहन्ते रर्थे द्वारीकृत्यान्वयात् सविशेषणेहि विधि

निषेधौ सति विशेष्यस्य बाधे विशेषण मुपसंक्रामत इति न्यायात् शक्य मिति नपुंसकनिर्देशः । अत्रोत्पत्त्यनुकूलो व्यापार उत्पाद ना शके, स्तत्कर्मोत्पाद्यं कृत्यप्रयस्य, ध्वंसानुकूलो व्यापार उपहन्तेः, शक्यर्थान्वयीभाव स्तादर्थ्यं वा तुमुलोर्थः । प्रधानधात्वर्थकर्मण्य भिहिते गौणधात्वर्थकर्मत्व मुपहननफलीभूतध्वंसान्वयि प्रतियोगित्व स्वरूपं क्षुदन्तरप्रथमार्थः । भवतु वा एताहशस्थळे उपहन्तिना फलविधयोक्तस्य ध्वंसस्य प्रथमान्तप्रातिपदिकार्थे प्रतियोगितयान्वयः, पदभेदेन च्चाकांक्षावैचित्र्यात् । दृश्यते च घटो नीलो भवतीत्यादेः प्रथमान्तार्थस्य भवत्यर्थेन्वयः । हरि रप्याह – "प्रधानेतरयो र्यत्र द्रव्यस्य क्रिययोः पृथक् । शक्ति र्गुणाश्रया तत्र प्रधान मनुरु- ध्यते ॥ प्रधानविषया शक्तिः प्रत्ययेनाभिधीयते । यदा तदा गुणे तद्व दनुक्तापि प्रतीयते ॥" इति ।

यत्रै कस्य द्रव्यस्य गुणप्रधानभावापन्नक्रियाद्वयनिरूपितं शक्तिद्वयं कारकद्वयं पृथक् तत्र गुणशक्ते रभिधानेपि प्रधानानुरोधि प्रधानकारकानभिधानप्रयुक्तं कार्यं भवत्येव, तेन पक्त्मोदनं भुङ्क्ते पाचकेनोदनो भुज्यते इत्यादौ च पच्यर्थ कर्मकर्त्रो रभिधानेपि भुज्यर्थ कर्मकर्त्रो रनभिधानात् द्वितीया तृतीये सूपपादे । यदितु प्रधानका- रकं प्रत्ययेनाभिहितं, तदा तत्प्रत्ययार्थान्वितद्रव्ये गुणक्रियाकारक मनुक्तमपि प्रथमादिप्रत्ययलक्षणया संसर्गतयावा प्रतीयते । यथा पचता पक्त्वावा भुज्यते ओदन इत्यत्र पाके ओदनकर्मकत्वं, पक्त्व मोदनं भुङ्क्ते चैत्र इत्यादौ चैत्रे पाककर्तृत्वं, सन्धाय शरेण हन्तीत्यादौ सन्धाने शरकर्मकत्वं, आहूय ब्राह्मणायददातीत्यादौ आह्वाने ब्राह्मण कर्मकत्वं, आरुह्यवृक्षात् पततीत्यादा वारोहणे वृक्षकर्मत्वं, गत्वा ग्रामस्य स्थातौ गत्वा ग्रामे तिष्ठति इत्यादौ ग्रामकर्मकत्वं गमने, स्वीकारयितुं ब्राह्मणाय ददातीत्यादौ प्रतिदातुं ब्राह्मणादादत्ते इत्यादौ च स्वीकारे प्रतिदाने च ब्राह्मणकर्तृकत्वं तत्सम्प्रदानकत्वं च,

पतित्वा वृक्ष मवलम्बत इत्यादौ पतने वृक्षापादानकत्वं, स्थित्वा ग्राम मीक्षत इत्यादौ स्थितौ ग्रामाधिकरणकत्वं च, तत्त द्वाचक विभक्त्यभावेपि पदा दन्वयविधया वा प्रतीयते । यत्रतु द्रव्यभेद स्तत्र प्रधानक्रियाकारकस्या भिधानेपि गुणक्रियाकारकाभिधायकान्तर मपेक्षते । अत एव सूपं पक्त्वौदनो भुज्यत इत्यादयो व्यवहारा इति सम्प्रदाय विदः ।

क्षुदुपहन्तुं शक्यं, पक्त्वौदनो भुज्यत इत्यादौ प्रथमान्तपदाना मुपहननक्षुत्पाककर्मौदनादौ लक्षणा, नतु प्रथमायाः कर्मत्वमर्थः, अनानुशासनिकत्वात् ; नापि धात्वर्थप्रथमान्तार्थयो र्भेदेनान्वयः, अव्युत्पन्नत्वात् । क्षुध मित्यो दनमिति पदमेव कथितस्थलयो रध्याहर-णीयमिति वस्तुगतिः । अत एव "श्रुत्वा प्यर्थं नानुमतः कंसेनार्थः कुबुद्धिने" त्यादौ प्रधानक्रियाकर्मणः कृदभिहितत्वेपि श्रवणकर्मणि द्वितीयाश्रवण मप्युपपद्यत इति नव्याः । तच्चिन्त्यम्, क्त्वाप्रत्ययस्य समानकर्तृकत्वार्थकत्वे कर्तु रभिधानात् चैत्रः पक्त्वा चैत्रेण भुज्यत इति प्रयोगस्य, भावमात्राभिधायित्वे चैत्रेण पक्त्वा चैत्रो भुङ्क्ते इति प्रयोगस्यापत्तेः । प्रथमया गुणकारकाभिधानस्या वश्यकत्वात् श्रुत्वा प्यर्थमित्यादौ श्रवणकर्मणो पदेशवाक्यार्थेन सहानुमितिकर्मणो धर्मस्य पुमर्थस्य भेदएव विवक्षितः । यद्रूपावच्छिन्नान्वयिप्रधानक्रिया-कारक मभिहितं तद्रूपावच्छिन्नान्वयि गुणक्रियाकारकमपि तद्रूपा-वच्छिन्नवाचकतत्पदसव्यपेक्षया विभक्त्या ऽभिधीयत इति सामान्य व्युत्पत्तिः । अत एव चैत्रत्वावच्छेदेन भोजनकर्तृत्वस्य स्वरूपत्वा वच्छेदेन पाककर्तृत्वस्य विवक्षाया मात्मना पक्त्वा चैत्रोभुङ्क्ते इत्यादिकः प्रयोगः सूपपादः, अत्रकरणे तृतीयेति वदन्ति ।

एवं बहुव्रीहेरपि भिन्नलिङ्गपदसमानाधिकरणस्य क्वचि न्नपुंसक त्वं साधु । अत एव " तमः शातिरेव यदर्थं तदाहे " ति प्रकाशः । यद र्थमिति क्रियान्तशम्यर्थविशेषणत्वात् नपुंसक द्वितीयान्तमिति वस्तुगतिः।

तस्मा त्सामानाधिकरण्येपि भिन्नलिङ्गपदे नियतविशेष्यनिघ्ने क्लीबत्वं तद न्यान्वयमूलकम् ।

एवं प्रातिपदिकयोः सामानाधिकरण्ये वचनैक्यमपि प्रायेण तन्त्रं, अतो नीळाघटः सुन्दरोदाराः शीतप्रकृतिराप इत्यादिर· प्रमाणं । येन प्रातिपदिकेन समभिव्याहृताया विभक्ते रर्था दन्या संख्या समानाधिकरणप्रातिपदिकार्थे विवक्षिता तत्र समानाधिकरण प्रातिपदिकयो र्विभिन्नवचनमपि साधु । सा च संख्या क्वचित्पदार्थे क्वचि त्तदेकदेशे न्वेतीति द्वेधा । उभयं यथा – " भमानि तत्तेन निजायशोयुगं द्विफालबद्धा श्चिकुराः शिरास्थितमि " त्यत्र चिकुरा- न्वयि, "वचनमुलयाःच्छेत्तुं शक्य " मित्यत्र शक्यर्थ व्यापारान्वयि चैकत्वं । बहूना मुलयाना मेकव्यापारच्छेद्यत्वेन सौकर्यविवक्षायां हि तथा प्रयोगः । एवं " व्युत्पत्तिः शक्ति रभ्यास इति त्रयो हेतुरि " त्यत्र फलोपधानार्थकहेतुपदार्थैकदेशे फले एकत्व विवक्षया हेतु रि त्येकवचनं । ततो दण्डचक्रादिन्यायेन परस्पर सहकारिताळाभः । एवं चैत्रोमैत्रश्च सुन्दरावित्यादौ चैत्र एकत्वस्य द्वित्वविशिष्ट सुन्दराभेद स्य चोभयो रेकत्र द्वयन्यायेनान्वयबुद्धौ तात्पर्येण प्रामाण्यम् । एकत्वद्वित्व· यो रेकविशिष्टपरवैशिष्ट्यबुद्धिरेव प्रतिषिद्ध्यते, नत्वेकत्रद्वयन्यायेन, एको द्वित्ववान् इति प्रतीतेः सार्वजनीनत्वात् । यत्रैकवचनार्थो न विवक्षितः तत्र चैत्रमैत्रौ सुन्दराविति द्वंद्वएव साधुः । अधिक मुपरिष्टात् । तस्मात् ; –

अर्थे तदेकदेशेवा संख्याभेदे विवक्षिते ।
सामानाधिकरण्येपि साधु र्वचनयो र्भिदा ॥१६॥

एवं विभक्त्यैक्यविशिष्टयोः प्रातिपदिकयोः पौर्वापर्येणैव निर्विभक्तिकयो रव्यवधानेना प्याकांक्षा भिव्यज्यते । यथा नीलो-

त्पलादिकर्मधारयान्तर्गतयोः सामानाधिकरण्यं, तथा पंकजपदादौ तेनैव वाक्यार्थमर्यादया प्रस्थापितस्य पंकजनिकर्तुः समुदायरूढ्या प्रस्थापिते पद्मे तादात्म्येनान्वया तेनैव सह तस्य सामानाधिकरण्यं । तथाहि - पंकजचरमवर्णप्रत्यक्षे स्मृताः पंकजनिडप्रत्ययाः स्वं स्मृत पंकजसमुदायश्च भासन्ते, द्वितीयक्षणे पंकजनिकर्तृ पद्मानि चत्वारि स्मार्यन्ते, तृतीयक्षणे खलेकपोतन्यायेन चतुर्थं वैशिष्ट्य मवगाहमानः पंकजनिकर्तृ पद्ममित्यन्वयबोधः, ततःपदान्तरोत्पत्ति तत्प्रत्यक्षपदार्थस्मरणादिक्रमेण पूर्वानुभवविषयपंकजनिकर्तृत्वप्रकारेण स्मृतस्य पद्मस्यान्वयबोधः, नतु केवलस्य पंकजनिकर्तुः पद्मस्य वा विशिष्टपदार्थोपस्थितेः पद्मान्वयबोधं प्रत्यसमर्थत्वात् । अत एव केवलस्य विशिष्टार्थस्य रूढ्यर्थस्य वोपस्थितये लक्षणा मेव पंकजपदे स्वीकुर्वन्ति । यत्रतु कुमुदपदादिविषयिण्येव पंकज पदस्य - कुमुदविषयिणी वा पंकजनिकर्तुः - स्थलाधिकरणत्वविष- यिणी वा पद्मस्योपस्थितिः; तत्र विनापि लक्षणां केवले योगार्थे रूढ्यर्थे वा कुमुदतादात्म्यस्य स्थलवृत्तित्वस्या न्वय इति मणिकृ न्मतसारः ।

एवं धातुप्रातिपदिकयोरपि सामानाधिकरण्यं स्तोकं पचति सुख मास्ते इत्यादौ । अत्र द्वितीयान्तस्तोकपदार्थस्य सुख पदलक्षित सुखसाधनस्य तादात्म्येन पच्याद्यर्थेन्वयात् । अत्र धा- त्वर्थफलान्वयिकर्मत्वेव "कर्तु रीप्सिततमं कर्म" ति सूत्रस्या क्षर तात्पर्याभ्या मर्थः । अन्वय श्चाश्रयत्वमिव तादात्म्यमपि । तथा च विक्लत्यनुकूलव्यापारार्थकपच्यर्थफले विक्लतौ स्तोकस्य स्फि- ग्भूसंयोगानुकूलव्यापारार्थकासधात्वर्थफले स्फिग्भूसंयोगे सुखपद

लक्षितसुखसाधनस्य तादात्म्येनान्वयविवक्षायां युज्यत एव कर्म संज्ञा कर्मणिद्वितीया चेति जरद्वैयाकरणाः । तन्न, तथा सति द्वितीयाया इव कर्मणि लकारस्यापि प्रसंगात् । आस्यते मास इतिवत् सुप्यते सुख मित्यादिप्रयोगापत्तेः । स्फिग्भुवोः कर्मणो धात्वर्थान्तर्भूतत्वेपि सुखादिकर्मणैवास्तेः सकर्मकत्वे सुख मास्यत इति भावे लकारदौर्लभ्यापत्तेः ।

नव्यास्तु धात्वर्थफलाश्रयत्वमेव कर्मत्वं, फलत्वं च व्यापार भिन्नत्वं, व्यापारत्वं चाग्रे निर्वक्ष्यते, पच्यर्थश्च विक्लित्तेरुत्पत्त्य नुकूलो व्यापारः । धात्वर्थत्वन्तु धातुजन्यप्रतीतिविषयत्वं उपादक त्वस्य संसर्गत्वेप्युत्पत्ते रव्याहतम् । धात्वर्थोत्पत्तिस्वरूपफलाभिक- रणतया विक्लित्तिरपि पाककर्म । लभ्योहि पचिधातुनैव विक्लित्तिकर्मकः पाकः । तथा च फलांश मादाय धातुना समानाधिकरणे प्राति पदिकेपि कर्मत्वानुवादिका द्वितीया । व्रैहेयमोदनं पच- तीत्यादौ व्रैहेयपदसमभिव्याहृताया इव द्वितीयाया स्तत्तद्विभक्त्यन्त पदत्वव्यंजनीयाकांक्षाद्योतकतया तादात्म्यसंसर्गकबुद्धा वुपयोगात् । अत एवाग्निहोत्रं जुहोतीत्यादौ कर्मत्वेन भावनाया मन्वितस्य जुहो त्यर्थस्य नामधेय मग्निहोत्रपदं कर्मत्वानुवादकद्वितीयान्तं, उद्भिदा य- जेत पशुकाम इत्यादौ करणतया भावनाया मन्वितस्य यज्यर्थस्य नामधेय मुद्भिदादिपदं करणत्वानुवादकतृतीयान्त मिति, भाट्टदर्शन सिद्धान्तः । यदि च व्रैहेयमोदनं पचत्य ग्निहोत्रं जुहोतीत्यादौ विशे षणपदद्वितीयाया स्तादात्म्य मर्थः तदा प्रकृतेपि तथा । यत्र स्तोकादे र्व्यापारान्वयो विवक्षित स्तत्र प्रथमैव न यजेते त्यादिवत् तृतीया करणानुवादिका । नचैव मपि स्तोकः पच्यत इति कर्मणि

3532

लकारो दुरुद्धर इति वाच्यम् , " अस्तीत्युत्पन्नस्यात्मधारण मुच्यत " इति निरुक्तस्मृत्या अस्ते रप्यात्मधारणानुकूलव्यापारार्थकतया ऽऽत्मनि धात्वर्थधारणफलवत्तया कर्मणि लकारेणा त्मा भूयत इति सर्वमतेपि प्रयोगापत्तेः ।

अथात्मनः कर्मत्वेपि धात्वर्थान्तर्भूतत्वात धातो श्च फलसमाना धिकरणव्यापारवाचित्वा दकर्मक एवास्तिः, तथाच " लः कर्मणि च भावे चाकर्मकेभ्य " इत्यत्राकर्मकेभ्यो भावविधिना कर्मणि लकारो बाध्यते, सकर्मकेभ्य एव कर्मणि लकारविधि रित्याक्षिप्यते, सकर्मकत्वं च फलाधिकरणावाचकत्वे सति स्वार्थफलव्यधिकरणव्यापार वाचकत्वं, तेन शब्दोत्पत्त्यनुकूलव्यापारवाचिनः शब्दायते रर्थे शब्दस्य, स्फिग्भूसंयोगानुकूलव्यापारवाचिन उपविशते रर्थे स्फिग्भुवो, रधस्संयोगफलकक्रियावाचिनः पतते रर्थे ऽधः पदार्थस्य, सर्वावयवाधः संयोगानुकूलव्यापारवाचिनः शयते रर्थेधः सर्वांगयो, रुदयगिरिसंयोगानुकूलव्यापारवाचिन उदेते रर्थे उदयगिरे, र्मिद्धामनसोः संयोगस्य विभागस्य चानुकूलव्यापारवाचिनो जागर्ते रर्थे निद्राते श्चार्थे मिद्धा मनसो, रवयवाना मपचयस्यान्वयस्य चानुकूले व्यापारे शक्तस्य क्षीयते र्वृद्धे श्चार्थे ऽवयवानां, प्राणे स्सह शरीरस्य संयोगविशेषं तदत्यन्तध्वंसं प्रति चानुकूलव्यापारे शक्तस्य जीवते र्म्रियते श्चार्थे प्राणशरीरयो श्च, तत्तद्धातूनां; भवते रर्थे व्यापारे तदर्थफलस्यात्मधारणस्य, लज्जतेः स्वगोपनस्य, रमतेः सुखस्य, सामानाधिकरण्यात - तेषां; गतिनिवृत्तिं प्रवृत्तिं मिच्छां ध्वंसं रूपविशेषं चाभिदधतां तिष्ठति यतति रोचति नश्यति दीव्यतीनां स्वार्थफलाभावाच्च न सकर्मकत्वप्रसंगः । फलार्थं मुख्यधात्वर्थव्यापारे येन केनापि संसर्गेणा न्वितधात्वर्थत्वम् , तेन विषयताविशिष्टज्ञाने जानाते रुद्देश्यताविशिष्टरागे इच्छते रुत्पत्त्यनुकूलयत्ने करोते र्बाध्यत्वविशिष्टे द्वेषे द्विषे र्लौकिकविषयताविशिष्टेषु प्रत्यक्षघ्राणजरासनचाक्षुषत्वाच्च

श्रावणसाक्षात्कारेषु जिघ्रति रसयति पश्यति स्पृशति शृणोति साक्षात्करोतीनां विधेयताविशिष्टयो रनुमितितर्कयो रनुमात्यापाद्यत्योः स कर्मकत्वं निराबाधम् । अत एव सुखत्व मिच्छति घटत्वं करोति दुःखत्वं द्वेष्टि ज्ञानोपनीतं गगनं साक्षात्करोति जिघ्रति रसयति पश्यति शृणोति वह्नित्व मनुमिनुते वह्न्यभावत्व मापादयति इति न प्रयोगः । यस्तु सुखवन्त मात्मान मिच्छतीति प्रयोगः स चरुस्थालीं पचतीति प्रयोगेण तुल्ययोगक्षेमः । कर्मणि लकारोप्येवम् । तेन "दधानो निध्वान मश्रूयत पांचजन्य" इति माघ उपपद्यते । येन च व्यापारेण व्यधिकरणफलवता धात्वनभिहितेन कर्मणा सकर्मको धातु स्तत्रैव कर्मणिलकारो विधीयते, अन्यथा प्राण वियोगफलक व्यापारार्थक हन्ते र्वियोगस्य द्विनिष्ठत्वेनैकस्मि न्नधिकरणे धात्वभिहितेपि अधिकरणान्तराकांक्षाया विच्छेदात् चैत्रोहन्यतइतिव त्प्राणाहन्यन्तइति प्रयोगःस्यात् । प्रकृते भूमभृति देशकालभावगन्तव्याध्वभिः सकर्मकोपि फलाधिकरणेनात्मना नसकर्मक इति कथं तत्र कर्मणिलकारः प्रसज्यते, येनात्माभूयतइति प्रयोगा पादनं सम्भवतीति चेत् ? सत्यं, एवं फलस्य कर्मत्वेपि धातु नाभिधानात् तेन सकर्मकत्वाभावात् तत्र लकारः कथं प्रसज्यते? येन स्तोकः पच्यत इत्यादि प्रसज्यते । द्वितीयातु न तेन कर्मणा सकर्मकत्वमपेक्षते, अतएव तारंशब्दायते दीर्घमस्तीत्यादौ द्वितीया धात्वन्तर्भूतकर्मणः शब्दात्मादे र्विशेषणकर्मानुवादिका दृश्यते ।

सा चेयं द्वितीया विशेष्यनिघ्न प्रातिपदिक समभिव्याहृताचे न्नियतनपुंसक लिंगाभिव्यंजिका, सामान्येनपुंसकस्यैव साधुत्वात् । नियतलिंग समभिव्याहृताचेत् लिंगत्यागानुशासनाभावात् तल्लिंगाभिव्यञ्जिकैव; अतएवादि पचातिद्रुतिहेतुं पचतीत्यादयः प्रयोगाः, आद्यभिन्नां द्रुति हेत्वभिन्नां विक्लृतिं बोधयन्तो दृश्यन्त इति क्रियान्वयि फलविशेषणान

कर्मानुवादिका विक्लत्तिव्यापारयोः संसर्गीभूतस्य कर्मत्वस्य प्रापिकावा द्वितीया; इति शाब्दिकाः प्राहुः । तच्चिन्त्यं, विशेषणसुपां विशेष्यान्वयाकांक्षाव्यंजकत्वेन विशेषणंविशेष्येण बहुल मिति सार्वभक्तिकस्य विशेषणस्य कर्मधारयानुशासनसिद्धत्वेन साधुत्वात्, विनानुशासनं क्रियाविशेषणद्वितीयाया असम्भवात । नहि द्वितीया व्यंजितैव क्रिया विशेणस्यैव धातुना सहाकांक्षा, ज्योतिष्टोमेन यजेत वल्गितं गच्छति इत्यादौ तृतीयाप्रथमयोरपि दर्शनात् । विना विशेषविधिं प्राति पदिकार्थमात्रे प्रथमाद्युगात्, फलव्यापारयोः कर्मकर्मिभावस्य संसर्ग मर्यादयैव भानलाभे द्वितीयया तदनुवादस्या नपेक्षणा च्च । तस्मात् फलविशेषणाना मनुशासनसिद्धैवोपपदद्वितीया न कारकार्थिकेति न स्तोकः पच्यत इति कर्मणि लकारः । अनुशासनं च " उभ सर्वत सोः कार्या धि गुपर्यादिषु क्रिया । द्वितीयाम्रेडिता तेषु ततोन्यत्रापि दृश्यत " इति, उभयतो ग्रामं सर्वतोग्रामम् धिक् पिशुनं उपर्युपरि पयोधरानधोधोगगनं मेघा इति उभयादा वन्यत्रापि क्वचित् द्वितीया स्या दित्यर्थकम् – फले व्यापारे वा धात्वर्थे तादा त्म्येनान्वितार्थकस्य प्रातिपदिकस्य द्वितीयां विधत्ते, नतु व्यापार विशेषणस्य प्रथमान्तत्वं युक्तम्, फलहेतुः पचति चैत्र इति प्रयो गापत्ते रिति वस्तुगतिः ।

तस्मात्–

प्रायेण क्लीबलिंगं यद्धात्वर्थस्य विशेषणम् ।
आनुशासनिकी तत्र द्वितीयान्यत्र दर्शनात् ॥ २१ ॥

एवं विभक्त्या सह प्रातिपदिकस्य सामानाधिकरण्यं । द्रोणो व्रीहि रेकं ब्रह्म द्वे चक्षुषी त्रयोग्नय इत्यादौ प्रादेशः कुशो रत्निः कुण्ड मित्यादौ च गुरुत्वत्वेन संख्यात्वेन परिमाणत्वेन चावच्छिन्न मभिदधत्याः प्रथमाया अर्थे द्रोणादे र्गुणविशेष मभिदधो ऽर्थस्तादा

स्येनान्वेति । प्रथमार्थस्तु सौत्रपरिमाणपदस्य तंत्रेण गुरुत्वस्याप्युप स्थापकत्वात् गुरुत्वादिभेदेन व्रीह्यादौ; नहि द्रोणादे रर्थः तथान्वेतु मर्हति, प्रातिपदिकयो र्भेदान्वयस्या व्युत्पन्नत्वात् ।

एवमाख्यातेन कर्तृकर्माभिधायिना प्रथमान्त चैत्रोदनादेः सामानाधिकरण्यं । अत एव " युष्मद्यसमानाधिकरणे स्थानिन्यपिमध्यम " इति सौत्रोऽव्यवहारइति शाब्दिकाः । तदुभयं चिन्त्यं ।

एवं स्वरूपार्थकतलः कनश्च तद्धितस्यार्थे देवस्ययावस्यचान्वयात् देवतायावक इत्यादौ तद्धितेनापि प्रातिपदिकस्य सामानाधिकरण्यं । स्वरूपत्वं नाम गगनाभावादिरखण्डो धर्म एतादृश प्रत्ययानां प्रवृत्तिनिमित्तं, न पुनरनर्थकएवतलादिः, आगम व्यावृत्तस्य प्रत्ययत्वस्य सार्थकत्व घटितत्वादिति वदन्ति ।

अन्येतु प्रातिपदिकयोरव्यवधानमेव सामानाधिकरण्येतन्त्रं । यथा नीलोत्पल द्विगाग्र्यादौ । विभक्त्या व्यवहितयोस्तु प्रातिपदिकयो विभक्त्यर्थद्वारकएवान्वयः । नीलो घट इत्यादौ नीलपद समभिव्याहृतविभक्तेरर्थे घटान्वय्यभेदे नीलादेरन्वयः । नचाभेदार्थे विभक्ते रनुशासन दौर्लभ्यं शंक्यं, " प्रातिपदिकार्थ लिंगपरिमाणवचनमात्रे प्रथमे " ति सूत्रस्य प्रथमायांकण्ठतो विभक्त्यन्तरे मात्रग्रहणसामर्थ्यात् प्रातिपदिकार्थ वाचकत्व व्यवस्थापकत्वात् । प्रातिपदिकार्थश्च येन रूपेण प्रातिपदिकात् नोपस्थित स्तद्रूपावच्छिन्नमेव विभक्तिर्बोधयेत, अन्यथैकधर्मावच्छिन्नयोरन्वये निराकांक्षत्व प्रसंगात । तच्च रूपं स्वरूपभेदाभावत्वं । प्रातिपदिकार्थ व्यक्ति स्वरूपभेदोहि निरवच्छिन्न सत्त द्व्यक्तिवृत्ति प्रतियोगिताकः, तदभावश्च प्रतियोगिस्वरूप एव । तत्रैवान्योन्याभावस्या भावः प्रतियोगिविशेषणधर्मस्वरूपो यत्र प्रतियोग्यननुगतोनुगतश्च प्रतियोगितावच्छेदको धर्मइति निपुणतर मुपपादितं बौद्धाधिकारविवरणे, वक्ष्यते चोपरिष्टात । घटाभावे घटाभाव

व त्स्वरूपे स्वरूपभेदाभावस्याधाराधेयभावा भ्युपगमे आत्माश्रयो यथा नदोष स्तथा तत्रैवानुसन्धेयं । अन्यथा प्रतियोगितावच्छेदक स्वरूप न्योन्याभावस्याभावेन्योन्याभावभेदो धिकरणस्वरूपः कथमाधाराधेय भावेन वर्तते । अन्योन्याभावस्याभावभेदे धिकरण भेदाभ्युपगमे अनवस्था प्रसंगात् ।

ननु तथापि विशेषणविभक्ते र्भेदत्वावच्छिन्न प्रतियोगिताका भावत्वं भेदप्रतियोगिकाभावत्वं नीलभेदत्वावच्छिन्न प्रतियोगिताका भावत्वं वा शक्यतावच्छेदकम् ? आद्ये अप्रसिद्धेः । द्वितीये पीते नीलो घटइति प्रयोगप्रसंगः, नीलभेदगगनोभयाभावादेः पीतेपि सत्वात् । तृतीये शक्त्यानन्त्यं, नीलपटव्यक्तितात्पर्येण नीलोघटइति वाक्यस्य प्रामाण्यप्रसंगश्च, इति चेन्न ;- भेदे ऽ त्यन्ताभावे च विभक्तेः पृथक् शक्ति स्वीकारात् । नीलो घट इत्यत्र नीलत्वोपलक्षिता नीलव्यक्तिर्भेदे, भेदस्तु तत्त द्व्यक्तिस्वरूपावच्छिन्नया प्रतियोगितया अभावेन्वेती त्यनुपपत्ति विरहात् । प्रतियोगितावच्छेदक विशेषणतया भासमानो धर्मः प्रतियोगितावच्छेदकत्वा वच्छेदकतयापि संसर्गतया नियमतो गृह्यतइति पुनरप्रामाणिकम् । भवतु वा उभयावृत्तित्वोपलक्षित धर्मा वच्छिन्न प्रतियोगिताकान्योन्याभावे ऽत्यन्ताभावेच खण्डशः शक्तिः, स्मरणन्तु सर्वनामन्यायेनो पलक्षण मुभयावृत्तित्वांश मपहाय याव्यक्तिः प्रातिपदिकेनोपस्थापिता स्वरूपत स्तद्व्यक्तित्वावच्छिन्न प्रतियोगिता कत्वेनान्योन्याभाव मवगाहते, अत्यन्ताभाव विशेषणतयानुभावयति चेति नीलपटस्य प्रातिपदिकेन स्मरणे नीलो घटइति बुद्धे रप्रामाण्य मुपपद्यते । तादृशे ऽ भेदेविशेषणतया नीलाद्यन्विते घटस्य विशेष्यतया अन्वयस्वीकारात् । प्रकारतया च प्रतियोगितावच्छेदकभाने नप्रति-योगितावच्छेदक विशेषणावच्छिन्नत्व भाननियमः, शुद्धवह्नित्वावच्छिन्न प्रतियोगिताकाभावस्य साध्यतावच्छेदकावच्छिन्न व्यापकतावच्छेदक धर्मावच्छिन्न प्रतियोगिताकत्वोल्लेख दर्शनात् । अतोनोभयावृत्तित्वोप-

लक्षिते तद्व्यक्तित्वे स्वरूपे भेदप्रतियोगितावच्छेदकत्व ग्रहणासम्भवात् विभक्ति शक्तिग्रहानुपपत्तिः ।

नन्वेव मभेदे विभक्ते र्वृत्त्यादिकल्पनापेक्षया लाघवात् निरुक्ताभेद संसर्गकान्वयबुद्धि रभ्युपेतु मुचिता, " प्रातिपदिकार्थमात्रे प्रथमे " ति सूत्रे मात्रपदा त्प्रातिपदि कार्थातिरिक्तानर्थकत्व मात्रं विवक्षितं, नतु प्रातिपदिकाद्यर्थार्थकत्वमपि, अन्यलभ्ये शक्तेर कल्पनादिति चेन्न ; – अभेदसंसर्गेण प्रातिपदिकार्थयो रन्वयांगीकारे हि स्वन्तनीलपदेन सह स्वन्तघटपदस्य पौर्वापर्यस्वरूपाया स्तद्व्यंग्याया वा आकांक्षायाः प्रयोजकत्वस्वीकारे गौरवम्, अधिकवर्णघटितत्वात् । अभेदस्य पदार्थतावादे तु नीलपदस्य सुनासह नीलप्रकारका भेदविशेष्यकबुद्धौ, तेन सुनासह स्वन्तघटपदस्याभेदप्रकारक घटविशेष्यकबुद्धा वाकांक्षाद्वयस्य प्रयोजकत्वस्वीकारे लाघवम् , नीलघटपदयो रेकत्राकांक्षाया मप्रवेशेन तयो र्विशेषण विशेष्यभावव्यत्यासप्रयुक्ताकांक्षाधीकारणताभेदाभावात् । नचैवं घटो नील इति वाक्यादिव नीलो घट इति वाक्यादपि घट मुद्दिश्य नीलाभेद विधेयकस्य वाक्यार्थबोधस्य प्रसंगेन प्रथमान्तघटपदोत्तरत्वविशिष्ट तथा विधनीलपदत्वव्यंग्याया आकांक्षाया स्तथाविधबुद्धौ प्रयोजकत्वे ऽन्ये क्लाघवावकाश इति देश्यं; नीलप्रकारकाभेदविशेष्यकबुद्धौ नीलोत्तरसुत्वाभिव्यंग्याकांक्षाया अभेदविधेयक घटविशेष्यबुद्धौ सुपूर्वस्वन्त घटपदत्व व्यंग्याकांक्षायाश्च प्रयोजकत्वद्वयस्वीकारेणैव चारितार्थ्यात् । यदि च नीलो घटः पटः शुक्ल इत्यत्राप्यभेदे नीलान्वयस्य घटे चाभेदान्वयस्य प्रयोजिका नीलोत्तरसुत्वेन सुपूर्वस्वन्तघटपदत्वेन चाभिव्यंग्याकांक्षा वर्तत एवेति घट मुद्दिश्य नीलाभेदविधि र्दुर्वारइति सर्वमतेपि प्रथमान्त विशेषणविशेष्ययो रेव पौर्वापर्याभिव्यंग्याकांक्षेति विभाव्यते, तदा प्यभेदस्य पदार्थतया प्रकारत्व मेव युज्यते; न तत्संसर्गत्वं, तथा सतिहि क्षुद्रुपद्रन्तुं शक्यं शिखी विनष्टः शरीरी हृष्टः सुरभिचन्दन माघ्रातं निष्व

नतु पांचजन्यः श्रुतो वह्निमत्पर्वतो नुमित इत्यादौ उपहननतदर्थशक्ति भाव्यस्य नाशप्रतियोगिनो दर्शनस्या घ्राणनस्य श्रावणस्य लौकिक विषयस्यानुमितिविधेयस्य च क्षुधि शिखिनि शरीरिणि जीवे चन्दने पर्वते च तादात्म्यबाधा दनन्वयापत्तेः । स्वंतादात्म्योपहननकर्मत्वा दिसंसर्गेणा न्वयस्वीकारे सामानाधिकरण्याभावा देकविभक्तिकत्वा नुविधानानुपपत्तेः । पदार्थभूतस्तु शक्यविनष्टदृष्टाघ्रातश्रुतानुमिताना मभेदः स्वाश्रयोपहननशिखाशरीरसौरभनिध्वानवह्निद्वारा क्षुदादाव न्वय मुपलभमानो न योग्यतां नवा सामानाधिकरण्यं व्यावहति । येन केनापि संसर्गेणैकतरपदार्थाभेदविशिष्टस्या परपदार्थस्य बोध कयो रेव पदयोः समानाधिकरणत्वात् कर्मधारयावयवयोः सामा नाधिकरण्यव्यवहारो गौणः, अत एव " आप्रगृह्य " इत्यत्र प्रथमो पात्तः प्रगृह्याभेदो निपातार्थे स्वरूपे प्यन्वेति । अभेदेन तयो रन्वय बोधोपगमे कर्मधारयस्यापि प्रसंगात् । नचाव्ययीभावविधिनापवादः, समीपसमृद्ध्यादिपरिगणितातिरिक्ते स्वरूपार्थे वर्तमानस्य आ इति निपातस्या व्ययीभावविध्यविषयत्वात् । "आङ् मर्यादाभिविध्योः" रव्ययीभावविधानात् ।

एवं स्तोकं पचतीत्यादौ द्वितीयार्थो ऽभेदः, मात्रपदसामर्थ्येन प्रातिपदिकार्थे द्वितीयाया अपि साधुत्वात् । अन्यथा क्रियाविशे· षणद्वितीयाया अकारकविभक्तित्वे स्तोकं नम्रेति विग्रहे स्तोक नम्रेति तत्पुरुषानुपपत्तेः । विशेषविधिं विना ऽकारकद्वितीयया समासस्यासाधुत्वात् । नचायं कर्मधारयः, विरुद्धयोः कर्मधारयायोगात् ।

एवं द्रोणो व्रीहि रित्यादौ द्रोणादिपदं द्रोणपरिमिते वा- चकं लाक्षणिकंवा । प्रथमातु प्रातिपदिकार्थ मभेद मभिधत्ते, नतु परिमाणं, प्रमाणाभावात्; अन्यलभ्यत्वेर्थे सूत्रस्य प्रत्याख्येयत्वात् । अन्यथा द्रोणेन क्रीणातीत्यादौ करणत्वस्या नन्वयापत्तेः । प्रातिप दिकार्थे परिमाणे तस्यबाधात् । द्रव्यस्यचा पदार्थत्वात् ।

एतेन सुपां वचनवाचकतापि प्रत्युक्ता । एकवचनत्वादिना तत्प्रतिपाद्या संख्याभेदेनैव प्रातिपदिकार्थेन्वेति । तद्धितप्रत्ययोन्वेते स्वादावनर्थकएवेति कथं तस्य प्रकृतिसामानाधिकरण्यम् । यथाचानर्थकानामपि सार्थकजातीयत्वेन प्रत्ययत्वं, तथा स्पष्टमुपरिष्टात् । अत एव देवपर्यायदेवतागणन मप्युपपद्यतइति ।

समासांतर्भूतस्य प्रातिपदिकस्यैव प्रातिपदिकेन सामानाधिकरण्यं, नतु शब्दान्तरस्य; प्रातिपदिकार्थे वर्तमानविभक्तिरपि भेदाभावत्वविशिष्टे स्वार्थे प्रकृत्यर्थस्या धाराधेय भावमेवावगाहते, नाभेदम्, अभिन्नयो रप्यभावत्वेनात्माश्रयस्याकरे सुदृस्तितत्वादिति माहुः; तदग्रे चिन्तयिष्यामः ।

इति श्री महामहोपाध्याय गोकुलनाथ शर्म प्रणीते
श्री पदवाक्यरत्नाकरे

॥ अभेदान्वयप्रकरणम् ॥

---

श्रीरस्तु ।

नाम्नासुप स्तद्धितानि निपाताःक्यङ्क्यजादयः ।
भेदान्वये व्यपेक्ष्यन्ते तिङ्नाम्नेति तु केचन ॥ १ ॥

भेदेन नामार्थप्रकारकान्वयबुद्धा वुपयोगिनी सुपामाकांक्षा, सुपोहि स्वार्थसम्बोध्यत्व कर्मत्व करणत्व सम्प्रदानत्वा पादानत्व सम्बन्धाधिकरणत्वादिषु प्रातिपदिकार्थसम्बन्धं बोधयन्तो नामभि रव्यवहितो त्तरत्वेनापेक्ष्यन्ते । तथा तद्धितान्यण्वहुजादीनि स्वार्थे पत्यकल्पादौ प्रातिपदिकार्थस्य भेदनान्वयबुद्धिमादधानानि प्रातिपादिकैः क्वचित्पूर्वत्वेन क्वचिदुत्तरत्वेनाकांक्ष्यन्ते । एवं निपाता नञिवादयः स्वार्थेऽभावसादृश्यादौ प्रातिपदिकार्थस्य भेदान्वयं बोधयन्ति । तथा क्यङ्क्यजादयो धात्वंशप्रत्ययास्वार्थे प्रातिपदिकार्थस्य भेदान्वयं बोधयन्तः प्रातिपदिकै र्व्यपेक्ष्यन्ते ।

तथाहि-पुत्रीयति गव्यति नाव्यति दिव्यती त्यादौ पुत्रगोनौदिवां क्यजर्थे इच्छायां प्रकृत्यर्थतावच्छेदकावच्छिन्नया स्वत्वोद्देश्यता निरूपितविषयतया संसर्गेणान्वयः । पुत्रः सम्भव त्वित्येवमाकारके च्छायाः स्वत्ववृत्त्युद्देश्यतयाहि निरूप्यते पुत्रत्वावच्छिन्ना विशेष्यता। स्वत्ववृत्तिविषयताच समभिव्याहारलभ्यतत्तत्पुरुषनिष्ठ तत्तद्व्यक्तित्वाव च्छिन्नप्रकारतानिरूपितैव ग्राह्या, तेन भ्रातुः पुत्रमिच्छतीत्यर्थे भ्रातुः पुत्रीयतीति न प्रयोगः । अतएव " सुपआत्मनः क्यच् " [३-१-८] इति सूत्रे आत्मन इति संसर्गविशेषाभिप्रायकमेव । आत्मनः पुत्रीयतीत्यादौ आत्मनइति संसर्गलभ्यार्थानुवादः । आत्मनइति पदे पुत्रादिसाकांक्षे प्रयुज्यमाने वा क्यच् भवतीत्यनुशासनार्थं इत्यपि केचित् । पुत्रपितरि गोस्वामिनि चात्मनि पुत्रगोपदयो र्लक्षणा, तथाच पुत्रपितरं गोस्वामिन मात्मान मिच्छतीति पुत्रीयति गव्यतीत्यादे रर्थं इत्यपरे ।

अशनायति उदन्यति धनायति इत्यादौ बुभुक्षा पिपासालिप्सासु क्यजर्थेषु कर्मद्रव्यस्याशनस्य उदकस्य धनस्यचान्वयः । "अशनायोदन्या धनाया बुभुक्षा पिपासा गर्द्धेषु"[७-४-३४]इति सूत्रे बुभुक्षात्वादेरेव क्यच्प्रवृत्तिनिमित्तत्वाभात । भोजनसमानकर्तृकतदिच्छास्वरूप बुभुक्षादिपर्यायाणां क्यच्सामर्थ्ये त्वधिकरणभोजनादे स्त्वयाऽसम्भवात् परस्याशनायति इत्यादिको न प्रयोगः ।

क्षीरस्यति बालो लवणस्यति उष्ट्रो दधिस्यति दध्यस्यतिवा नरो मधुस्यति मध्वस्यति वा भ्रमर इत्यादौ सुगसुगागमोपसन्दानितस्य क्यचोर्थे धात्वादेच्छास्वरूपलालसायां क्षीरादेः कर्मतयान्वयः ।

अश्वस्यति वडवा वृषस्यति गौ रित्यादौ मैथुनेच्छायां क्यचः शक्तिः, मैथुन कर्तृतया ऽश्वस्ये च्छायां प्रकारतया मैथुनस्यान्वयः । दश्वकर्तृकमैथुनप्रकारकेच्छावती वडवेत्याद्यन्वयबोधेन फलतोऽश्वमैथुनं करोत्वितीच्छायालाभः । मैथुनस्येच्छान्वये मैथुनत्वावच्छिन्नप्रकारतायाएव संसर्गत्वात्, मैथुनेऽश्वकर्तृकत्वस्योपरंजकत्वाभावात् ।

यत्तु मैथुनप्रकारकेच्छायां कर्मतया अश्वस्यान्वयइति । तन्न, तथासति धात्वर्थान्तर्भूतकर्मकत्वेनशब्दायतेरिवा श्वस्यतेर प्यकर्मकत्वा पत्तेः । तथाच " रविरथहयानश्वस्यन्ति ध्रुवं बडवा वळप्रतिबलवला वस्थायिन्य स्समीक्ष्यसमीपगान् । निजपरिबृढं गाढप्रेमारथांगविहंगमी स्मरशरपराभूतस्वान्तावृषस्यति सम्प्रति (१९-१७)" इति नैषधचरितप्रयोगोपि व्याहन्येत । यदि कर्तृतया मैथुनेश्वस्य मैथुनस्य च कर्मतया इच्छायामन्वयः, तदाकर्मणोनभिधानात युज्यतएव हयेभ्योद्वितियाविभक्तिः । स्वकर्तव्यत्वेन पाकमिच्छति स्वेनपाकं चिकीर्षति इतिवत् । अश्वस्यति वृषस्यतिधातू कामिरूढौ । अतएव " वृषस्यन्तीतु कामुकी " इत्यमरः कामुकीपर्याये वृषस्यन्ती मगणयत् । जारंवृषस्यति बन्धकीतिच प्राचः प्रयुञ्जत इत्यपि वदन्ति ।

एतेन क्यच्पर्यायो यशस्काम्यति सर्पिष्काम्यति किंकाम्यति स्वःकाम्यतीत्यादौ काम्यच्प्रत्ययोपि व्याख्यातः । मान्तादव्ययाच्च क्यचो निषेधेपि काम्यच स्तदभावात, किम्यति स्वर्यतीतिवत् किं काम्यति स्वः काम्यतीति प्रयोगे प्यसाधुत्वायोगात ।

तथा पुत्रीयति पौरं निशान्तीयति रणे इत्यादावाचारसदृशाचारस्य क्यजर्थस्यैकदेशे प्रथमाचारे पुत्रादेः कर्मतया निशान्तादे रधिकरणतयान्वयः । प्रथमाचारस्य कर्मण्यधिकरणे चाभिहितेपि द्वितीयाचारकर्मणोधिकरणस्य चानभिधानात पौरं रणेच द्वितीया सप्तम्यौ । आचारश्चात्र संवर्धनविहारादिः सर्वनामन्यायेनशक्यः, तेन पुत्रकर्मकसंवर्धनसदृश पौरकर्मकसंवर्धनानुकूलाया निशान्ताधिकरणक विहारसदृशरणाधिकरणकविहारानुकूलाया नरपतिकर्तृकभावनाया लाभः ।

रसिकास्तु –"क्यच आचारः संवर्धनत्वविहारत्वादिप्रातिस्विकधर्मावच्छिन्न एव सर्वनामन्यायेन शक्यः । तस्य च व्युत्पत्तिवैचित्र्यात सादृश्यसंसर्गेण तद्धर्मावच्छिन्न एवान्वयः । अत एव पुत्रीयति शत्रु

मित्यादौ शत्रुकर्मकेताडने पुत्रकर्मस्यसंवर्धनस्य च नसादृश्येनान्वयः, विभिन्नरूपावच्छीद्वयो रन्वये क्यचोसामर्थ्यात । तद्धर्मस्वरूपमेवचात्र सादृश्यम् । अत एव " वादे लोपे समासे वा कर्माधारक्यचि क्यङि । कर्मकर्त्रोर्णमुल्येत द्विलोपेक्विप् समासगा " इति कारिकया निर्दिष्टा सादृश्यवाचकलुप्तोपमा " पौरं सुतीयति मुहु स्समरांगणे सा-वन्तःपुरीयती " त्यत्र उदाहृता । अन्यथा क्यचः सादृश्यवाचकत्वे तल्लोपोदाहरण मसंगतं भवेत्।" इत्याहुः

वस्तुतस्तु- पुत्रपदं पुत्रकर्मके निशान्तपदं निशान्ताधिकरणेचा-चारे निरूढलाक्षणिकं, तदर्थ उपमानोपमेयभावसंसर्गेण क्यजर्थआ-चारेन्वेति । अत एव ("उपमानादाचारे " ३-१-१०)"अधिकरणाच्चेति वक्तव्य " मित्यनुशासने क्यच्प्रकृते रुपमानपदत्वं निरूढलक्षणालभ्याचार विशेषणकर्माधिकरणार्थकत्वं क्यचश्चाचारमात्रबोधकत्व मुक्तं संग-च्छते । सम्भवतिच क्यङ्क्यचो रैकरूप्येण यत्रैवचाचारे शक्तिः । क्यच्प्रकृते राचारस्य तत्कर्मक तदधिकरणकान्यतरस्यैव प्रतिपादने सामर्थ्यं, अनुशासनस्य नियमार्थत्वात ।

एतेन वह्निकर्तृकाचारसदृशाचारकर्तृत्व परिघकरणकाचार सदृशबाहुकरणकाचार कर्तृत्वादितात्पर्येण प्रयुक्ताः " मार्तण्डकर निष्पिष्टं रजो वह्निकणीयति । असौसमरदुर्धर्षो बाहुनापरिघीयति " "दैवतीयति विप्रेभ्यः क्रतुकर्मणिदीक्षितः । प्रहर्तुमुद्यतः शत्रुंगिरिरेष क्षुपीयती " ति नसाधवः, किन्तु रजोवह्निकण इवतपति- परिघेणवबाहुना प्रहरति, दैवतेभ्यइव ब्राह्मणेभ्योददाति, क्षुपादिवगिरेः पततीत्यादि वाक्यान्येव प्रयोक्तुं युज्यन्ते ।

हंसीयति कीर्ति रित्यादौ हंसकर्मकाचारएवहंसपदार्थः, क्यजर्थाचारकर्मबोधकस्यात्मानमिति पदस्याध्याहारेण हंसमिवात्मान माचरतीति वाक्यार्थोलभ्यते । अत एव " क्यचिवाद्युपमेयासा "

इति कारिकोपन्यस्तायां वाचकोपमेयलुप्तोपमायाः " पुरतोहरिणाक्षीणामेष पुष्पायुधीयती " ति काव्यप्रकाशोक्त मुदाहरणं संगच्छते ।

यत्तु- आत्मधारणं भवतेरर्थः क्रियात्वेनाचारइति व्यवह्रियते, तस्य च धात्वर्थान्तर्भूत आत्माकर्म, तद्विशेषणस्यापि हि कर्मानुवादिका द्वितीया " स्तिमितमास्ते नस्पन्दते " इत्यादौ, तथा च पुष्पायुधाभिन्नात्मधारणं पुष्पायुधभावः क्यच्प्रकृतेरर्थः, क्यचोपि भावान्तरम् , तयोः सादृश्यं संसर्गः, तथा च पुष्पायुधाभिन्नात्मधारण सदृशात्मधारणवति राजनि राजापुष्पायुधीयतीत्य नेन बोद्धयमाने आत्मानमिति पदं नापेक्ष्यते, धातुनोक्तार्थस्यपदस्य प्रयोगानर्हत्वात, यथा च धात्वर्थान्तर्भूते कर्मणि न कर्माख्यातप्रसक्तिः धातोरकर्मकत्वात् तथा प्रतिपादित मथस्ता दिति । तन्न; भवत्यर्थस्य कर्तरि कर्मसंज्ञाया अप्रवृत्तेः । "अपादान सम्प्रदानकरणाधारकर्मणां कर्तुश्चोभय सम्प्राप्तौ परमेवविधीयते " इति न्यायात् । अन्यथा पुष्पायुधम्भवति इति प्रयोगप्रसंगात् । तारं शब्दायतइत्यत्र तारशब्दस्य तु कर्मसंज्ञाभवति, अपवादकाभावात् । अतएव श्येनइव भवतीत्यर्थे भवत्यर्थस्वरूप आचारे क्यङ् प्रत्ययएव साधुः, नहि श्येनायते इत्यत्र सकर्मकः कश्चिदाचारः क्यङाबोध्यते । अन्यथा श्येनइव गृह्णाति पतत्रिणइत्यर्थे श्येनायते पतत्रिण इत्यापत्तेः ।

ओजायते अप्सरायते विद्वायते विद्वस्यतेचे त्यादौ क्यङर्थे कर्मकाचारे ऽओजोभावो प्सरोभावो विद्वद्भावश्च सादृश्येन प्रतीयते, " कर्तुः क्यङ् सलोपश्च" [३-१-११]इति सूत्रे तत्कर्तृकाचारलक्षकादुपमानबोधकात परतःक्यङ् तस्मिन् परेप्रकृतेः सान्तप्रातिपदिकस्य सस्य लोपो व्यवस्थितोवैकल्पिकइति व्याख्यानवशेन सलोपादेः साधुतोपगमात । यदाहुः - " सकारे क्यङ्सन्नियोगशिष्टोलोपोऽव्यवस्थितः । ओजसोप्सरसो नित्यमन्येषान्तु विभाषया " इति । हरिणीवाचरति

हरितायते, एनीवाचरति एतायते, रोहिणीवाचरति रोहितायते, इत्यादौ क्यङ्मानिनोःपरयोः स्त्रियाः पुंवद्भावे, स्त्रीप्रत्ययसन्नियोगेन "वर्णा दनुदात्ता त्तोपधात्तो न" इति शिष्टस्यनत्वस्यापि व्यपायात व्यवस्थिताएव हरितैतरोहितशब्दादयः श्रूयन्ते । हरितः पलाशः, एतः-श्वेतः, अय एताः श्वेताभागायस्या स्तादृश्या शलल्याश्वाविल्लोम्नेति वक्तव्ये "त्रेण्याशलल्याविनीय त्रीणि कुशतरणान्यन्तर्दधाती" ति गृह्यसूत्रदर्शनात् । "रोहितोलोहितो रक्त" इतिकोशात । वर्णवाचिनांहरितैतलोहितशब्दानामनुदात्तोपधत्वं "वर्णानांतणतिनितांताना" मिति फिट्सूत्रेण सिद्धमि त्यनुदात्तोपधवर्णवाचिभ्यो ङीपि सिद्धस्य रोहिणी शब्दस्य गुणवृत्त्यायोगरूढ्यावा नक्षत्रविशेषप्रवृत्ति र्यदा तदा रोहितायते इत्येव । यदितु हन्तेः कर्मणीव रुहेः कर्तर्यपीनन् प्रत्ययेनौणादिकेन हरिण इवरोहिणोपि प्रकृत्यन्तरं,तदाहरिणायतइतिव द्रोहिणायत इत्येव प्रमाणं ।

सपत्नी शब्द श्चतुर्विधः, शार्ङ्गरवादि गणपठितात शत्रौ रूढात् सपत्नशब्दादुत्पन्नेन ङीना निष्पन्न एकोभाषितपुंस्कः, तस्मात क्यङितन्निमित्तके पुंवद्भावे सपत्नीवाचरति सपत्नायते । द्वितीयस्तु समानःपतिर्यस्या इतिविग्रहे निष्पन्नस्य बहुव्रीहेः सपति शब्दस्य "नित्यं सपत्न्यादिषु" इत्यनेनानुशासनेननादेशे ऋन्नेभ्योङीपिकृते नित्यस्त्रीलिंगः। पतिशब्दस्य वोढृवाचकतया स्त्रीभिन्नेतद्घटितबहुव्रीहेरप्रसारात । एतादृशस्थलेनैकसंसृष्टः समानपदार्थः । संसर्गस्तु पदान्तरोपस्थितएव समानपदेनोपस्थाप्यते । समानोयमावयोर्देशः अधिकरणं भ्रातावित्यादौ समानपदेनानेकरूपितानां निवासत्वाधिकरणत्व भ्रातृत्वादीनां प्रतिपादनात् । समानः पतिरित्यत्रा प्यनेकवोढापतिः प्रतीयते तत्परिणीताचबहुव्रीहेः, स्त्रीत्वंङीपोर्थ इत्यनेकस्त्रीवोढृभिन्नवोढृपरिणीता स्त्री सपत्नीसमुदायार्थः । रुक्मिणी सत्यभामायाःसपत्नीत्यत्र पतिपदार्थे सत्यभामापरिणेतृत्व रूपषष्ठ्यन्तार्थस्यान्वयइति रुक्मिणी रुक्मिण्याः सपत्नीति नप्रयोगः । बहुव्रीहिणैवोक्तार्थत्वात सीतायान्तु न प्रसज्यतएव सपत्नीपदप्रयोगः । अत्र

सपत्नीवाचरतीति सपत्नीयते, भाषितपुंस्कानामेव पुंवद्भाव विधि प्रसरात् ।

तृतीयस्तु स्वामिपर्यायेण पतिशब्देन घटितबहुव्रीहौ " विभाषासपूर्वस्य" इत्यनेन गृहपतिर्गृहपत्नीत्यादाविव सोपपदस्य पत्युर्नादेशोऽस्ति सिद्धोभाषितपुंस्कः, सपतिर्दासइति प्रयोगात । ततः क्यङि सपत्नीयतइति प्रयोगः, नादेशस्य ह्यधिकारिविषयत्वेन पुंवद्भावे तदप्रवृत्तेः ।

चतुर्थः सत्यसनामकस्य पत्नीति विग्रहे निष्पन्नः तत्पुरुषो नित्य स्त्रीलिंगः, तत्पुरुषस्योत्तरलिंगत्वनियमात् । पत्नीशब्दस्तु पतिशब्दलक्ष्यार्थे पतिकर्तृयागजन्यफलवति स्त्रीत्वं स्त्रीप्रत्ययार्थं बोधयत् नियतलिंगएव, पुमादौ तदर्थासम्भवात् । " पत्युर्नोयज्ञसंयोग "इति सूत्रस्य यत्साहित्येन यज्ञाधिकार स्तस्यां स्त्रियां पतिपदार्थे नियमतो नविधायकत्वात, अत्रापि सपत्नीयत इत्येवप्रयोगः ।

" कुमारविक्रमंवीक्ष्य सेयंचकितदारका । सेनादानवसिंहानां शर्वरीसुन्दरायते ॥ " इत्यादौ शर्वरीसुन्दर्यां विवाचरति इति विग्रहे शर्वरीशब्दस्य नपुंवद्भावः, क्यङ्परत्वाभावात ; किन्तु सुन्दरीशब्दस्यैव । पाचिकायतइत्यादावपि कोपधस्य पुंवद्भावनिषेधोवाचनिकः । एवं कष्टायतइत्यादौ उत्कटचिकीर्षाया मुत्साहे क्यङर्थे कष्टपदार्थस्य पापस्यान्वयः । सत्रकक्षकष्ट कृच्छ्रगहनशब्दानां पापं लक्ष्यार्थः, क्यङर्थे क्रमणे निरुक्तोत्साह स्वरूपे विशेषणं, तेन सत्रायतइत्यतः पापायोत्साहतइति पूर्वसदृशोबोधः ।

रोमन्थं वर्तयतीत्यर्थे रोमन्थायतइति प्रयोगे निगीर्णोद्गीर्णद्रव्यं रोमन्थः, तस्यकर्मतया क्यङर्थे हनुक्रियारूपचर्वणेऽन्वयः । हनुचलन भिन्ने वर्त्यर्थे ऽपाननिस्सृतद्रव्ये च रोमन्थपदार्थे कीटो रोमन्थंवर्तयतीति वाक्यमेव प्रमाणं, " हनुचलन इति वक्तव्य " मिति वार्तिकात । अपाननिस्सृतद्रव्यस्यान्तर्वर्तनं निगरणं संचारोवा वर्तयत्यर्थः ।

तपस्यतीत्यादौ रागप्राप्तस्यभोजनादेः परिहारस्तपः, तत्संकल्पे क्यङर्थेन्वेति, संकल्पः तत्प्रत्यवाय साधनव्यतिरेक प्रतियोगिविषयिणी चिकीर्षा । अत एव परस्मैपद मानुशासनिकम् ।

बाष्पायते ऊष्मायते फेनायते इत्यत्रोद्वमने, शब्दायते वैरायते कलहायते अभ्रायते कण्वायते मेघायते सुदिनायते दुर्दिनायते नीहारायते इत्यत्र करणेच क्यङर्थे कर्मतया प्रातिपदिकस्यान्वयः । कण्वं पापम् । सुखायते दुःखायते इत्यादौ वेदनेक्यङर्थे सुखादेः विषयतासामानाधिकरण्योभय संसर्गेणान्वयः । तेन परस्य सुखायतइति न प्रयोगः ।

भृशायते सुमनायते दुर्मनायते इत्यादौ प्रकृत्यर्थैकदेशा उपचयसौमनस्य वैमनस्यादयः क्यङर्थे ऽभूततद्भावस्वरूपाया मुत्पत्ता वाधेयतया, प्रकृत्यर्थ स्त्ववच्छेदकतयान्वेति ।

एवं लोहितायति लोहितायते पटपटायति पटपटायते इत्यादौ लोहितादिगुणस्य पटपटानुकार्य शब्दादेः क्यषर्थे उत्पत्तावन्वयः । यत्तु - " लोहितादि डाज्भ्यः क्यष् "[३-१-१३] इति सूत्रे आदिपद-श्रवणात्-" लोहितश्यामदुःखानि हर्षगर्वसुखानि च । मूर्च्छानिद्रा कृपा धूमाः करुणा नित्यचर्मणी " इति परिगणनं, तत् " लोहितादि डाज्भ्यः क्यष्वचनं भृशादि ष्वितराणी " ति वार्तिकविरुद्धम् । तेन हि वार्तिकेन लोहितशब्दस्य डाच्प्रत्ययान्तस्य क्यष्, श्यामादेस्तु भृशादिमध्यपाठेन क्यङेवसाधुरिति बोध्यते । तेन श्यामायतीति न प्रमाणम् । वाक्यष इत्यनेन विभाषा परस्मैपदविधानात् ।

उत्पुच्छयते विपुच्छयते परिपुच्छयत इत्यादौ णिङर्थेउत्क्षेप विविधक्षेपपरितःक्षेपेषु पुच्छस्य, सम्भाण्डयते संचीवरयते इत्यत्र राशीकरणेभाण्डस्या र्जनेपरिधानेचचीवरस्य, अनुलोमयतीत्यत्र णिजर्थे अनुमार्जनेलोम्नः, विपाशयतीत्यत्र विमोचनेपाशस्य, संवर्मयतीत्यत्र

संछादनेवस्त्रस्य, वितूस्तयतीत्यत्र विघातेतूस्तपदार्थस्य जटीभूतकेशस्य कर्मतया; उपवीणयतीत्यत्रोपगानेवीणायाः, अतिहस्तयतीत्यत्रातिक्रमे हस्तिनः, अभिषेणयतीत्यत्राभियानेसेनायाः, उपश्लोकयतीत्यत्रोपस्तवेश्लोकस्य, अनुतूलयतीत्यत्रानुघट्टने तूलस्य करणतयान्वयः । अत एव धात्वर्थान्तर्भूत कर्मकारकाणा मुपवीणयतीत्यादीनां सकर्मकत्वम् । तेन – " उपवीणयन्ति ये गुण मर्णव मतिहस्तयन्तिशिवतवै । य उप श्लोकयतित्वां कृतान्तमभिषेणयत्येषः " " हन्तकामविरामाय विषयेषु सजेतकः । संज्वरच्छेदमन्विच्छन्ननलंकोनुतूलयेत " इत्यादौ शिवं ये ते गुणं वीणयाउपवीणयन्तिते हस्तेनसागरमतिक्रामन्ति, यस्त्वां श्लोकैरुपस्तौति स सेनयाकृतान्तमभियातीति अनलन्तूलेन घट्टयेदिति च वाक्यार्थनिष्पत्तये भवन्ति कर्मप्रत्ययाः ।

वर्मणा संनह्यति संवर्मयति इत्यादौ सन्नहिपर्यायत्वणिचो कर्मकत्वात् करणतयैवान्वयः । कर्मप्रकृतिका णिङ् णिजंन्ताधातवस्त्व कर्मकाएव । " श्वः संचीवरयिष्यमाण वटुकव्याधूत शुष्यत्त्वच " इत्यत्र शानच्प्रत्ययः कर्तरि वटुकसमानाधिकरणः, नतु कर्मणित्वक् समानाधिकरणः । उपवर्णितानां णिङ्णिचां च तत्त दुपपदपूर्वकं प्राति पदिकमेव प्रकृतिः, नतु केवलं पुच्छादिः " स्वाद्विघाते च संच्छादेच स्त्रा त्पुच्छादितस्तथा । उत्क्षेपादौ कर्मणि णिं स्तत्तदव्ययपूर्वकात् ॥ वीणात उपगानेस्याद्धस्तेभा तिक्रमेतथा । तेनातश्चाभिधाने णिः श्लोकादेरप्यभिष्टुतौ " इति भागुरिस्मृतेः ।

हलिं गृह्णाति हलयति, कलिं गृह्णाति कलयति, कृतं गृह्णाति कृतयति इत्यादौ णिजर्थग्रहणे हलिपदार्थ महाहलादेः; सत्यापयति अर्थापयति वेदापयती त्यत्र आपुकूसमभिव्याहृतणिजर्थकरणे आख्याने च सत्यार्थवेदानां; मुण्डयति मिश्रयति श्लक्ष्णयति लवणयति व्रत यतीत्यादौ णिजर्थकरणे मुण्डादेः, हस्तयते पादयते इत्यादौ णिजर्थे

निरसनैगविशेषाणां कर्मत्वेनान्वयः । " मुण्डादेस्तु करोत्यर्थे गृह्णात्यर्थे कृतादितः । वक्तीत्यर्थे च सत्यादे रंगेभ्य स्तन्निरस्यति ॥ " इति भागुरिभाषितात् ।

क्रशयति म्रदयति द्रढयति स्थवयति दवयति नेदयति साधयति ज्यापयति प्रापयति स्थापयति स्फापयति द्राघयति वृन्दयतीत्यादौ णिजर्थे करणे कृशमृदुदृढस्थूलदूरान्तिकबाढवृद्धप्रियस्थिर स्फिरदीर्घ वृन्दारकाणां कर्मतयान्वयः । संकल्पितं भोजन मभोजनं वा व्रत पदार्थः । पयः शूद्रान्नं वा व्रतयति इत्यत्र णिजर्थे व्यापारेनुकूलतया भोजनाभोजनयो र्भोजनद्वये यथासंख्यं पयः शूद्रान्नकर्मत्वयो रन्वयः ।

क्वचिच्च प्रातिपदिकार्थस्या ख्यातार्थ एवान्वयः, पाणिनिना प्रयोजनविशेषार्थ मुत्प्रेक्षितस्य नित्य मश्रूयमाणस्य लडादेरिव क्वचिदपि साक्षा दबोधकस्य व्याकरणे शबादेरिवारोपितशक्तेः क्विपः पदसंस्कारमात्रप्रयोजनकस्य सार्थकत्वायोगात् । अन्यथानुबन्धानामपि सार्थकत्वप्रसंगात् । व्याकरणन्तु स्वार्थसदृशाचारलाक्षणिकस्य प्रातिपदिकतुल्यानुपूर्वीकस्य शब्दस्य धातुसंज्ञा मुपदिशति । अत एव क्वचित् व्याकरणे क्विपः क्वचित् क्यङः क्वचिदिय एव लोपो नुशिष्यते ।

तत्र धातुसंज्ञेभ्यः प्रातिपदिकेभ्य स्तदन्त्यस्वरस्या नुदात्तानुबन्धत्वा दात्मनेपदम् । यथावकल्भते क्लीवते होडते इत्यादौ । अवगल्भक्लीबहोढपदार्थौ नपुंसकभावसदृशौ भाव आख्यातार्थ आश्रयत्वे ऽन्वेति । अवगल्भायत इत्यादिक्यङित्तु तदर्थे सादृश्येन प्रातिपदिकलक्ष्यः स्वार्थाचारः । अन्येभ्यस्तु प्रातिपदिकधातुभ्यः परस्मैपदमेव प्रमाणं, घट इव मालेव कविरिव ग्रामणी रिव विधुरिव पितेव रा इव गौरिव ग्लौरिव भवतीत्ति विग्रहे घटति मालाति कवयति ग्रामणयति विधवति पितरति रायति गवति ग्लावतीति प्रयोग

दर्शनात् । इदमिव राजेव पन्था इव भवतीति विग्रहे इदामति राजानति पथीनतीति प्रयोगे नुनासिकान्तस्योपधादीर्घ आनुशासनिकः ।

अन्येतु राजपुरुषादिसमासे राजपदार्थः स्वस्वामिभावेन पुरुषेन्वेतीति प्रातिपदिकयो रपि स्वार्थभेदान्वयोपयोगिन्याकांक्षा । एवं ज्येष्ठा मध्यमेत्यादौ स्त्रीप्रत्ययार्थे परिणीत स्त्रियां पुंसो ज्येष्ठ मध्यमादे रन्वय इति स्त्रीप्रत्ययेपि प्रातिपदिकेन सह तथाविधा कांक्षा भवतीत्याहुः । तच्चिन्त्यम् ।

नाम व्यपेक्ष्यते लिंगप्रत्ययेन तिङा सुपा ।
तद्धितेन निपातेन कृतधातुलयेन च ॥१॥

अजा एडका अश्वा चटकेत्यादौ पशुविशेषेषु प्रातिपदिकार्थेषु योन्यवयवकावस्वरूपस्य स्त्रीत्वस्य शक्यस्य, खट्वेत्यादौ शब्दधर्मेण वक्ष्यमाणेन स्त्रीत्वेनावलीढ खट्वापदवाच्यत्वस्य लक्ष्यस्य, पाण्डवभार्यासु मध्यमा सुभद्रेत्यत्र मध्यमपदार्थे मध्यमपुरुष परिणीते स्त्रीत्वस्यान्वये टाप् प्रत्ययः ।

बहुदृश्वाकामन्दकीत्यत्र बहुदर्शिन्यां शक्यस्य स्त्रीत्वस्य , सीमाग्रामस्येत्यादौ सीम्नि स्त्रीशब्दस्वरूपवाच्यत्वस्यान्वये डाप्प्रत्ययः टिलोपप्रयोजनकतया टाप् पृथङ्निर्दिष्ट आत्वेनैवशक्तः ।

पचन्ती भार्या दण्डिनी पालिता पत्नी मित्रा इत्यादौ शक्यस्य स्त्रीत्वस्य, प्राची उदीची इत्यादौ स्त्रीशब्दप्रतिपाद्यत्वस्य लक्ष्यस्यान्वये ङीप्प्रत्ययो अन्तोदात्तत्वप्रयोजनः ।

घटोध्नी गौ रित्यादौ घटपरिमितोधःसम्बन्धिन्यां गवि शक्यस्य स्त्रीत्वस्य, इन्द्राणीवरुणानीत्यादा विन्द्राद्यभिन्नेन पुंसा संयुक्तादौ प्रातिपदिकार्थे प्रकृतिविशेषसमभिव्याहृतस्य स्वस्यार्थे संयुक्ते वा स्त्रीत्वस्य, हिमानीत्यादौ हिमे संहतत्वस्य, अरण्यानीत्यादौ

अरण्ये महत्त्वस्य, यवानीत्यत्र यवे दोषस्य, यवनानीत्यत्र यवनकर्तृके प्रातिपदिकलक्ष्ये लिपित्वस्य, आचार्याणीत्यत्राचार्यसंयुक्ते अर्याणी त्यत्र वैश्यजातीये स्त्रीत्वस्य, अभ्रालिप्ती गौ रित्यत्र लेपेलप्तत्वस्य, पाणिगृहीतीत्यत्र पाणिग्रहणकर्मणि भार्यात्वस्य, उलूकपक्षीशाला उलूकपुच्छीसेना इत्यादौ उलूकपक्षसदृशपार्श्वभागे त त्सदृशपश्चाद्भागे च स्त्रीशब्दप्रतिपाद्यत्वस्यान्वये ङीष्प्रत्यय आद्यु दात्तस्वरप्रयोजनकतया पृथगुद्दिष्ट इत्येनैव वाचकः ।

भद्रबाहू रित्यत्र प्रकृति रूढ्यर्थ व्यक्तौ, श्वश्रू रित्यत्र भार्या जनकेश्वशुरपदार्थे, करभोरू रित्यत्र करभसदृशोर्ववयविनि, संहतोरू रित्यत्राति व्यतिषक्तोरुद्वयसम्बन्धिनि, कद्रूरित्यत्र नागमातरि स्त्रीत्वस्या न्वये ऊङ्प्रत्ययः । शार्ङ्गरवी इत्यत्र शार्ङ्गरवत्वजातिमति, नारीत्यत्र नृत्व जातिमति स्त्रीत्वस्यान्वये ङीन्प्रत्ययोनित्स्वरलाभप्रयोजनः । अाष त्व्येत्यादौ अवटजातेः स्त्रीत्वस्यान्वये चाप् प्रत्ययः स्वरभेदप्रयोजनः । इत्येवं प्रातिपदिकस्यार्थे स्वार्थस्यान्वये समर्थाः स्त्रीप्रत्ययाः प्राति पदिकं व्यपेक्षन्ते । युवति रित्यादौ तिताद्धितोपि यूनि स्त्रीत्वस्या न्वये योग्यः ।

एवं प्रथमादिविभक्तिरपि प्रातिपदिकार्थान्वितं लिंगमभिधत्ते, "प्रातिपदिकार्थलिंगपरिमाणवचनमात्रे प्रथमे"ति सूत्रेणप्रथमायाःकण्ठतो द्वितीयादौ मात्रग्रहणसामर्थ्येन लिंगवाचकतावगमात् । तच्च लिंगंत्रिविधं सत्वरजस्तमसां गुणानामुपचयः पुंस्त्वं, तेषामपचयः स्त्रीत्वं, साम्यं च क्लीबत्वं, सुपांवाच्यम् । अत एवोपचयापचययो रविवक्षायां सामान्ये नपुंसक मिति प्रवादो घटते । तत्त्रितयमपि केवलान्वय्येव, अर्थोऽय- क्तिर्वस्त्विति सर्वत्र प्रयोगदर्शनादिति पतंजलिः । " तिस्रोजातय एवैताः केषांचित् समवस्थिताः । अविरुद्धा विरुद्धाभि र्गोमहिष्यादि जाति भिरि " ति वाक्यपदीये भर्तृहरिः । शेफावयव समवेतप्राणित्वं पुंस्त्वं,

केशसमवेतप्राणित्वं स्त्रीत्वं, तदुभयोरेकत्राप्य समवेतप्राणित्वं नपुंसकत्वं यथा यथं सुपां स्त्रीप्रत्ययानां शक्यम् । यत्र तद्बाधः तत्र शब्दवृत्ति परिभाषा विशेषविषयत्वस्वरूपं स्त्रीपुंस्त्वादिकं शब्दसंस्कारप्रयोजनकम् , शब्दवृत्तितया तादृशशब्दवाच्यत्वं वार्थवृत्तितयाभासत इति युक्तम् । पशुना रुद्रंयजेतेत्यादौ पशौ पुंस्त्वादिकं निरुक्तमबाधित मेव सुपामर्थः । यत्रतु तद्बाधः तत्र दाराइत्यादौ बहुवचनवत्सा-धुत्वमात्रार्था स्तल्लिंगाभिधायिप्रयोगा ननु शब्दधर्मः शाब्दबोधगोचर इति वस्तुगतिः । स्वरविशेषइव स्त्रीत्वपुंस्त्वादिकं शब्दधर्मः, सच सुपा भिव्यक्तोर्थविशेषस्य निर्णायक इत्यपि वदन्ति ।

एवं चैत्रः पचतिपच्यते तण्डुलइत्यादौ तिङर्थः कर्तृत्वकर्मत्वादिः प्रथमान्तार्थेन्वेति, तथा सुपाप्युशताडंख्या अंगकानीत्यादौ तद्धितेनोपात्त मल्पत्वं घटः पटश्चेत्यौ निपातेनोपात्तं समुच्चितत्वं भोक्तुं कालइत्यादौ तुमन् कृदुपात्तं भोजनार्हत्वं प्रातिपदिकार्थेन्वेतीति, तदाकांक्षाः स्वयं परिकल्पनीयाः ।

इति श्री महामहोपाध्याय गोकुलनाथ शर्म प्रणीते

श्रीपदवाक्यरत्नाकरे

॥ परिभाषाप्रकरणम् ॥

---

अथ स्फोटनिरास प्रकरणम् ।

ननु - पाकविशेषासादितरसविशेषे दुग्धावयवै रारब्धे द्व्यणुकादौ द्रव्ये वर्तमानस्य दधित्वसामान्यस्य तद्वतोवा वाचकत्वं किमिकारान्ते किं यकारान्ते किमन्नंते किं नकारान्ते दधिशब्दवर्तते ? दधिपश्य दध्यानय दध्ना क्रीड दधनिरमस्वेति सर्वविध प्रयोगदर्शनेन सर्वत्रैव बालाना माद्यव्युत्पत्ति सम्भवात् । नच यकारान्तादि प्रयो-

गाणा मिकारान्तस्मरण द्वारकपदार्थबोधकत्वसम्भवा द्दधीत्येववाचकं, नतु दध्यद्घ्नादीति सांप्रतं; वैपरीत्यस्यापि सम्भवात् । नापि द्धीति प्रकृतिमंगीकृत्य व्याकरणे नानाविधविकारप्रतिपादना द्विनिगमनाशक्या, व्याकरणस्य प्रवृत्तिलाघवोत्प्रेक्षितप्रकृतिप्रत्ययादेशा देशिभावसहस्रव्युत्पादित निष्पन्नसाधुपदस्य पारमार्थिकपदपदार्थसम्बन्धा प्रतिपादकत्वात् । अन्यथा नानाविधाना मनुबन्धानामागमानां नित्यमश्रूयमाणानां क्विबादिप्रत्ययाना मौणादिकानां च प्रकृतिप्रत्यय विभागानां तत्तदर्थशक्ति कल्पनाप्रसंगात् । यदाह हरिः- " उपायाः शिक्ष्यमाणानां बालानामुपलालनाः । असत्ये वर्त्मनिस्थित्वा ततः सत्यं समीहते ॥ " इति । यज्ञकर्मप्रयोगार्ह निष्पन्नशब्द व्युत्पादना र्थमाम्नायस्य च रक्षोहागमलघ्वसंदेहप्रयोजनाय प्रवृत्तं व्याकरणं दध्यं प्रकृतिं कल्पयित्वा अनच्पिरे सम्प्रसारणविधिना दधीत्यादिसाधयितुं च क्षमते । नच - फले विसंवदति । एवं देवोवनं पितानदी त्यादौ विसर्गमकाराकारलोपानामेकत्ववाचकत्वम् , उततैः स्मारितस्य सोः ? विपरीतंचात्र विनिगमकं, कुत्रापि साधुशब्दे अप्रयुज्यमानस्य सकारस्य वाचकताया व्यवहारेण गृहीतु मशक्यत्वात् । नचा देशानां नानात्वादेकस्यादेशिनो वाचकत्वमिति युज्यते, व्याकरणभेदेन सुसि रिरू प्रभृतीनामादेशिना मप्यनेकत्वात् । " उपेयप्रतिपत्त्यर्था उपाया अव्यवस्थिता " इति न्यायात् । किंच- विसर्गेण सुकारः तेन चैकत्वं स्मरणीयमिति परम्पराकल्पने गौरवात् विसर्गस्यस्मारकतया तदनुभावकत्व मुचितम् । तस्मात् साधुनि पदे प्रयुज्यमाना विकाराएववाचकाः । तदाहुरभियुक्ताः - " साधुशब्देन्तर्गता हि बोधका नतु तत्स्मृताः । व्यवस्थिते व्यवहृते स्तद्धेतुन्यायत स्तथा " इति । आदेशा विसर्गादयस्तावत् श्रूयमाणत्वेनान्यथाकर्तु मशक्यत या व्यवस्थिता व्यवहारबलेन बालैर्गृहीतसंगतिकाः परैरपि पदार्थबोधकस्यादेशिनः क्लृप्तपदार्थबोध प्रयोजकभावाश्च । आदेशिनस्तु

व्याकरणभेदेन नानाविधा अव्यवहार्याः पदार्थावगम पूर्वमखिलैरभ्युपगत प्रतिसन्धयश्चेति वर्णस्फोटवादिनः ।

अत्रोच्यते-

पाणिन्यादिभिरुत्प्रेक्ष्य आदेशीति विकल्पितः ।
तस्य वाजिविषाणस्य लकिबादेः कशक्तता ॥१॥
येकचि द्वोधकाः साक्षा त्क्वचिन्न विकृतिं गताः
त एव वाचका नैतदादेशाः शाब्दिकस्मृतेः ॥२॥

व्यवहारलाघवार्थं पाणिन्यादिभि रुत्प्रेक्ष्य प्रकृत्या धातुना समारोपित समभिव्याहाराः वस्तुतः प्रकृतिसमभिव्याहारेण साधुशब्देषु अप्रयुज्यमानतया तुरंगश्रृंगसदृशा लकाराक्विबादयो नकस्या प्यर्थस्य वाचकाः । परिनिष्ठिततिबाद्यादेशनिष्ठां शक्ति मादेशि न्युपचर्य वैयाकरणा व्यवहरन्ति । अत एव परिनिष्ठितराजपुरुषादि समासस्यार्थवत्ता मलौकिकेराजन् ङस् पुरुष सु इत्याकारकेविग्रहवाक्ये आरोप्य प्रातिपदिकसंज्ञां प्राचीनस्तु निवृत्तिपरतदुत्पत्त्यादिकार्यं निर्वर्तयन्ति एकार्थीभाव सामर्थ्यवादिनः । अत एव लकारस्यावाचकतया तदादेशत्वा विशेषे प्याख्यातस्य कर्तृत्वे शतुः कर्तरिशक्तिरिति वैषम्यमुपपद्यते । यथाहि वाचकतानवच्छेदकेन कृत्परिभाषागोचरत्वेनोपलक्षिते शतृत्वादिना वाचकेप्रत्यये कर्तरिकृदिति वाचकता ग्राहकातिदेशवाक्यप्रवृत्तिः तथातिबाद्यादेशित्वविशिष्टे तकारे कर्तृवाचकताविधि विशेषणमेवोपसंक्रमति, विशेषणमुपलक्षणीकृत्य विशेष्यइव विशेष्यमुपलक्षणीकृत्य विशेषणेप्यात्र वाक्यप्रवृत्ते रित्यवाचकाएवो त्प्रेक्षिकलकारादयः । तिबादिषु प्रकृतिसमभिव्याहारज्ञानं लकारजनिता पदार्थोपस्थितिः परस्परं सहकृत्यफलं जनयतीति पक्षस्यासम्भव दुक्तित्वात् । यादृशपदत्व सामानाधिकरण्येन समभिव्याहारबुद्धि स्तद्धर्मावच्छिन्नजनिताया एव पदार्थोपस्थितेः शाब्दबोधांगत्वात् । अन्यथा पचतिल इति

शक्यात् लकारोनपचतिसमभिव्याहृतस्तिप्च न वाचक इति ज्ञानकालेपि तथा शाब्दबोधप्रसंगात। यदादेशत्वावच्छेदेन समभिव्याहारबुद्धिस्तज्जनितापदार्थोपस्थितिः शाब्दबोधांगमित्यपिन, आदेशत्वाद्यनुपस्थितावपि शाब्दबोधोदयात्। नच-तिपो वाचकत्वेपि यत्र तिपि समभिव्याहारबुद्धिः तत्रा वाचकत्वनिर्णये तिबन्तरजनितायांपदार्थोपस्थितौ तथाविधान्वयबोध प्रसंगतादवस्थम्, नहि शब्दव्यक्तिभेदेन पदार्थोपस्थितेः कारणताभेदः, आनन्त्यप्रसंगादिति वाच्यम्;- तिप्त्वसामानाधिकरण्येन पचिसमभिव्याहारग्रहस्य तिप्त्वावच्छेदेन वाचकताग्रहजनितायाः कर्तृत्वाद्युपस्थितेश्च परस्परसहकारित्वोपगमात्। तिप्त्वसामानाधिकरण्येन वाचकताग्रहेण तत्संस्कारेण वा जनितायाः पदार्थोपस्थिते स्त्वंगत्वे पचिसमभिव्याहृतं तिप्पदमिति विशिष्टज्ञानस्वरूपोद्बोधकजनितत्वमेव तत्र प्रवेशनीयम्। येच टाङसिङसाद्या मनसा मनस इत्यादौ श्रूयमाणा अपि बोधकाः, तेषां घटेन घटात् घटस्येत्यादा विनास्त्यस्वरूपो विकारो न वाचकः, अनेकशक्तिकल्पनाय पत्तेः, विनिगमिका शाब्दिकस्मृतिरेव। दधिशब्देपि कोशादिः, दध्यशब्दादे र्वाचकत्वेपि दधिशब्दस्य वाचकत्वावश्यंभावेन विकृतानां स्मारकतयैवोपयोगकल्पनाया न्याय्यत्वात्। प्रथमैकवचनन्तु सकारएव, देव स्तत्रगत स्स इत्यादौ श्रूयमाणस्य सकारस्यवाचकताध्रौव्ये तदुपस्थापकतयैव विसर्गादेरुपयोगसम्भवात्। पाणिनिप्रणीत स्मृतेरेवविनिगमकत्वात्। अनुबन्धास्तु सर्वत्रकाल्पनिका एवेति न तेषां वाचककुक्षिप्रवेशइति दिक्।

एवं केषांचि च्छ्रूयमाणानामादेशिनां वाचकत्वे ध्रुवे तदादेशानां तत्स्मरणद्वारैवोपयोगसम्भवे केषांचि च्छक्तिभ्रमेणापभ्रंशादिवत वर्णविकारादप्यन्वय बोधोपपत्तौ पदस्फोटवादिनोपि निरस्ताः। तथाहि तेषां मतं- सुबन्ता तिङन्ताश्च प्रकृतिः पदं, तत्र विशिष्टार्थवाचकं

घटेनेत्यादिकं पदं करणताविशिष्टैकघटे एकघटकरणतायां तत्कार्यतायां वा शक्तं, नतु प्रकृतिप्रत्ययोः पृथक्शक्तिः, पदे कियती प्रकृतिः कियान् प्रत्यय इत्यविभागेन घटइति प्रकृतिरिनेति प्रत्ययोवा घटेति प्रकृतिरेनेति प्रत्ययोवेत्य निश्चयात् । नहि घटटाप्रभृतयः स्मृताःप्रकृतान्वयबुद्धौ प्रभवन्ति, तेषामश्रवणात् । तदज्ञानेपि समुदायशक्तिज्ञानेन शाब्दबोधोदयात, तस्यप्रमात्वे बाधकाभावात । घटटाइत्यतः शाब्दबोधानुदयेन घोत्तरटोत्तर नकारज्ञानत्वेन कारणत्वावश्यकत्वे तज्जनितपदार्थोपस्थितेरेव सहकारित्वौचित्यात । अन्यथा इनादौ टादेशत्व मजानतः टाजनितपदार्थोपस्थितिसहकारेण घटेनेत्यतः कलशकरणताशाब्दप्रसंगात् । घटेनेत्यानुपूर्वी विशिष्टपदत्वावच्छेदेन घटकरणताशाब्दजनकताज्ञानस्य कारणत्वे तत एव उपपत्तौ किमादेशि टाप्रभृति जनितया पदार्थोपस्थित्या । का चेतः पर मितरा शक्ति विशिष्टज्ञान कारणत्वात् । वस्नसादौ प्रकृतिप्रत्ययविभागस्य शास्त्रीयस्याप्यभावेन तवोक्ताया एव गते रवश्याभ्युपेयत्वे सर्वत्र पदे तथैव स्वीकर्तु मुचितत्वा च्च । तदाहु रभियुक्ताः – "अथादेशा वाचकाश्चे त्पदस्फोट स्वतः स्फुटः । घटेनेत्यादिषु नहि प्रकृत्यादिभिदा स्फुटा ॥ वस्नसादाविवेहापि सम्प्रमोहोहि दृश्यते ।" इति ।

अत्रेदं तत्त्वं, घटेनेत्यानुपूर्वी विशेषविशिष्टे घटकरणत्वान्वय बुद्धिव्यतिरेकप्रयोजक व्यतिरेकप्रतियोगित्वस्वरूपाकांक्षा ज्ञानस्य घटपदजनिता घटस्मृति रिनपदस्मारित टापदजनिता करणतास्मृतिश्चेत्युभयं सहकारि । नचानया कांक्षया स्वार्थं स्मारयित्वा वाक्यार्थो नुभाव्यते, अपितु साक्षादिति नास्यां शक्तिव्यपदेशो युज्यते । नचास्या माकांक्षायां वाक्यार्थस्यानुप्रवेशः, अपितु घटत्वावच्छिन्नप्रकारतानिरूपित करणत्वविशेष्यताशालिन्या बुद्धेः प्रमाभ्रमसाधारण्याः । नापि तद्बुद्धिजनकतामात्रं तत शक्तिः, असंसर्गाग्रहादावपि वाचकत्वव्यवहारप्रसंगात् । अपितु संकेतविशेष इति प्रतिपादितं प्राक् ।

तदिद मुच्यते -

आनुपूर्वी विशेषेण सुप्तिङन्तात्मके पदे ।
आकांक्षा गृह्यते तत्तत्पदार्थान्वययोग्यता ॥ ३ ॥
शक्तिस्तु तस्याभिन्नैव प्रकृतिप्रत्ययादिषु ।
यया वृत्त्या स्मारितानामर्थाना मन्वयो मिथः ॥ ४ ॥

वाक्यस्फोटवादिनस्तु साधुशब्दान्तर्गतशब्दाना मेव वाचकत्व मुक्तयुक्त्या प्रतिपद्यमाना हरेव विष्णोवेत्यादिवाक्यानामेव हरिसम्बो ध्यत्वत्कर्तृकाशंसाविषयावनक्रियादिकं प्रति वाचकत्व मभ्युपगच्छन्ति । तथाहि - हरेवेत्यादौ न हरिशब्दो नवा सम्बोधनप्रथमा नावति धातु र्न सिप् श्रूयमाण इति न वाचकः प्रकृतिप्रत्यये रुपपत्तिः ; नापि प्रत्येकपदस्फोटः, अवपदस्यास्फुटत्वादिति वाक्यस्यैव विशिष्टार्थवाचकत्व मवश्याभ्युपेयम् ; आद्याच व्युत्पत्ति र्वाक्यार्थवाक्ययोरेव बालानामिति । तदप्यत एव परास्तमिति समुन्नीयते ।

वर्णस्फोटः पदस्फोटो वाक्यस्फोट इति त्रिधा ।
शाब्दिकानां मतं तत्राकांक्षा शक्ति रिति भ्रमः ॥५॥

घटेनेत्यानुपूर्वीज्ञानस्य घटत्वावच्छिन्नप्रकारतानिरूपित कर णतात्वावच्छिन्नविशेष्यताकबुद्धित्वं तद्व्यान्तरधर्मविशेषो वा जन्यता वच्छेदकः, सत्यामपि [illegible] [illegible] टा घटेत्यादितो व्यस्तानुपूर्वीकात् [illegible] तथाविधशाब्दबुद्धे रनुदयात् । नचैवं विपरीतव्युत्पन्नाना मपि [illegible] इत्यादितः शाब्द बुद्धे र्घटेनेत्यादितश्चाप्रतिपत्ते रनुपपत्ति रितिचेत् ? अत एव घटेनेत्या नुपूर्वी विशेषावच्छेदेनाकांक्षाज्ञानमपि कारणं, संदेव व्युत्पत्ति रित्यु च्यते । आकांक्षातु [illegible] निरूपित स्मरण वृत्तिकार्यतायाः प्रकारित [illegible] धर्मो [illegible]

रतानिरूपिता या टापदज्ञानत्वावच्छिन्न कारणतानिरूपितकार्यतावच्छेद स्मरणप्रकारीभूतधर्मावच्छिन्ना विशेष्यता तन्निष्ठा नवच्छिन्नप्रतियोगितावच्छेदकताकाभावत्वावच्छिन्नप्रयोजकस्याभावस्य प्रतियोगित्वम् । तच्च यादृशानुपूर्वीविशिष्टशब्दत्वावच्छेदेन तत्तज्ज्ञानत्वावच्छेदेन वा गृह्यते, तादृशानुपूर्वी विशिष्टपदज्ञानात् घटीया करणतेति शाब्दबुद्धि रुत्पद्यते । भवति च घटो घटपदवाच्य इति संस्कार सहकृतस्य घटपदज्ञानस्य तादृूप्येण जनकतायां घट इति स्मरणत्वस्य जन्यतावच्छेदकस्य घटकतया घटत्वमपि प्रकारितया जन्यतावच्छेदकम्, एवं टापदस्य करणतात्वं, घटत्वावच्छिन्नप्रकारतानिरूपितकरणतात्वावच्छिन्न विशेष्यता व्यक्तिः स्वरूपेण यस्याभावस्य प्रतियोगितावच्छेदिका सतद्विशेष्यताविशिष्टानुभवत्वावच्छिन्नाभावो घटेनेत्यानुपूर्वीज्ञानत्वावच्छिन्न प्रतियोगिताकाभावेन प्रयोज्यते, कारणतावच्छेदक धर्मावच्छिन्नाभावस्य कार्यतावच्छेदकावच्छिन्न प्रतियोगिताभाव प्रयोजकत्वात् । घटत्वावच्छिन्नप्रकारतानिरूपित करणतात्वावच्छिन्न विशेष्यताविशेषः पुनरखण्डः, ज्ञानविषयभेदेन भिद्यमानत्वात् । अखण्डधर्मः स्वरूपतएवावच्छेदको न विषयनिरूपकाद्यन्तर्भावेण, गौरवात् ।

यदि च सा विशेष्यता विशेष्यादिभेदेन भिद्यते, कथं जगदवगाहिनो भ्रमात् करणता सामान्यावगाहिनः प्रमितेर्वा यत्किञ्चित्करणतावगाहिनि घटीयाकरणतेति ग्रहणे वैचित्र्यं, सर्वत्रैव ज्ञाने तादृशविशेष्यताया जगन्निरूपितत्वात्, घटीयत्वाभाववन्निरूपित घटीयत्वप्रकारित्वावच्छिन्न विशेष्यताकत्वेन सर्वत्र भ्रमप्रसंगादिति-घटेनेत्यानुपूर्वीज्ञानस्य घटप्रकारतानिरूपित करणताविशेष्यतात्वेनैव सा जन्यतावच्छेदिका, आनुपूर्वीज्ञानाभाव प्रयोज्याभावप्रतियोगितावच्छेदिका वा; अतो घटत्वादे र्विशेष्याप्रवेशे प्रयोज्याभाव प्रतियोगितावच्छेदको धर्मो दुर्वचः, घटपदजन्य स्मृति

ननु तादृशानुभवत्वावच्छिन्न कार्यतानिरूपित कारणत्वमेव प्रवेश्यतां, अक्रमभावयोः प्रयोज्यप्रयोजक भावान्तर्भावेणेति चेत? स्यादेवं, यदि घटेनेत्यानुपूर्वीज्ञानस्य घटकरणता गोचरान्वयानुभवत्वं जन्यतावच्छेदकंस्यात् , नच तथा, व्यभिचारात, किन्तु घटेनेत्यानुपूर्वीज्ञाना व्यवहितोत्तरोत्पत्तिक ज्ञानत्वम् । घटकरणतान्वय बुद्धित्वावच्छिन्नाभावस्तु घटेनेत्यानुपूर्वीज्ञानाभावेन प्रयोज्यते, यद्धर्मावलीढोत्पत्ति प्रयोजकसामग्रीकुक्षौ यद्धर्मावलीढस्य कारणस्यानुप्रवेश स्तदवच्छिन्नाभावयोः प्रयोज्यप्रयोजकभावा भ्युपगमात । घटीयाकरणतेत्यन्वयबुद्धे रुत्पत्तौ घटेनेत्यानुपूर्वीज्ञानं घट पदेन टापदेन च जनिता कलशकरणत्वयो रुपस्थितिः घटेनेत्यानुपूर्वी विशिष्टे निरुक्ताकांक्षाज्ञानं चेति सम्भूयप्रयोजकम् । अतोभवत्य संसर्गा ग्रहादिजन्यतावच्छेदक घटकरणता गोचरान्वयबुद्धित्वावच्छिन्न प्रतियोगिताकाभावम्प्रति घटेनेत्यानुपूर्वीज्ञानाभावः प्रयोजकः । भवति च घटपदज्ञानत्वेन टापदज्ञानत्वेनच पदार्थोपस्थितिद्वारा जनकतायां कलशत्वावच्छिन्न विषयताकानुभवत्वं जन्यतावच्छेदकम् । अथवा तत्रापि घटपदज्ञानाभावप्रयुक्ताभाव प्रतियोगितावच्छेदकत्वमेव विषयतायां प्रवेशनीयम् , इत्थं च घटपदज्ञान व्यतिरेकप्रयोज्याभाव प्रतियोगितावच्छेदकविषयतानिरूपितेन टापदज्ञानव्यतिरेकप्रयोज्याभाव प्रतियोगितावच्छेदकेन विषयत्वेनावच्छिन्न प्रतियोगिताकस्यान्वयबुद्ध्यभावस्य प्रयोजको घटेनेत्यानुपूर्वी ज्ञानाभाव इत्येव माकांक्षाबुद्धेः कारणत्व मवसेयम् ।

एतादृशीचाकांक्षा यदि सुबन्ततिङन्तानांवृत्तिरिति शाब्दिकाभिप्रायः तदा भ्रममूल एव । नहि अस्या माकांक्षायां तादृूप्येण पदार्थाना मभिनिवेशः, घट तृतीयादीनां शक्यलक्ष्यार्थसहस्रभेदेन कारणता बाहुल्यप्रसंगात ।

स्था देतत, घटेनेत्यानुपूर्वीविशिष्टे घटपदार्थटापदार्थान्वयबोध जनकज्ञानविषयत्वस्वरूपाया माकांक्षायां गृहीतायामपि न विशेषण विशेष्यभावं प्रति नियमः सम्भवति । तथाहि - यजेत इत्यादा वाख्यातेन प्रकृत्यर्थविशेषणतया विधे स्तद्विशेष्यतया भावनाया इव घटेनेत्यादौ तृतीययापि प्रकृत्यर्थं प्रतिविशेषणतया संख्याया विशेष्य तया च करणत्वस्य बोधो जन्यते । तत्र करणत्वविशेषणकघट विशेष्यकान्वयबोधं को वारयेत । नहिघटेनेत्यानुपूर्व्या स्तृतीयार्थ विशेषणकबुद्धौ न सामर्थ्यं, संख्याया अप्यविशेषणत्वप्रसंगात । नचार्थभेदेनाकांक्षाभेद मनुमन्यते भवान् । नचासंसर्गाग्रहजन्यताव च्छेदक घटप्रकारककरणत्वविशेष्यकानुभवत्वावच्छिन्नोत्पत्तिप्रयोजक सामग्र्यामेव घटेनेत्यानुपूर्वीज्ञानस्यानुप्रवेशो न तथाविधकरणत्व प्रकारकघटविशेष्यकान्वयानुभवत्वावच्छिन्नोत्पत्ति प्रयोजिकाया मिति वाच्यं, कस्याचि दन्यथा व्युत्पन्नस्य घटेनेत्यतोपि करणं घटइति बोधोत्पत्त्या घटेनेत्यानुपूर्वीज्ञानस्य तत्सामग्र्या मनुप्रवेशावश्यकत्वात । एवं घटएकइति घटीयमेकत्वमिति बुद्धिद्वयेपि घटेनेत्यानुपूर्वीज्ञानस्य प्रयोजकत्वमावश्यकमिति पदार्थविशेषान्तर्भावेन घटेनेत्यानुपूर्वी विशिष्ट घटविशेषितकरणताबोध सामर्थ्यमेवशक्तिः, सैवच ज्ञाता घटीयाकरण ते त्यन्वयबुद्धा वुपयुज्यते । इति पदस्फोटवादिनिगर्व इति चेत ? उच्यते,

सामान्येन प्रकृत्यर्थः प्रत्ययार्थो विशेषतः ।
आकांक्षायां निविशते न तद्रूपतया द्वयम् ॥ ६ ॥

घटेने त्यानुपूर्वीज्ञानत्वावच्छेदेन घटपदज्ञानजन्यतावच्छेदका वच्छिन्नप्रकारतानिरूपितकरणतात्वावच्छिन्न विशेष्यताशालिबुद्धिजन कताग्रहएव स्वाव्यवहितोत्तरोत्पत्तिक ज्ञानत्वावच्छेदेन कारणम्, एव मपि घटपदार्थसहस्रभेदेन कारणताबाहुल्याभावप्रयुक्त लाघवसम्भवात् ।

एतादृशाकांक्षाग्रहेण शाब्दबोधे जननीये टापदजन्या क्वचिदिनपदश क्तिभ्रमजन्या करणतोपस्थिति स्सहकारिणी, न तयोराकांक्षाभेदः । एतादृशाकांक्षाबुद्धिसहकृत मानुपूर्वीविशेषज्ञानं घटप्रकारिकां करण ताविशेष्यिकां, विलोमाकांक्षाज्ञानसहकृतं तु करणताप्रकारिकां घट विशेष्यिकां बुद्धिं जनयति । यस्तु - द्विविधा आकांक्षां प्रतिस- न्धत्ते स घटीया करणतेति करणं घट इति द्वेधापि बुद्ध्यत एव ।

यत्तु तृतीयार्थकर्तृकरणत्वादिभेदेन नाकांक्षाभेदो गौरवात ; किन्तु - वाचकतावच्छेदकभेदेन ; टापदस्यहि संख्यायामेकवचनत्वेन वाचकता करणत्वादौ तृतीयात्वेन वाचकता; तथाच घटेनेत्यानुपूर्वी विशेषावच्छेदेन घटपदत्वविशिष्टज्ञानप्रयोज्यप्रकारतावच्छिन्न तृतीयात्व विशिष्टज्ञानप्रयोज्यविशेष्यताकानुभवजननसामर्थ्यस्वरूपाकांक्षा गृह्य माणा सती तृतीयात्वविशिष्टस्मारितकरणत्व कर्तृत्वादिविशेष्यकमनु भवं जनयति ; यस्तु - विलोमाकांक्षां प्रतिसन्धत्ते स कर्तृत्व करणत्वादिविशेषणतयैव प्रतिपद्यते ; एवं घटपदार्थविशेष्यतानिरू पितैकवचनत्वविशिष्टार्थप्रकारताकबुद्धिसामर्थ्यं घटेनेत्यत्र गृहीतं घट विशेषणतयैकत्वं भासयति ; तथा यजेतेत्यादौ लिङ्त्वेन विधौ लत्वेन भावनायां शक्तिरिति शक्ततावच्छेदकभेदादेव व्युत्पत्तिभेदो न तदभेदे कुत्रापीति मतम् । तच्चिन्त्यम् ।

ननु - घटपदार्थान्वितटापदार्थबोधकं घटेनेति पद मित्याकां क्षायां गृहीतायामपि घटान्वितकरणताबोधकत्वाभाववद्घटेनेति पद मित्यसामर्थ्यविशेषनिर्णयसम्भवात् तदा घटीया करणतेत्यन्वय बुद्धिप्रसंग इति घटेनेत्यानुपूर्वीविशेषावच्छेदेन घटान्वितकरणता बोधकत्वज्ञानमेव कारणं वाच्यं, विशिष्टबोधकत्व मेव च विशिष्ट शक्तिः । नच भवतु विशिष्टबोधकत्वज्ञानं करणं, नत्वेयं वृत्तिः, एत ज्ज्ञानस्य पदार्थस्मरणद्वारा कारणत्वाभावादिति वाच्यम् ;

एत ज्ज्ञानकारणत्वावश्यकत्वे स्मारकवृत्तीना मेतद्ग्राहकत्वे नैवोपक्षयात प्रकारान्तरेण पदानामानुभावकत्वग्रहे ऽनपेक्षणीयसन्निधीनां वृत्तिज्ञानजनितपदार्थोपस्थितीना मन्यथासिद्धत्वात । एवं च प्रत्ययप्रकृतिसमुदाये विशिष्टानुभावकत्वमेव शक्तिः, तद्ग्रहः साक्षादन्वयबोधोपयोगी, न पुनरर्थस्मरणमपेक्षते, वाक्यार्थस्यापूर्वत्वेन तद्गोचरस्मरणासम्भवात । प्रकृत्यर्थान्वितप्रत्ययार्थस्या पूर्वत्वेपि घटप्रकारतानिरूपित करणताविशेष्यक बुद्धित्वावच्छेदेन पदजन्यत्वस्य सुग्रहतया न शक्तिग्रहानुपपत्तिः, वाक्यार्थमगृहीत्वापि तज्ज्ञानसम्भवादिति स्फोटवादो दुरपवादइति चेत ? आस्तांतावदापाततो विशिष्टार्थबोधजननसामर्थ्यं शब्दस्यविशिष्टेवृत्तिः, तथापि–

वाक्यार्थ इव वाक्यार्थबुद्धि श्चेन्नानुभूयते ।
तथातत्कारणत्वस्या ज्ञानेप्यन्वयधीर्ध्रुवा ॥ ७ ॥

यस्यपुंसो घटान्वितकरणता तज्ज्ञानंवा नानुभूतचर स्तस्यापि घटेनेत्यादिवाक्यात घटान्वितकरणत्वानुभवस्य सर्वानुभवसिद्धतया न विशिष्टवृत्तिर्वाचकसमुदाये गृह्यमाणा विशिष्टानुभाविका । यत्र च घटटापदजनिते घटकरणतयोरुपस्थितौ घटेनेत्यादि समुदायत्वावच्छेदेन घटपदार्थान्वित टापदार्थबोधकत्वं प्रतिसन्धानं च विद्यते, तदासत्यपि समूहे घटकरणताबोधकत्व बाधबुद्धिर्नप्रतिरुणद्धि, जनयत्येव घटेनेतिपदं घटकरणताबुद्धिम् । यदाहुः– "नह्य विदितसामर्थ्योग्निर्न दहति पचति" इति । भवतु वा घटेनेति पदत्वावच्छेदेन घटकरणताबोधकत्वाभाव बुद्धिविरहो निरुक्त सामग्रीघटकः, तादृश बुद्धौ तादृशबुद्धेः प्रतिबन्धकत्वात, सत्यां घटेनेतिपदे घट करणताबोधकत्वाभावबुद्धौ घटेनकश्शेनेत्युभय विधानुपूर्वीज्ञानसत्वे घटकरणताबुद्धिः सामग्र्यन्तरादेव ।

ननु प्रथमान्तघटपदस्य तृतीयान्त घटपदस्य च विषय सामान्यतोव्युत्पन्नस्य पुंसो घटेनेतिपदं श्रुत्वा घटकरणताप्रतीति रनुभव सिद्धा । नच तत्र घटेनेत्यानुपूर्वीज्ञानत्वावच्छेदेन घटपदार्थान्वित टापदार्थबोधकत्वं प्रतीतचरमिति तुल्योनुयोगः । अथादन्तात् प्रातिपदिकात् टाकारस्येनमादिशता शब्दानुशासनेनादन्तप्रातिपदिकानन्तरिते नत्वावच्छेदेनादन्त प्रातिपदिकार्थान्वित टापदार्थबोधकत्वं बुद्ध्यते, सच यादृशानुपूर्वीकादन्तप्रातिपदिकोत्तरमिनपदं तादृशानुपूर्वीक पदार्थावच्छेदक धर्मविशिष्टान्वित टापदार्थतावच्छेदक धर्मविशिष्ट बोधकमित्याकारोबोध श्शाब्दस्वाभाव्याददंतप्रातिपदिकवृत्ति निखिलानुपूर्वी विशेषानखिलांश्च पदार्थतावच्छेदकान् धर्मान् बुद्धिविषयत्वावच्छेदकत्वादिक मुपलक्षणीकृत्य विषयीकरोति, तज्जनितस्मृति सहकृता विशिष्यपदार्थोपस्थितिः घटेनेत्यानुपूर्वी विशेषावच्छेदेन घटान्वितक[illegible]ता बोधकत्वमपि बोधयति , एव मेव तदादिशब्दानां प्रयोगजनक बुद्धिविषये लटो वर्तमानत्वे च स्मारकशक्तिः सुग्रहा, तत्तत्पदप्रयोगकारण बुद्धिविषयतोपलक्षित धर्मवति तत्तच्छब्दस्य तल्लट्प्रयोगाधिकरणतावच्छेदक लवत्वावान्तर तत्तच्छब्दत्वादिधर्मवति तल्लटः शक्तिः, अत एव घटं बुद्ध्वाप्रयुक्तोपि तच्छब्दो न पटस्य नचैकस्मिन् काले प्रयुक्तं लट्पदं कालान्तरस्यवाचकं, नवा तत्कालीनोबोधः शक्तिभ्रमाजन्यः । शक्तिग्रहस्तु सामान्योपलक्षित विशेषावगाही सर्वोपसंहारेण । तथाहि-तत्पदत्व लट्त्वाद्यवान्तरतत्तत्वोपलक्षिता स्तत्पदत्वव्यक्ती धर्मितावच्छेदकीकृत्य तत्पदप्रयोगोपधायक बुद्धिविषय लडधिकरण लवत्वावान्तर तत्तत्वोपलक्षित धर्मविशिष्टबोधकत्वावगाही वृत्तिग्रहः फलत स्तत्तत्पदत्वावच्छेदेन तत्त धर्मवाचकता मेवावगाहते । संकेत शक्तिपक्षेप्ययमेवप्रकारः शरणीकरणीयः । एव मवगते सामान्योपलक्षित विशेषेषुवाचकभावे प्रत्यक्षादिनावोपस्थिते तत्पदस्य तद्व्यक्तित्वादिना वाच्येवाचकेचोपलक्षणधर्मापद्दारेण तत्पदव्यक्तौ मनसा तत्पदार्थ

बोधकत्वं प्रतिसन्धीयते, वाचकत्वोपनायिकायाः स्मृतेःसत्वात् । सामान्य संकेतग्रहस्य वाचकभावसन्देहापनायकतयैवोपयोगः । बुद्धिविषयत्वाव च्छेदेन तत्तत्पदप्रवृत्तिनिमित्तत्वे घटत्वत्वावच्छेदेन बुद्धिविषयत्वे च गृहीते घटत्वं तत्पदप्रवृत्तिनिमित्तं नवेत्यादि शंकानवकाशात् । यद्विश्च तत्पद व्यक्ति घटत्वविशिष्टबुद्धिजनिकेति शक्तिग्रहोभिमतः, सत्र च विरोधिनी तद्व्यक्ति घटत्वविशिष्ट बोधिका नवा घटत्वं तच्छक्तिजन्यप्रतिपत्तिप्रकारो नवेत्या दि शंका न सामान्यसंकेतग्रहापनेया, सामान्यधर्मानवगाहिनि विशेष विषयके सन्देहे तथाविधनिर्णयस्यैव विरोधित्वादित्युच्यते; तदाभवतु बुद्धिविषयत्वाद्युपलक्षणधर्ममोषेण तत्तद्व्यक्तित्व घटत्वाद्यवगाहिनी सामान्यशक्तिग्रहप्रभवा शक्तिस्मृतिरेवान्वयबोधांगं । तच्छब्दत्वावान्तर तत्त्वस्य तच्छब्दप्रयोगजनकबुद्धिविषयत्वस्य वाचकतावाच्यतावच्छेदक यो रुद्बोधकाभावादस्मरणेनानवच्छिन्नतत्पदव्यक्तित्वघटत्वयोरवगाहनेन मनसापदव्यक्ति घटबोधिकेति स्मरण सम्भवादिति चेत् ? हंतैवं घटेनेत्या नुपूर्वी विशेषावच्छेदेन घटकारणताबोधकत्वमपि मनसानुग्रहणमित्यानुभा विकीशक्तिः स्मारकसमुदायवृत्तिरन्वयबोधांगं स्मारकशक्तिरानुभाव कशक्त्युपक्षीणेति पक्ष एव साधीयानिति चेत्? अत्राहुः- अनुभवस्मरणयो स्तुल्यप्रकारताकत्वेन कार्यकारणभावादवच्छिन्नप्रकारताकानुभवादनव च्छिन्नप्रकारताकस्मरण मनुपपन्नम् । नन्वानुपूर्वीप्रभृतिविशिष्टं वस्तु सामान्येन प्रतीयते प्रतीतं वा विशिष्टत्वेन स्मर्यते । मनस्त्वसति विशेषदर्शने प्रायेण बाह्यार्थसंशायक मेवेति सामान्येनादन्त प्रातिपदिकार्थान्वित टापदार्थबोधकत्वमेवाकांक्षा । साच प्रथमतो शासनेनादन्तप्रातिपदिकप्रकृतिकत्वावच्छेदेन प्रतिपद्यते । यदातु घटे नेत्यत्राश्रुतं च इनसमभिव्याहारं शृणोति तदा तत्रादन्तप्रातिपदिकसम भिव्याहृतेनपदत्वं प्रतीत्यानुशासनातिदेशवाक्यार्थं स्मरति, घटेनेत्यादि पदत्वावच्छेदेन निरुक्तामाकांक्षा मुपमिमीते, मनसा वा निश्चिनुते, विशेषदर्शनसत्वात् । अदन्तप्रातिपदिकार्थत्वन्तु अत्वानवच्छिन्न मुख्यविशे

च्यताशालिपदज्ञानजन्यस्मरणप्रकारावलीढत्वं, दशरामशरा इत्यादौ पदार्थस्मरणायोगात। चरमवर्णमुख्यविशेष्यको विच्छिद्य पदग्रह एवार्थस्मारकः ।

नन्वेवं घटेनेतिपद मदन्तप्रातिपदिकार्थान्वित टापदार्थबोधकमिति बुद्धावपि घटपदं ना दन्तप्रातिपदिकमिति निर्णये घटेनेतिपदं न घटपदार्थान्वितटापदार्थबोधक मित्यवधारणेवा सत्यां घटटापदजनितायां घटकरणत्वयो रुपस्थितौ घटीया करणते त्यन्वयबुद्धिप्रसंग इतिचेन्न:- घटपद मदन्तप्रातिपदिकमिति बुद्धेरपि तत्र सहकारित्वोपगमात । अन्यथा घटपदोत्तरेनत्वावच्छेदेना दन्तप्रातिपदिकानन्तरितेनत्वादिस्वरूपावच्छेदकधर्मदर्शनाभावा दाकांक्षाया एव दुष्प्रधारणत्वापत्तेः । एतादृशाकांक्षया प्रातिपदिकत्वेनोपस्थितेन घटपदेन जनितां घटपदार्थोपस्थितिं टापदजनितां करणतोपस्थितिं चा साध्य जननीयं शाब्दबोधं घटेनेतिपदस्य घटपदार्थान्वितटापदार्थबोधकत्वादिबाधबुद्धि र्नविरुणद्धि, इदं पद मिदानीं मदीयशाब्दबुद्धे रजनकमिति प्रतीतिवत फलकारणयो रेकतरस्या विघटनात । परंतु प्रातिपदिकत्वाद्यनुपस्थितिदशाया मपि घटेनेत्यानुपूर्वीविशिष्टज्ञानात शाब्दबोधदर्शनात अपरमस्ति साम ग्रीद्वयम् । यत्र घटपदार्थान्वितटापदार्थबोधकत्वस्वरूपां घटान्वित करणताबोधकत्वादिरूपां चा कांक्षां यथायथ मवगाहमानाभ्यां ज्ञानाभ्यां घटितं, तयोरेव क्रमात निरुक्तबाधद्वयं परिपन्थि; एकविध एव लिंगेऽन्वय व्यतिरेकिणि नानाविधव्याप्तीनामिव तुल्यानुपूर्वीकेपि पदे ऽनेक विधाकांक्षाणामपि ज्ञानं हेतुः । व्यतिरेकव्याप्तिग्रहविरोधित्वेनानुपसंहार्य इवा कांक्षाविशेषपरिपन्थितया विशेषबोधकता बाधो ऽप्याभास तया व्यवह्रीयते ।

स्यादेतत, भवतु सामग्रीत्रयं प्रयोजकं, तथापि पदजनितपदार्थोपस्थितीनां घटकरणताबोधकत्वस्वरूपाकांक्षाज्ञानघटितायां सामग्र्यां

नानुप्रवेशः । नहि विशिष्टबोधकत्वज्ञाने पदार्थस्मरण विलंबेन शाब्द विलंबः, मानाभावात । अतएव वस्तनखादावविदितप्रकृतिप्रत्ययविभागोपि युष्मत्संबंधबोधकत्व मनुसंधाय तथा प्रमिमीते, इति चेत्? अभिनवो यमांशिकस्फोटवादः । घटेनेत्यानुपूर्वीविशेषावच्छेदेन घटत्वावच्छिन्न प्रकारतानिरूपित करणतात्वावच्छिन्नविशेष्यताक बुद्धिजनकत्वग्रहे पदजन्यपदार्थोपस्थिते रभावे घटकरणतायाः पूर्वानुभूतत्वे स्मरणमेव, नानुभवः; पूर्वमननुभवेतु पदस्य मूकीभाव एव, नतु तादृशसामर्थ्य ज्ञानघटिता भिन्ना सामग्री, तत्कल्पने गौरवादिति वस्तुगतिः ।

अखण्डस्फोटवादिनस्तु कत्वगत्वादिनोपलभ्यमानावयवा ध्वनयो वाचकाः, तदभिव्यक्तस्फोटस्तुवाचकः । सचावयवशब्दै रारब्धोद्रव्य विशेषः शब्दस्वरूप एकमिदंपद मेकं वाक्यमेको ग्रन्थ एकोवेद इत्याद्यनुभवसाक्षिको वश्यमभ्युपेतव्यः । तन्निष्ठा जातयः पदत्व वाक्यत्व ग्रन्थत्व वेदत्वादयः । वर्णसमुदयेनैव पदादिव्यवहारो पद र्शनेतु तन्तुमालातिरिक्तपटस्या प्यस्वीकारप्रसंगः । सचस्फोटो वर्णानां नित्यत्वादाश्रयविनाशाभावात् नित्यएव, समवेतद्रव्याणां विनाशित्वनियमे मानाभावात् । कादिशब्दानां वायुविशेषः स्फोटस्य चरमवर्णप्रत्यक्ष मभिव्यंजक मपेक्षते पदस्फोटाभिव्यंजने घटादिवर्णमालाया म-र्थसंगते वाक्यस्फोटाभिव्यंजने पदानामाकांक्षाया ग्रन्थस्फोटाभिव्यंजनादौ वाक्याना मेकवाक्यतापन्नत्वस्य च ग्रहः । पदस्फोटस्तु पर्याय पदेन नभिद्यते, समवायिभेदेपि द्रव्याभेददर्शनात् । यथाच षड्भीरूपै रारब्धस्य चित्रस्यावयवस्य नीलपीताभ्यां रक्तश्वेताभ्या मन्यत रत्वेनाभिव्यंजनम् । तथाच एकस्य स्फोटस्य क्वचित् घटवर्णमालया क्व चित् कलशवर्णमालयाभिव्यजनं न विरुद्ध्यते । तदुक्तं वाक्यपदीये- "यथा मणिकृपाणादौ रूपमेक मनेकधा । तथैव ध्वनिषु स्फोट एकएव हि विद्यते ॥ " इति ।

यद्वा प्रतिपर्यायं भिन्न एव स्फोटः । अतएव घटकलशयो रेकं पद मिति न व्यवहारः । अस्तुवा प्रत्येकपर्यायाभिव्यंजनीयो वर्णमालाया मसमवेत एव स्फोटः, तेनवर्णाना मस्थिरत्वपक्षे यौगपद्यासम्भवात् स्फोटारम्भस्य ना नुपपत्तिः । भवतुवा बोपदेवोक्तानुगत व्यवहारयुक्त्या पदत्ववाक्यत्वादयो जातयएव घटत्वादिजाते र्वाचिकाः, जाते र्वाच्यतायामिव वाचकताया मप्येकत्वादिसम्भवात् । तदाहुः – "शक्यत्व इव शक्तत्वे जाते र्लाघव मीक्ष्यता" मिति । वर्णव्यक्तयस्तु वाचकजाते रभिव्यंजकतयैव वाक्यार्थबुद्धा वुपयुज्यन्ते, न साक्षात् । अवाचकशब्दत्वे च ध्वनय इति व्यवह्रियन्ते । तदुक्त मभियुक्तैः "अनेकव्यक्त्यभिव्यंग्या जातिः स्फोट इति स्मृता । कैश्चि द्व्यक्तय एवा स्या ध्वनित्वेन प्रकल्पिताः" इति । नचैवं स्फोटस्य जातिरूपत्वे तस्य ब्रह्मत्ववादविरोधः, जाते र्ब्रह्मातिरेकानभ्युपगमात् । तदुक्तं- "सत्यासत्यौतु यौभावौ प्रतिभावं व्यवस्थितौ । सत्यं यत्तत्र साजाति रसत्या व्यक्तयो मताः ।" इति । वाक्य पदीयेच "सम्बन्धिभेदा त्सत्तैव भिद्यमाना गवादिषु । जाति रित्युच्यते तस्यां सर्वेशब्दा व्यवस्थिताः ॥ तांप्रातिपदिकार्थंच धात्वर्थंच प्रचक्षते । सानित्या सा महानात्मा ता माहुस्त्वतलादयः । "इति वदन्ति । तत व्यवहारदशाया मुपेक्षणीयम् ।

इति गोकुलनाथ महामहोपाध्याय विरचिते पदवाक्यरत्नाकरे

स्फोटनिराकरणं समाप्तम् ॥

---

अथ वाचकशब्देषु प्रकृतिः प्रत्य इति पाणिनेः परिभाषा । प्रकृति र्द्विधा- प्रातिपदिकं धातुश्च । सुपः स्त्रीप्रत्य स्ताद्धित मिति त्रिविधाः

प्रातिपदिकप्रकृतिकाः प्रत्ययाः । तिङ्कृदिति द्विविधाधातुप्रकृतिकाः । तत्र सुपः किं लक्षणाः कतिविधाः किमर्था श्चेति प्रस्तूयते ।

स्वौजस्सूत्रेण विहिताः प्रत्ययाः सप्तधासुपः ।
त्रिभि स्त्रिभि र्लवै स्तेषामन्वर्थाः प्रथमादयः ॥ १ ॥

" स्वौजसमौट्छसि "त्यादिसूत्रेण प्रातिपदिका त्परे विहिता एकविंशति प्रत्यया आद्यन्तवर्णग्रहणेन सुप इति संज्ञायन्ते । तेषां समुदायापन्नानां लवा विभक्तयः प्रथमाद्वितीयादिखण्डत्वयोगात प्रथमाविभक्ति रिति क्रमेण सप्तधा व्यवह्रियन्ते । एकैकस्यच लव स्या वयवा स्त्रिशोभवन्ति ।

ऐक्यद्वित्वबहुत्वानां क्रमेण प्रतिपादकाः ।
विभक्तीना मवयवाः प्रत्येकं स्यु स्त्रयस्त्रयः ॥२॥

एकैकस्या विभक्ते स्त्रीणि त्रीणि वचनानि । तत्राद्य मेकत्वं द्वितीयं द्वित्वं तृतीयं बहुत्व मभिधत्ते ।

सप्तकानुगताधर्मा नलभ्यन्ते यतस्त्रयः ।
अतःसुत्वादिनैतेषां संख्यावाचकतेष्यते ॥ ३ ॥

तेषां वचनाना मेकत्वादिविशेषवाचकत्वं सुत्वादिना, नतु स्वमूटाप्रभृतिसप्तकानुगतधर्मेण, तस्यानुगतस्या नतिप्रसक्तस्य लवो नियमतो ज्ञायमानस्य दुर्लभत्वात । एकवचनादि परिभाषाविशेष विषयत्वाज्ञानेपि स्वादिश्रवणमात्रा देकत्वावगमात् ।

अन्यधर्मं पुरस्कृत्य वाचकत्वग्रहं प्रति ।
अन्यधर्मावलीढस्य नाकांक्षा सहकारिणी ॥ ४ ॥

प्रकृतिस्वादिसप्तक तिबादिषट्कसाधारणैक वचनत्वाव च्छिन्नस्यै कत्ववाचकत्वग्रहजनितेन पदार्थस्मरणेन जन्यमानामन्वय

बुद्धिं नसुत्वावच्छेदेन प्रातिपदिकसाकांक्षत्वबुद्धि र्जनयितुमर्हति । यद्धर्मसामानाधिकरण्येनाकांक्षाप्रतिसन्धानं तद्धर्मावच्छिन्न वृत्तिज्ञान जनितपदार्थोपस्थितेरेव शाब्दबोधांगत्वात । अन्यथा सुत्वावच्छेदेनै कत्ववाचकत्वाभावग्रहदशायां सुबन्तरजनित एकत्वस्मरणे घट एक इति शाब्दजननप्रसंगात। सुत्वावच्छेदेनैकवचनत्वादे र्ग्रहस्यापि कारणत्वाभ्युपगमे गौरवात् ।

ननु व्याकरणेन सुत्वाद्यवच्छेदेनैकवचनत्वं ग्राहितमिति श्रोत्रोपस्थितेन सुत्वेन सा वेकवचनत्वं गृह्यते , तत्सा-मानाधिकरण्येन घटपदाकांक्षा . तदवच्छिन्नवृत्ति ज्ञानेन चैकत्वं स्मार्यइति सूपपादो घटएक इत्यन्वयबोध इतिचेत; – एवं सत्यमरमारभ्य देवतापर्यंतं कोशपठितानां नाम्नां तद्गणपठितत्वस्वरूपा नुगतपुरस्कारेणैव देवतावाचकत्वसंभवात् पर्यायाणां प्रत्येक वाच कत्वानुपपत्तिः। कोशकारपुरुषपठितत्वादि ननित्यसंकेतविषयो भवितु मर्हतीतिचेत? पाणिनिपरिभाषितत्वादिरपि न तथास्यात ।

नन्वमरादौ संकेतग्राहकेण कोशेन षड्विंशतिवृत्तिधर्मो नोप स्थापितः, यदवच्छेदेन देवतावाचकत्वं प्रतीयेत, "द्व्येकयोर्द्विवचनैकव-चने"इतिसूत्रंतु एकवचनपरिभाषाप्रवृत्तिनिमित्तानुगतधर्मावच्छेदेनएकत्वं बोधयतीतिचेत्? स्यादेवं, यदिपाणिनीयपरिभाषाया अनुगतेन निमि त्तेनप्रवृतिः स्यात, नत्वेवम् । तथाहि – प्रत्याहारा स्तावत्श्रूयमाणाः प्रत्येकवर्णवृत्तिभि रत्वादिभिरेव धर्मैरकारादिषु प्रवर्तंते । नतु तावदन्यतमत्वादिभिः । अत एव अक् इक् प्रभृतिभिः शब्दै रुपस्थापिता अको दीर्घप्लुतावपि बोधयंति। तेन कुमारी आस्ते इत्यादौ अचिपरे इको यकारोयुज्यते । तथाहि – इक्शब्देन इत्वेन ह्रस्वमात्रवृत्तिधर्मेणोपस्थितइः , तेनचाष्टादशभेदभिन्नस्वर साधारणजात्यवच्छिन्नवाचकेन दीर्घादयोपि स्मार्यंते, द्विरेफपदस्मारितेन

भ्रमरपदेनेव षट्चरणः ! इक्पदेनैववा स्ववाच्यवाच्यत्वरूपा जहल्लक्षणया ऽष्टादशभेदा उपस्थाप्यन्ते , इक्पदस्यहृस्वभिन्ने ऽपारिभाषितत्वात् । "आदिरन्त्येन सहेते"त्यनेन माहेश्वरसूत्रपरिपठित हृस्वानामेव प्रत्याहार प्रत्याय्यत्व व्युत्पादनात् । " अणुदित्सवर्णस्यचा प्रत्यय " इत्यनेनापि अत्वाद्यसाधारणधर्मै रणां सवर्णग्राहकत्व मुच्यते । अन्यथा हृस्वशब्दोपात्ताना मणामपि तथात्वप्रसंगात् । नच श्रोत्रोपस्थिताना मणामेव सवर्णग्राहकत्वं, नतु शब्दांतरस्मृतानामिति वाच्यं, इक्पदोपात्ताना मप्यतथात्वप्रसंगात । नच इ.ारोपस्थिति कालेष्टादशसाधारणजाते रप्युपस्थितत्वात् तया सामान्यलक्षणया ऽष्टादशाना मप्युपस्थितिः, नतु हृस्वाना मष्टादशसु शक्तिरित्यत्राणुदित्सूत्रस्य तात्पर्यमितिवाच्यं, एवं सति वृत्त्या पदानुस्थितेषु तेषु षष्ठ्यर्थानन्वयप्रसंगात् । इक् प्रभृतिना प्रत्याहारेण हृस्वमात्रवृत्ति धर्मावच्छिन्नोपस्थित्य सम्भवात् । ननु माहेश्वरसूत्रपठितेषु हृस्वेषु दीर्घादिसाधारण्या अपि जातेः श्रोत्रोपस्थितत्वा त्तस्याएव प्रत्येकव. र्णाना मणादिप्रत्याहाराणांच प्रवृत्तिनिमित्ततावोधकं अणुदित्सवर्ण स्यचेति सूत्रं नियमार्थं, नानाजातीनां श्रोत्रोपस्थिततया तदेकतर परिच्छेदकत्वादिति चेत् ? एवमपि श्रोत्रानुपस्थितानि तावदन्यतम त्वादीन्यादाय परिभाषाप्रवृत्ते रसम्भवात् । एवं सुप्प्रत्याहारोपि सुत्वादि नैवबोधकः, नतु निमित्तान्तरेण । नितरां श्रोत्रोपस्थितान् वर्णान् तच्छब्देन परामृष्य " तान्येकवचन द्विवचन बहुवचनान्येकश ' इत्यधिकृत्य "सुप" इतिसूत्रं प्रत्येकधर्मावच्छिन्नाना मेकवचनादिपद वाच्यतां ग्राहयति । येन रूपेणैकवचनपरिभाषाविषयत्वग्रह स्तद्रूपेण एकवचनशब्दा दुपस्थिते स्वैकत्ववाचकत्वग्राहकं " द्व्येकयो द्विवचनैकवचने " इति सूत्रं कदाचि देकवचनपरिभाषाप्रवृत्तिनिमित्तत्वेन स्वरूपसतोपलक्षणेना नुगतीकृतेषु सुत्वादिषु युगपदेव वाचकतावच्छेदकत्वं ग्राहयेदिति न वाक्यभेदः । वस्तुतो द्व्येक

यो रित्यतिदेशवाक्य मेकवचनपरिभाषितत्वोपलक्षिते धर्मिण्येकत्व वाच्यकतां बोधयतु एकवचनपरिभाषा विषयः सुरिति सुत्वावच्छेदे नोपलक्षणधर्मवत्ताग्रहसहकारेण सुत्वावच्छेदेनैकत्ववाचकता सुपमाप यति । न तु साक्षात् शक्तता वच्छेदकधर्मपरिच्छेदकम् । अत एक वचनपरिभाषाणा मननुगतवृत्ति निमित्तकत्वेपि न क्षतिः ।

एकत्व मेकवचनैः सदृशान्तरवर्जितम् ।
आख्यायते नहि द्वाभ्यां पशुभ्या मिज्यते शिवः ॥ ५ ॥

पशुना रुद्रं यजत इत्यादौ कर्मार्थतृतीयैकवचनेन स जातीयनिष्ठान्योन्याभावप्रतियोगितानवच्छेदक मेकत्व मुच्यते, सा- जात्यं च यागव्यक्तिकर्मपशुत्वेन । तथा च यस्यां यागव्यक्तौ यत् पशुकर्मत्वस्यान्वयः तत्र पशौ तद्यागव्यक्तिकर्मपशुनिष्ठान्योन्याभाव प्रतियोगितानवच्छेदकैकत्व मेकवचनार्थः । तेन न द्विपशुकर्मको रुद्रसम्प्रदानको यागः । यागव्यक्तिकर्मपशुत्वव्यापकैकत्वव्यक्ति निरूपितसमवायसंसर्गेणैकत्वं पशौ प्रकार इति तत्वम् ।

एवं द्वित्वं सजातीयान्तरशून्यं विभक्तितः ।
प्रतीयते सरस्वत्या न मेषै र्यजनं त्रिभिः ॥ ६ ॥

द्विवचनै रपि सजातीयनिष्ठान्योन्याभावप्रतियोगितानवच्छेदक मेव द्वित्वं प्रत्यायते । अन्यथा "सारस्वतौ मेषौ" भवत इत्यत्र त्रिभि र्मेषैः सरस्वतीदेवताकयागस्य विध्यर्थाबाधे क्रतुवैगुण्यानाप त्तेः । सिद्धान्ते तु मेषकर्तृकभावनाक्षिप्तायां यस्यां भावनायां सर स्वतीदेवताकयो र्मेषयोः कर्मतयान्वयः तद्भावनाकर्मपशुनिष्ठान्योन्या भावप्रतियोगितानवच्छेदकं द्वित्वं द्विवचनविधेयं बहुपशुकर्मकयाग भावनायां विरुध्यत इति द्वाभ्यां क्रतुषाड्गुण्यं, न तु त्रिभिः ।

जसादिभिस्तु त्रित्वादि बहुत्वत्वेन बोध्यते ।
गच्छन्ति वाहा इत्युक्ते कतीति प्रश्नदर्शनात् ॥ ७ ॥

बहुवचनानां तु बहुत्वत्वजात्या प्रवृत्तिनिमित्तेन त्रित्वादौ शक्तिः, नतु त्रित्वत्वादिना, नानार्थतापत्तेः । त्रित्वादीनां ताद्रूप्येण बहुवचना द्बोधोपगमे वाहा गच्छन्तीत्युक्ते कतीति प्रश्नानुपपत्तेः । ज्ञाते संख्या त्वा वान्तरत्रित्वत्वादिधर्मे संख्यात्वावान्तरधर्मजिज्ञासाविच्छेदात् , प्रयोक्तृपुरुषजिज्ञासाविषयसंख्यात्वावान्तरधर्मव द्विशिष्टशक्तस्य कति शब्दस्य निर्विषयकत्वेनाबोधकत्वात् ।

प्रायेण प्रकृते रर्थे सुबर्थवचनान्वयः ।
क्वचि त्तदेकदेशेपि तात्पर्या दनुशासनत् ॥ ८ ॥

द्रव्याणि गुणाः कर्माणीत्यादौ बहुत्वस्य, सौमित्रीवासुदेवावित्यादौ द्वित्वस्य, गगनं भगवा नित्यादौ एकत्वस्य, सुपास्मारितस्य वचनार्थ संख्यायाः प्रकृतिमुख्यार्थ एवान्वयः; नतु तदेकदेशे, द्रव्यत्वादौ बहुत्वस्य सुमित्रापुत्रत्वादौ द्वित्वस्य शब्दस्वरूपे गगनत्वे समग्रैश्वर्यादिस्वरूपे भगवत्त्वे चैकत्वस्यान्वयायोग्यत्वात् । प्रायिकं चेदं, तेन यदादिशंति पूज्यपादा इत्यादौ पूजायामनिर्धारित विशेषस्य "वामेबहुकुशान् कृत्वादक्षि णेतु कुशत्रय"मित्यादौ बहुपदार्थैकदेशे बहुत्वत्वावच्छिन्नत्रित्वे बहुत्वत्वेन त्रित्वपर्यवसितस्य बहुत्वस्य, "स्वरव्ययं स्वर्गनाक त्रिदिवत्रिदशालया" इत्यादौ तत्पद लाक्षणिकस्वर्गादि पदार्थैदेशे स्वर्गपदादौ चतुष्ट्वादि परिणतस्य बहुत्वस्यान्वयेपि नक्षतिः । अतएव वामकरेण नव- हुकुशधारणम् । कोशेच स्वर्गादिपदं न स्वर्गादि पदस्वरूपपरम् , वाच्य वाचकभावस्य लेशतोप्य प्राप्तेः कोशत्वासंभवात , स्वःपदवाच्यं स्वर्गादिपदवाच्यैरभिन्न मिति बोधस्यैवा भ्युपेयत्वात् । अतएव शब्दानां पर्यायत्वम प्यर्थतः, स्वर्गनाकादीनांतु भेदाभेदौदासीन्येनद्वंद्वः समासः। अतएव " भेदाख्यानायनद्वंद्व " इति प्राथमिकी प्रतिज्ञाप्येता दृशस्थल उपयुज्यते । स्वरूपपरतातु तत्रैव, यत्र वाचकतावाचिशब्दांतरं श्रूयते " मृगे कुरंगवातायुहरिणाजिनयोनयः । " " विनायके विघ्नराज द्वैमातु

रगणाधिपाः । "" ऐरावतेभ्रमातंगै रावणाभ्रमुवल्लभाः ।" इत्यादौ। "उर्वैश्यप्सरसः" "सीतारामदारा" इत्यादौ अनन्वितमेव बहुत्वं, पदानुपस्थितेषु गणेषु तदन्वयइति मतस्यात्यन्तमसम्भवदुक्तिकत्वात् । पुष्पवन्तौ नासत्याविस्यादौ तात्पर्यवशा द्व्यक्त्योर्जात्यो र्वाद्वित्वान्वयः । साधर्म्य वैधर्म्याभ्यां तत्वज्ञान मित्यत्र साधर्म्यवैधर्म्यत्वयोः, नीळघटयोरभेद इत्यादौ नीलत्वघटत्वयोः । गोदौग्रामः इत्यादौ त्व नन्वितएव द्विवचनार्थः, नित्यं द्विवचनान्तत्वेनानुशिष्ट गोदपदार्थे तदेकदेशेच द्वित्वविशिष्टे द्वित्वेच द्वित्वस्यान्वयायोगात् ।

"पशुना रुद्रं यजेत, वायव्यं श्वेतमाळभेते" त्यादौ पश्वादौ, वेदाः प्रमाण मित्यादौ पदार्थैकदेशे प्रमाणत्वएव तात्पर्यवशा देक वचनार्थस्यान्वयः । सम्पन्नोव्रीहिः सम्पन्नाव्रीहय इत्यादौ " जात्याख्याया मेकस्मिन् बहुवचन मन्यतरस्या " मिति सूत्रेणानु शिष्टैक वचनस्य बहुवचनस्य चार्थ एकत्वं जातावेव, " विंशत्याद्याः सदैकत्वे संख्याः संख्येय संख्ययो "रिति कोशेनानुशिष्टस्य विंशतिर्ब्राह्मणा इत्यादा वेक वचनस्यार्थः संख्यायामेव पदार्थैकदेशेऽन्वेति । यत्रतु विंश तित्व संख्यायामेव बहुत्वान्वयो विवक्षित स्तत्र बहुवचनमपि प्रमाणं । "असंख्याताः सहस्राणि " " येरुद्राअधिभूम्या " मित्याम्नाये, "तिस्रः कोट्योर्धकोटीच तीर्थानां वायुरब्रवी" दितिपुराणे, " किमेकयैव विंशत्या बाहुभिस्त्वंविकत्थसे । पश्यरावणनाराचैश्छिनत्ति कतिविंशती " रिति लोकेच, प्रयोगदर्शनात् । "तेशतानिवयंचे" त्यत्र शतशब्दोऽनेकपर्यायः । तदर्थैकदेशे नेकत्वेदशत्वादौ बहुत्वान्वयः ।

अविवक्षानन्वयो वा संख्याया यत्र तादृशे ।
वाक्येपि प्रातिपदिका द्धातोर्वैकवचः स्मृतम् ॥ ९ ॥

यत्र ब्राह्मणेन हतः पतति, गृहं सम्मार्ष्टीत्यादा वुद्देश्यगता संख्या न विवक्षिता, यत्रवा चैत्रेणस्थीयते इत्यादा वाख्यातोपात्त

संख्यान्वय योग्य प्रथमान्त पदार्थो भावनान्वयी नदृश्यते, तत्रापि ब्राह्मणगृहादि प्रातिपदिकात् स्थाधातो श्चैकवचन प्रयोगः प्रायेणस्सुन्दरः विभक्तिर्विनाकृतायाः प्रकृतेर साधुतया करणकर्म भावनार्थाना दाय तृतीया द्वितीयातिङां प्रयोगस्यावश्यकत्वे प्रथमोपात्तस्य एकवचन प्रथम पुरुषादे स्त्यागायोगात् । उष्ट्रासिका आस्यन्ते हतशायकाः शय्यन्त इत्यादावपि भाष्यकार प्रयोग ज्ञापितमेव बहुवचनानां साधुत्वम् , उष्ट्रासन सदृशमासन मुष्ट्रासिका, हतशयन सदृशं शयनं हतशायिका, तयो स्तादात्म्येन धात्वर्थान्वितयोः कर्तृ कर्मणो र्भावनान्वयिनः प्रथमांतार्थस्यवाऽभावेन तिङुपात्तस्यच बहुत्वस्यानन्वितत्वात् । एक वचन मित्येवसूत्रं, नत्वेकस्मि न्नेकवचनमिति । तेनैकत्वाद्य विवक्षा यामपि सामान्यतः प्राप्तमेकवचनं द्व्येकयो र्द्विवचनैकवचन इति विशेष सूत्रेण द्वित्व विवक्षायां बाध्यत इत्यपि कल्पयन्ति ।

ननु गगनपदार्थैकदेशस्य शब्दस्य बहुत्वविवक्षायां गगनानीति प्रयोग प्रसंगः, यदिच सुबुपात्तं बहुत्वं न पदार्थैक देशान्वयीति मतं तदा कथं वामे बहून् कृत्वेत्यत्र बहुत्वे बहुत्वान्वयः? अन्यथा नवकुशधारणानुपपत्तेः ; धर्मिणिच बहुत्व विशिष्टे नबहुत्वान्वयः, घटो घट इतिवन्निराकांक्षत्वात् , कथंवा सहस्राणि इत्यादौ सहस्रत्वे, पूज्यपादा इत्यत्र पूजायांवा बहुत्वान्वयः? कथं वा द्वंद्वपदार्थैक देशेषु स्वर्गादिष्वितिचे दुच्यते-

उपसर्जनतां दैवात् पदार्थो यत्र गच्छति ।
तस्मि न्नर्थैकदेशेपि बहुत्वस्यान्वय स्सुपाम् ॥ १० ॥

गगनपदस्य शब्दोन मुख्यार्थः, बहुशब्दस्यतु संख्यैव मुख्यार्थः संख्येये भक्तिः । अतएव "बहुषु बहुवचन" मिति संख्यायामेव तत्प्रयोगः । बहुवचनस्य संख्येय वाचकतायाः सर्व तंत्र सिद्धत्वात् । एवं विंशत्यादि शब्दा अपि संख्यामेव प्राधान्येनाभिदधते । द्रव्य

वाचि शब्द समानाधिकरणास्तु बह्वादयो लक्ष्यार्थोपसर्जनीभूतेपि स्वशक्यार्थे सुवर्थबहुत्वान्वयं बोधयितुमीशते । एवं कृदर्थोपसर्जनीभूते " स्वं रूपं शब्दस्या शब्दसंज्ञे " त्यादि आहित संगतिके स्वर्ग शब्द स्वरूपादौ च बहुवचनार्थान्वयः ।

गुरुत्वगुणयो रैक्यं तादात्म्यं द्रव्य तेजसोः ।
गुणसौरभगन्धाना मभेद इति दर्शनात् ॥ ११ ॥
द्वन्द्व गर्भपदार्थैकदेशे द्वित्वबहुत्वयोः ।
अन्वयोयुज्यते किंवा साधुत्वाय विभक्तयः ॥ १२ ॥

गुणसौरभगन्धाना मभेद इत्यत्र नित्य मेवोपसर्जनीभूतासु जातिषु यदि बहुत्वान्वय स्तदा द्वंद्वे भिन्नैव व्युत्पत्तिः । नचेदापोगृहाः सिकतावर्षाःसुमनसोऽप्सरसोलाजा इत्यादाविव साधुत्वार्थकमनन्वित स्वार्थमेवेदृशस्थले बहुवचनम् ।

एकत्वं द्वित्वमप्यर्थो जसादेरनुशासनात् ।
आहैकवचनं द्वित्व माह द्वि वचनं बहु ॥ १३ ॥

यत्र जात्यन्वितं एकत्वं विवक्षितं तत्र बहुवचन मप्यानुशासनिकं । साधुसम्पन्नो व्रीहिः सम्पन्ना व्रीहय इत्युभयप्रयोगदर्शनात् । सम्पन्नपदादीनान्तु बहुवचनं विशेष्यपारतन्त्र्यप्रयुक्तं । एवं अहं ब्रवी म्यावां ब्रुव इत्यर्थे अन्यतरस्यां वयं ब्रूमइति प्रयोगात् अस्मदर्थान्वित मेकत्वं द्वित्वंच, यूयं गुरवइत्यत्र युष्मदर्थान्वित मेकत्वं बहुवचनार्थः । पुनर्वसु पुनर्वसूवा विशाखा विशाखेवा नक्षत्रमिति छन्दसिद्वित्व मेक वचनार्थः । लोकेतु पुनर्वसु विशाखा शब्दौ नित्य द्विवचनान्तौ पुष्पवन्त नासत्यपक्ववत् । तिष्यश्च पुनर्वसू चेत्यादिविग्रहे तिष्य पुनर्वसू सिद्धया पुनर्वसू इत्यादि द्वंद्वस्य द्विवचनं बहुत्व मभिधत्ते, "तिष्य पुनर्वस्वो र्नक्षत्रद्वंद्वे बहुवचनस्य द्विवचनं नित्य " मित्यनुशा-

सनात् । अत्र बहुवचनस्य विशिष्यो पादानात् एतादृश स्थले तिष्य पुनर्वस्विति कर्लौवैकवचनांत प्रयोगो प्यस्तीत्यवगम्यते । तेनज्ञायते सर्वो द्वन्द्वो विभाषैकव द्भवतीति, तत्र तिष्य पुनर्वस्विति एकवचन मेव, नतु तिष्य पुनर्वसुनी इति द्विवचन मिति काशिका ।

नन्वेकत्व विशिष्ट घटादौ प्रातिपदिकानामेव शक्तिरस्तु, सन्तु व्यंजकान्ये कवचनादीनीति चेत्? उच्यते-

गुरुत्वा विनिगम्यत्व शक्तिग्राहकविप्लवैः ।
अप्रसिद्ध्याच शक्यस्य नसंख्याव्यंजकाः सुपः ॥ १४ ॥

सुप्रत्ययांत घट पदत्वादिना वाचकताया मेकत्व विशिष्ट घटत्वादिना वाच्यतायांच गौरवं शरीरतः । घट पदोत्तर सुत्वादिना वाचकत्व सम्भवेन एकतर परिच्छेदक विनिगमकालाभः । "द्व्येकयो र्द्विवचनैकवचने" इति व्याकरणस्य वाक्यार्थ बुद्धेः पूर्व मेकत्वादि विशिष्ट घटाप्रसिद्ध्या तत्र प्रमाणांतरस्यच शक्ति ग्राहकस्य व्याकोपः । सुतरांच गगनानि ब्रह्माणीत्यादौ बहुत्व विशिष्ट गगनादे र्बहुवचनांत गगनादि पद शक्यस्या प्रसिद्धिरिति विभक्तीना मेकत्वाद्यर्थ इत्येवोचितम् , नतु सुपो व्यंजकत्वम् ।

इति वचनार्थ विवरणम् ।

---

विभक्तिः प्रथमा तेषु स्वौजसः प्रत्यया स्त्रयः ।
आभिमुख्यं तदर्थ स्तदभीष्ट प्रत्ययात्मकम् ॥ १ ॥

सुपां मध्ये सु औ जस् इति त्रयः प्रत्ययाः प्रथमाविभक्ति रित्यन्वर्था प्राचीनानां तदनुसारिणां पाणिनीयानां च संज्ञा । शक्तिस्तु सत्वादिनैव, उकारजकारयोरनुबन्धयोः प्रयोगे नित्यमश्रूयमाणयो

वन्विकानन्तर्भावात् । तस्याः प्रथमायाः ब्रह्मन् पालय चण्डमुण्डौगच्छतं देवाः प्रसीदत इत्यादा वाभिमुख्यमर्थः । तच्चाभीष्टज्ञानस्वरूपं । तत्र समवेत समवायिभावेन प्रातिपदिकार्थस्याभीष्टज्ञाने, तस्य च विषय तया एकत्वत्कर्तृकाशंसाविषयपालनक्रियाया माशंसाविषयपालनकर्त यैकत्र वा ख्यातोपात्ते कर्त्तरिकृतौ वा तादात्म्येनाधाराधेयभावेनाध्या-हृतत्वंपदार्थस्यविशेषणतया विशेष्यतयावान्वयः, युष्मदिसमानाधि करणे मध्यमपुरुषविधानात् , सम्बोधनप्रथमान्तार्थेन कर्तुरन्वयासंभ वात् । तथा च ब्रह्मसमवेताभीष्टज्ञानविषयः एकत्व त्कर्तृकाशंसाविषय पालनक्रियेति आशंसाविषयपालनकर्तैकत्त्वमिति वा ब्रह्मन्पालयेत्यत्र वाक्यार्थबोधः । सम्बोधनप्रथमायास्तु ज्ञानमिच्छाचखण्डशोर्थः । ज्ञानं विशिष्टवाक्यार्थत्वावच्छिन्नविषतयाक्रियाया, मिच्छा च प्रातिपदिकार्थ समवेत वाक्यार्थज्ञानत्वावच्छिन्नविषयतया ज्ञानेन्वेति । तेन वाक्यार्थ विषयक ज्ञानसमवायितयोद्देश्यत्वस्वरूपं सम्बोध्यत्वमर्थतः प्रतिपाद्य पुरुषेप्रतीयते । सम्बोध्यत्वंचैकवचन सहकृत प्रातिपदिकेन एकत्व विशिष्टस्वप्रवृत्तिनिमित्तधर्मावच्छेदेन बोध्यते । यद्रूपावच्छेदेनच सम्बोध्यत्वं प्रथमाप्रत्याय्यं तद्रूपविशिष्टमेव युष्मदा परामृष्यते , सम्बोध्यतावच्छेदकत्वोपलक्षितधर्मविशिष्ट एव युष्मत्पदशक्तेः । अत एव ब्राह्मणा स्त्वं प्रसीद त्वां प्रणमामि त्वया भुज्यता मित्यादयो न प्रयोगाः । बहुब्राह्मणत्वावच्छिन्नाया एव सम्बोध्यतायाः प्रथमयो पात्तत्वेन तद्रूपावच्छिन्नस्यैव युष्मदापरामर्शे तत्रैकवचनस्यानान्वितार्थ कत्वा दसाधुत्वा च्च । एवं यत्पदगर्भवाक्येन यद्रूपविशिष्टस्योप स्थिति स्तद्रूपविशिष्टपरामर्शिनि तच्छब्देपि वचनैक्यव्यवस्था द्रष्टव्या, ये पचन्ति तमानयेत्यप्रयोगात् । यच्छब्दगर्भवाक्येन बहुत्वविशिष्ट पाककर्तृमनुष्यत्वविशिष्टस्योपस्थिततया तद्रूपविशिष्टपरामर्शितच्छब्दार्थे एकवचनस्यार्थानन्वयात् । हे चण्ड हे मुण्ड बलै र्बहुलैः परिवारितौ तत्र गच्छन्तं, गत्वाच सासमानीयतां लघु, इत्यादा वेकत्वविशिष्ट

चण्डत्वाद्यवच्छेदेन प्रथमया सम्बोध्यत्वबोधनेपि तादृशरूपद्वयावच्छिन्न परामर्शिनोपि युष्मच्छब्दा द्विवचनं नानुपपन्नं, एकघटैकपटावित्यादि द्वन्द्वसमास इव प्रकृत्यर्थतावच्छेदकनानात्वे तावत्समानाधिकरण संख्याया एव वचनप्रतिपाद्यत्वात् । अत एव "यश्च मूढतमो लोके यश्च बुद्धेः परं गतः । ता वुभौ सुख मेधेते सीदत्यन्तरितो जनः" इत्यादौ यच्छब्दगर्भवाक्येनैकत्वविशिष्टमूढतमादे रुपस्थापितत्वे तदुभयपरामर्शिन स्तच्छब्दा द्विवचन मप्युपपन्नम् । "हे सौमित्रे सखा य स्ते निर्विशेष स्त्वया गुहः । युवांगत्वा नदी मेनां शीतमान यतं पयः ॥" इत्यत्र यच्छब्दाकांक्षापरिपूरणक्षमेन तच्छब्देनयुष्मद् एक शेषे स्मृत तच्छब्दार्थं युष्मल्लक्ष्यं वादाय द्विवचनोपपत्तिः । "जानीहि नाथ हीनोस्मी" त्यादौ अप्रामाण्यशंकाशून्यनिश्चयोपि ज्ञाधातो रर्थः, अन्यथा मदीयदीनभावस्वरूपवाक्यार्थे प्रथमार्थनाथसमवेताभीष्टज्ञानस्य विषयतयान्वयेन विवक्षितार्थनिष्पत्तौ जानीहीत्यस्य पौनरुक्त्यप्रसंगात् ।

यत्तु - नाथपालयेत्यादौ सम्बोधन प्रथमान्तपदार्थ एव पालन कृत्यन्वयइति । तदपिन, आभिमुख्ये गुणीभूते प्रथमान्तार्थे आख्याता र्थान्वयायोगात् । अन्यथा नारायणइव नरोगच्छतीत्यादौ नारायणेपि गमन कर्तृत्वान्वयप्रसंगात् । युष्मदाख्यातयो राकांक्षारूपसामानाधि करण्यं विना मध्यमपुरुषस्या साधुत्वाच्च । नच युष्मदः स्थानिन्यपि मध्यमपुरुषोनुशिष्यते, युष्मदः स्थानित्वं युष्म त्पर्यायसम्बोधन पदप्रयोगे प्युपपद्यतइतिवाच्यं; भवच्छब्द सामानाधिकरण्येपि तथात्व प्रसंगात् ।

स्यादेतत्, यदि सम्बोध्यः पुरुषो ज्ञाने समवेतत्वेन विशेषणं, विषयतयाचेच्छा, तच्च ज्ञानं वाक्ये प्रधानतया प्रतिपाद्यमानभावना यां क्रियायां प्रथमान्तार्थेवान्वेति; तदा सम्बोध्यवृत्तिवाक्यार्थज्ञानस्य सिद्धत्वनिश्चयदशायां सम्बोध्यवृत्तिवाक्यार्थज्ञानस्य वाक्याजन्यत्वनिश्चय दशायांच चैत्रत्वं गच्छेत्यादिवाक्य प्रयोगापत्तिः, भाविभूतपुरुषान्त

रीयेच्छाविषयत्वस्य चैत्रीयवाक्यार्थज्ञाने ऽबाधितत्वात् । अगृहीतपद संकेतं म्लेच्छमुद्दिश्यार्यैः प्रयुज्यमानस्य शृंगापसरेत्यादिवाक्यस्य शक्तिभ्रमाजन्यत्वेनोपहास्यत्वाभाव प्रसंगाच्च । तत्कालीन तत्पुरुषीये च्छाविषयत्वस्य तद्वाक्यजन्यत्वस्यच ज्ञानेप्रवेशे संबुद्धिपद शक्त्यानन्त्यं दुर्ग्रहत्वंचस्यादितिचेत ? उच्यते-

यथायुष्मत्पदादीनां कालपुंवाक्यभेदतः ।
प्रवृत्तयो नभिद्यन्ते प्रथमायान्तथैवताः ॥ २ ॥

कालपुरुषान्तरीयेच्छाविषय प्रमाणान्तरजन्यवाक्यार्थबुद्धि सम वायितावच्छेदक धर्मवति म्लेच्छे युष्मच्छब्दस्यार्यैः शक्तिभ्रमं विना ऽप्रयोगाद्यथाविशिष्य तत्तत्पदानां तत्तत्पदप्रयोगजनकेच्छाविषय तत्त त्पदजन्य वाक्यार्थबुद्धिसमवायित्वं तदवच्छेदकत्वं वा प्रवृत्ति निमित्तं, तदनुगमकं वा साधारणधर्मपुरस्कारेण वक्ष्यमाणरीत्या गृह्यतइति ना ननुगमः, तथा सम्बुद्धिप्रथमाया अपिशक्तिः कालपुरुष वाक्यविशेषोपलक्षिताभीष्टज्ञाने नाननुगममावहतीति व्युत्पादयिष्यते ।

ननु तथापि " अखण्डशक्तिनिर्भिन्ने वत्से जहतिचेतनाम् । हताश राम कस्यार्थे दग्धजीवितमिच्छसी " इत्यादौ वक्तरिसम्बोध्यत्वम नुपपन्नं, तदाहि तस्य पुंसो वाक्यार्थज्ञानस्यासत्त्वे वाक्यप्रयोगोनुपपन्नः, सत्वेतु तत्रेच्छासिद्धेविषये वाक्यजन्योवाक्यार्थबोधश्च न सम्भवतीति प्रथमार्थबाध इति चेत ? उच्यते,

प्रमाणान्तरनिष्पन्न वाक्यार्थज्ञानजन्मना ।
वाक्येन जन्याभीष्टाधी र्वक्तर्यपि न बाधिता ॥ ३ ॥

प्रमाणान्तरजन्यायां वाक्यार्थबुद्धौ सत्यामपि वाक्यजन्यवाक्यार्थ बुद्धित्वावच्छेदेनेच्छा नानुपपन्नाः, श्रवणसिद्धावपि मननेच्छावत् । सिद्धिस्तु शाब्दबुद्धिम्प्रति न प्रतिबन्धिका । प्रतिबन्धिका चेत् अस

स्यामेव शाब्दबोधेच्छायामिति वक्तुरपि स्ववाक्यजनिताभीष्टवाक्यार्थबुद्धिसमवायितया सम्बोध्यत्व मबाधितमिति ।

अचेतनेऽपि सम्बुद्धिप्रथमा या प्रयुज्यते ।
तस्या स्तुल्या गति स्तेषु निर्दिष्टे युष्मदादिभिः ॥ ४ ॥

"अविहितरत्नां लक्ष्मीमेतान् त्यजाम्बरादपान् हृदय हतया किं ते चिन्तामणेरपि चिन्तया । जठरदहनज्वालाशान्त्यै यदि स्फुरमीत द्रास्त्वपि लुरुदधेरौर्व निर्गमयेश्शुरचर्चुर्व" इत्यादाव चेतनस्य हृदयस्य सम्बोध्यत्वबाधेऽपि प्रथमाप्रयोगो युष्मच्छब्द मध्यमपुरुषादिप्रयोगेन तुल्ययोगक्षेम श्चेतनक्षेत्रज्ञतादात्म्यारोपेण सम्बोध्यत्वभ्रमजनकतया गौणवृत्त्या ऽर्थान्तरप्रतिपादकतया वा समुन्नेयः । अत एव तुल्येप्रस्तुते तुल्यार्थस्याभिधान मप्रस्तुतप्रशंसाविशेषस्य लक्षण मुदाहरता काव्यप्रकाशकारेण " कस्त्वम्भोः कथयामि दैवहतकं शाखोटकं विद्धि मा" मित्यादा वकिञ्चनस्य किञ्चि दनुपकुर्वतो मनस्विनः प्रस्तुतस्य तादात्म्यारोपेण युष्मच्छब्दसम्बुद्धिमच्छब्दोत्तमपुरुषाणामर्थे शाखोटकाभेदेना ध्यवसितः प्रस्तुतोऽर्थः सम्बध्यत इत्युक्तम् । प्रस्तुतार्थस्य व्यंजनया लक्षणया वोपस्थिति रित्यन्यदेतत् । यत्र च व्यंजनया लभ्योऽर्थः प्रकृतवाक्यार्थे तादात्म्येना ध्यवसितः सन्नन्वयबोधे निविशते तत्र गुणीभूतव्यंग्य मेव, नाप्रस्तुतप्रशंसा । यथा – "आगत्य सम्प्रति वियोगविसंष्ठुलांगी मंभोजिनीं क्वचिदपि क्षपितत्रियामः । एतां प्रसादयति पश्य शनैः प्रभाते तन्वंगि पादपतनेन सहस्ररश्मिः ॥" । अत्र व्यंजनया वृत्त्या प्रतीतिपथ मवतरन्नायकयो र्वृत्तान्तो रविकमलिनीवृत्तान्ते तादात्म्येन गुणीभूय भासते । नतु प्राधान्येन, इशि कर्मत्वानुपपत्तेः । नापि ध्वनिविषयोऽयं वाक्यार्थबोधे पश्यत्यंश मपहाय, तथा सति खण्डितामान मपनिनीषतः सागसः प्रियस्याशंसां प्रतिपादयतो लोटोऽनुपपन्नत्वप्रसंगात् । नहि तदा तस्य मानापनोदनोपाया दन्य दाशास्यम् । नच रविकमलिनी

वृत्तान्तदर्शनं तदुपायः, रविकिरणपतनजनितकमलिनीकुसुमव्याकोश तादर्शनस्य कयापि विधया खण्डिताया मानत्यागाध्यवसाया जनकत्वात् । नायकप्रणिपातजनितमानिनीप्रसादाभेदेनावगतस्य दर्शनन्तु प्रियप्रणामप्रान्तो मान इति निश्चयद्वारा प्रभवति तस्याः प्रणयकोप भंगायेति विस्तरो रसमहार्णवे नुसन्धेयः ।

एकतिङ्वाक्य मित्युक्तं कात्यायनमहर्षिणा ।
सम्बोध्यत्वं क्रियाशेष स्तदर्थ इति शाब्दिकाः ॥५॥

समर्थसूत्रे " एकतिङ्वाक्य " मिति कात्यायनवाक्यम् । तत्र भाष्यकारेण ब्रूहि ब्रूहि देवदत्तेतिवाक्य मुदाहृतम् । तस्याय मभिसन्धिः, यदि न क्रियया सह सम्बोध्यत्वान्वयः, आख्यातसम्बोधनांतयो र्व्यपेक्षा न स्यात्, तदानिघातोनाम सर्वानुदात्त स्वरः देवदत्तपद आमन्त्रिते नयुज्येत, " आमन्त्रितस्ये " ति सूत्रेणा मन्त्रितप्रत्ययान्तानां पदात्पराणामेव निघातविधानात् । पदयोस्तु व्यपेक्षादिरूपसामर्थ्य विरहे पदसम्बन्धि नो विधेरप्रवृत्तेः समर्थः पदविधिरितिव्यवस्थापनात् । अतएव समानवाक्ये निघात युष्मदस्मदादेशाइतिपठन्ति । तयोर्व्यपेक्षातु सम्बोधनपदार्थस्य प्रधानीभूतायां क्रियायामन्वये सत्युपपद्यते । नचाख्याताथएव कर्तरि सम्बोधनप्रथमान्तार्थस्य तादात्म्येन सम्बोधनपदार्थस्य वा आश्रयाश्रयिभावेनान्वयोस्तु, एतावतैव चैकवाक्यतानिर्वाहइतिसाम्प्रतम्; मध्यमपुरुषार्थे युष्मदर्थातिरिक्तस्य तादात्म्येनान्वयायोगात् । देवदत्त व्रजानीत्यादावाख्यातोपात्ते कर्तरिसम्बोध्यत्वस्य बाधाच्च । यदुक्तं हरिणा – " सम्बोधनपदं यच्च तत्क्रियाया विशेषणं । व्रजानिदेवदत्तेति निघातोत्र तथासति । " इति । तस्मात्सम्बोध्यत्वं प्रातिपदिकं प्रति विशेष्यं, क्रियायान्तुविशेषणं; क्रियां विनाकृतं वाक्यमेव नास्तीति कात्यायनानुयायिनो वैयाकरणाः ।

एकतिङ्वाक्यविद्वेषि महाभाष्यानुसारिभिः ।
वाक्यबोध्ये प्रधानार्थे सम्बोध्यत्वान्वयो मतः ॥ ६ ॥

महाभाष्यकृत स्तावदेकतिङ्वाक्यमिति कात्यायनवाक्यं नानु मन्यन्ते । तेहि पश्यमृगोधावति जानीहि जगज्जगन्नाथाज्जायते इत्यादौ धावनदर्शनयो र्जनिज्ञानयोः कर्मकर्मिभावेन, अस्तिसाधवः सीदन्ति भवतिदुर्जनामोदन्ते इत्यादौ साधुसीदनसत्त्वयो र्मोदभवनयोश्च कर्तृक्रियाभावेन, अनुभवसिस्मरिष्यसि यजसे स्वर्गे भोक्ष्यसे इत्यादौ सिद्धसाध्यसमभिव्याहारस्थले त्वत्कर्तृकयो रनुभवस्मरणयो र्यागस्वर्गभोगयोश्च कार्यकारणभावेनान्वय मभ्युपगच्छन्तो बहुतिङन्तमप्येकं वाक्यमभ्युपगच्छन्ति । स्मरन्तिच – " सुबन्तं हि यथानेकं सुबन्तस्य विशेषणम् । तथा तिङन्तमप्याहु स्तिङन्तस्य विशेषणं ॥ " इति । अत एव तिङन्तभिन्नात् परं तिङन्तं निहन्यतइत्यर्थके " तिङ्ङ तिङ " इति सूत्रे अग्निमीळ इत्यादा वाख्यातातिळेशब्दस्य निघातस्वरंविदधति पचति पश्येति वाक्ये पश्येत्यस्य तद्वारणार्थं पूर्वपदे तिङ्पर्युदासाया तिङइति प्रयुक्तम् । अन्यथा ख्यातयोः सामर्थ्याभावादेव पदविधे रप्रसक्तौ तदानर्थक्यं स्यात् । नच सुप्सहित तिङ् वाक्यमिति युज्यते, " शशीदिवसधूसरो विगतयौवनाकामिनी सरोविगतवारिजं मुखमनक्षरं स्वाकृतेः । प्रभुर्धनपरायणः सततदुर्गतः सज्जनो नृपांगणगतः खलो मनसि सप्तशल्यानिमे ॥ " इत्यादौ सुबन्तच यस्य, पश्यपचतीत्यत्र तिङन्तद्वयस्य केवलस्यापि वाक्यत्वदर्शनात् । आख्यातपदंविना पदान्तरसहितसकलपरिकरमपि मूकतयावतिष्ठत इति कात्यायनप्रलापस्त्वाज्ञामात्रम् । व्युत्पत्तिभेदेन कस्यचि दाख्यातार्थः कस्यचित् प्रथमान्तार्थएव वाक्येन प्रधानतया बोध्यते । तत्र तत्रैव सम्बोधनपदार्थस्या भीष्टज्ञानस्य तावद्विशिष्टविषयता संसर्गेणान्वयइति व्यर्थः क्रियान्वयाभि निवेशः । अत एव देवदत्त को यज्ञदत्तइत्यादौ जिज्ञासाविषय जातिगोत्रादिगुणविशिष्ट यज्ञदत्तत्वावच्छिन्नविषयतया देवदत्त समेवतत्वेनाभीष्टज्ञान मन्वेतीत्युपपद्यत इति सर्वदर्शनसमञ्जसः पन्थाः ।

एतेन क्रियामात्रसाकांक्षपदगणने सम्बोधनान्तस्योल्लेखः प्रमाद मूलकएवेति ध्येयम् ।

अन्यत्रामन्त्रणा लिंगवचने प्राह केवलम् ।
विभक्तिः प्रथमा कर्माद्याधिक्ये न्या विभक्तयः ॥ ७ ॥

आमन्त्रण प्रथमाभिन्ना प्रथमा नरइत्यादौ पुंस्त्वं, लक्ष्मीरित्यादौ स्त्रीत्वं, बृहन्नळमित्यादौ नपुंसकत्वं, एकत्वादिसंख्यास्वरूपं वचनंचा भिधत्ते । द्वितीयादयस्तु विभक्तयः कर्माद्यधिक मभिदधाना एव लिंगवचने प्रतिपादयन्ति । ननु कैवल्येन । ननु "प्रातिपदिकार्थ लिंगपरिमाणवचनमात्रे प्रथमे" त्यनुशासनात जातिवाचिनो गवादि पदात व्यक्तिलाभार्थं प्रथमाया व्यक्तौ, द्रोणो व्रीहि रित्यादौ द्रोणादि परिमाणस्य व्रीहौ भेदान्वयाद्गुरुत्वस्वरूपे, तथैवारत्निःकुण्ड मित्यादौ परिमाणस्वरूपेपि शक्ति रावश्यकी; अन्यथा व्यक्ते रलाभात प्राति पदिकार्थयो र्भेदेनान्वयायोगादिति चेत्? उच्यते -

अन्यलभ्यतया जातिमतो गुणवत स्तथा ।
निरर्थः प्रातिपदिकाद्यर्थेषु प्रथमाविधिः ॥८॥

गवादिप्रातिपदिकादेव आक्षेपा ल्लक्षणया शक्त्यावा व्यक्ते र्गुरुत्व परिमाणवतो लाभसम्भवे व्यर्थः प्रातिपदिकार्थादौ प्रथमावाच्यत्व विधिरिति ।

सूत्रेण प्रातिपदिकार्थः सत्ता व्यक्ति रेव सा ।
आकृतिः परिमाणं तद् [वृत्ति] व्यक्तिधर्मोपलक्षणम् ॥ ९ ॥
प्रसिद्धे लिंगवचने तावन्मात्रे विवक्षिते ।
प्रथमान्तप्रयोगस्य साधुत्व मनुशिष्यते ॥ १० ॥

प्रातिपदिकार्थः सत्ता, वृत्त्या तथैव व्याख्यानात्; वचना न्येकत्वाद्वित्वबहुत्वसंख्याः, परिमाण माकृति रवयवसंस्थानस्वरूपा, तथा प्रवृत्तिनिमित्तसामान्य मुपलक्ष्यते, तावत्तु परस्परविशृंखलित

विषयताकेषु विवक्षितेषु कर्मादौ वा विवक्षिते प्रथमान्तप्रयोगो नप भ्रष्टतया नादित्वेनाभ्युदयविशेषसाधनत्वेन जातिविशेषेण वा साधु रित्येव प्रातिपदिकेत्यादिसूत्रार्थः । ननु प्रातिपदिकार्थवाचिका प्रथमे त्यनुशासन मिदम् । " अनपभ्रष्टता ऽनादि र्यद्वाभ्युदयसाधनम् । व्याक्रिया व्यंजनीया वा जातिः कापीह साधुता ॥ " इत्यनेन लक्षि तस्य साधुत्वस्यानुशासनाय व्याकरणप्रवृत्ति रित्याकरेषु, " साधुत्व ज्ञानविषया सैषा व्याकरणस्मृतिः " इति वाक्यपदीये च व्यक्तत्वात्। " अशिष्यं " " प्रधानप्रत्ययार्थवचन मर्थस्यान्यप्रमाणकत्वादि " ति सूत्रे ऽर्थस्य पदार्थयो र्वाच्यवाचकभावस्य प्रधानोपसर्जनभावस्यच प्रमाणान्तर सिद्धत्वेन व्याकरणाप्रतिपाद्यत्वमिति पाणिनिनैवाभिहितत्वात् । " सिद्धे शब्दार्थसम्बन्धे समानायामर्थावगतौ साधुभिश्चा साधुभिश्च गम्यान्व गम्येतिवन्नियमः क्रियत " इति भाष्यस्वरसाच्च । व्याकरणस्यशक्ति ग्राहक.मध्ये परिगणनन्तु- प्रातिपदिकार्थेत्यादिसूत्रेण व्यक्तिलिंगप्रवृत्ति निमित्तसंख्याबोधकं प्रथमान्तंसाध्विति कण्ठतउक्ते र्बोधकत्वान्यथा नुपपत्त्यावृत्तौ कल्प्यमानायां प्रातिपदिकाप्राप्ययो र्लिंगसंख्ययोः सुपां सुप्प्राप्ययो र्व्यक्तिप्रवृत्तिनिमित्तयोश्च प्रातिपदिकानां शक्तिः कल्पत इति प्रमाणान्तरोत्थापकतया, नतु साक्षात् ।

अभेदत्वेन नामार्थे सुपां वृत्ति रितिभ्रमः ।
व्याक्रियातः प्रतीयन्ते साधुत्वार्थाः सुपो यतः ॥ ११ ॥

यच्च प्राग्व्युत्पादितं स्वरूपभेदाभावत्वेन प्रातिपदिकार्थव्यक्त्यो र्विशेषणविभक्तीनामर्थ इति । तदपि न, विशेषणविभक्तीनां साधुत्व मात्रार्थकत्वस्य व्याकरणसिद्धत्वात् । तथाहि – " लुपियुक्तवद्व्यक्ति वचने " इत्येकं, लुप् शब्देन लुप्ते प्रत्यये प्रकृतिलिंगवचनेएव प्रयो क्तव्ये, नतु लवणादिपद वद्विशेष्यनिघ्नतया लिंगवचनान्तरप्रयोगः, यथा पञ्चालानाम क्षत्रिया नियत बहुवचनपुल्लिंगविषया स्तेषां निवासे

जनपदे तद्धित लुपि कृते पांचालाजनपद इति, तथा विदेहाः कुरवोम गधाभत्स्या अङ्गावङ्गाः कालिङ्गाः सुम्रा इत्यादीत्यर्थकम् । अपरन्तु "विशेषणानां चा जाते" रिति, तद्विशेषणानां च तद्व्यक्तिवचने स्यातां, जातिवाचिपदंवर्जयित्वा, यथा पांचालारमणीभ्याः, जातौ तु पांचालाजनपदः, एवं गोदौ बहुक्षीरघृतौ, जातौतु गोदौ ग्रामइत्यर्थकम् । एतत्सूत्रद्वितयं प्राचीनवैयाकरणाना मनूद्य"तद शिष्यं संज्ञाप्रमाणत्वात" इति पाणिनि रसूत्रयत । पांचालादीनां नियतलिंगवचनत्वं तद्विशेष णानां वा तुल्ययोगक्षेमं न शिष्यं, यतः संज्ञानियतो व्यवहार स्तस्मा देवं प्रमाणा दनर्थकानां पंचालादिषु विशेषणपदेषु तत्तल्लिंगवचनवाचि तुल्यानुपूर्वीकानां सुपां प्रति नियमनस्य सिद्धत्वात ; आपोदारा इतिव दित्यर्थः।

सुबर्था एव नामार्थाः सुपा मल्पत्वलाघवात ।
व्यंजकं प्रातिपदिकं मत मित्यप्यसंगतम् ॥ १२ ॥

येतु घटादीनपि प्रातिपदिकार्थान् वाचकसंख्यालाघवेन सुपा मेव वाच्या नाहुः, तेषां मते यदि घटाद्युत्तरसुत्वेन वाचकतायां प्रविष्टत्वमेव प्रातिपदिकस्य व्यंजकत्वं तदा क्व लाघवावकाशः । अथ सुत्वेनैव वाचकत्वं, तत्र च प्रातिपदिकसमभिव्याहारे विकरणादे रवाचकस्योपधान मिवोपयुज्यते इति मतं, तदापि समासे सुब्विनाकृता दन्वयबोधो न स्यात , न स्या च्चार्थवत्त्वाभावे प्रातिपदिकसंज्ञैवेति दिक् ।

कालापास्तु चैत्रः पचति ओदनः पच्यते, छेत्तुं सांप्रतं वृक्ष इत्यादौ तिङ् निपातादिभि रभिहितं कारकं प्रथमार्थः । तथा च चैत्रः पचतीत्यादौ चैत्राभिन्ने कर्तरि पाककर्ता चैत्रीयकर्तृत्वे वा पाक कर्तृत्वं तादात्म्येनान्वेति । प्रतिपाद्यतां वा सुवाख्याताभ्यां कर्तृ तात्वेनैकव्यक्तिः एकत्वत्वेनैव एका संख्या, अन्यथा ब्राह्मणस्य पाक कर्तृत्वसम्प्रदानत्वोभयविवक्षायां पचति ब्राह्मणाय देहीति प्रयोगप्रसं-

गात् । सिद्धान्तेतु तिङुपात्तकारकाणां प्रथमोपात्तकारक एव तादात्म्येनान्वया च्चतुर्थ्याश्च सम्प्रदानाभिधायित्वात् तदर्थे कर्तृत्वतादात्म्यबाधादेव न तथा प्रयोगः । पचति चैत्रेणेत्यादौ तृतीयोपात्ते कारके न तादात्म्येनान्वयः, तृतीयाया स्तिङादिभि रनभिहिते कारक एव साधुत्वात् । धात्वर्थान्वितकर्तृत्वं तृतीयार्थो नतु तिङर्थान्वयद्वारेत्य नभिहितसूत्रार्थः । अथवा लिङ्गा स्वार्थस्य प्रातिपदिकार्थान्वयबुद्धौ जननीयां तदर्थबोधकसुपोपि सहकारित्वम् । अत एव चैत्रः पचत इति न प्रयोगः। आख्यातोपात्तद्वित्वान्वये सुपूजनितद्वित्वोपस्थितेरपि सह कारित्वात् , उभाभ्यां प्रत्ययाभ्या मुपस्थितस्यैकद्वित्वस्यान्वयबोधोपगमात् । तथाच कर्तृत्वमपि यदि सुपानुपस्थितं स्यात् नाख्यातेन बोधयितुं शक्येतेति तस्य प्रथमान्तार्थतासिद्धिः । एतेना प्रथमा समानाधिकरणे लटि शत्राद्यादेशनियमात् पचते देवदत्तायेति प्रमाणं, नतु पचति देवदत्ताय देहीतिवाक्यं, अतो व्यर्थ स्तदुपपादनाय प्रथमाया अभिहितकारकाभिधायित्वकथनप्रयास इत्यपास्तं; संख्यांशइव कारकांशेपि सुप्तिङो स्तुल्यार्थत्वावश्यकत्वात् । अपाक्षीद्देवदत्तायदेहीति प्रयोगस्य तथाप्यप्रत्याख्यानाच्च, तत्रन्तुरप्रवृत्तेः । यत्रच कृत्तद्धितसमासैः कारकाभिधानं पाचकश्चैत्रइत्यादौ तत्रा प्यध्याहृतास्ति क्रियाकर्तृत्वमेवप्रथमार्थः । अतएव “ अस्तिर्भवन्तिपरः प्रथमपुरुषेप्यप्रयुज्यमानोप्यस्ती ” तिकात्यायनः । प्रथमपुरुषइत्युपलक्षणं, देवदत्तत्वं शूरोहं ब्राह्मणइत्यादावस्यास्मि इत्यादे रप्यध्याहारोध्येयः । द्वितीयादि विभक्तयस्तु तिङ् कृत्तद्धितसमासै रनभिहिते कारके भवन्तीति सर्वदर्शनसमानमिति वदन्ति । तान् प्रत्युच्यते -

उक्तार्थानाम प्रयोगा द्विभक्त्यन्तरबाधतः ।
अर्थतः प्रथमोपात्ता प्रथमैव प्रयुज्यते ॥ १३ ॥
पार्थएव घटोनास्ति हंसीवविमलंजलं ।
कल्की म्लेच्छान्तकः कालास्त्रय इत्यादिदर्शनात् ॥ १४ ॥

चैत्रः पचतीत्यादावाख्यातेन कर्तृत्वेभिहिते ऽनभिहिताधिकारी या तृतीया नसम्भवत्येव । अनभिहिताधिकारश्च उक्तार्थनामप्रयोगइति न्यायस्यैव ज्ञापकः । अतएव बहुपटुरित्यादौ बहुचा उक्तार्थत्वादग्रेकल्प वाद्यनुत्पत्त्या बहुपटुकल्पा इत्याद्याः प्रयोगा नभवन्ति । नच केवलाप्रकृतिः प्रयोक्तव्या इति चैत्रपदानन्तरं सुपः प्रयोगावश्यकत्वात् , प्रथमोवात्तस्य स्थाने बीजाभावाच्च प्रथमैव साधुः, पचति चैत्रायेति प्रयोग प्रसंगस्तथापिदुरुद्धरः । आख्यातार्थकर्तृत्वादेः प्रातिपदिकार्थेन सह न कुत्राप्यन्वयो येन तथाविधः प्रयोग प्रसंगः, अपितु प्रथमार्थेनेति चेत ? सम्बुद्धि प्रथमार्थे तथा प्यन्वयसम्भवेन चैत्र पचतीति प्रयोगप्रसंगात्, सम्बोधनप्रथमाया अपि प्रथमात्वेनकर्तृत्ववाचकतासंभवात।

अथ प्रकृत्यर्थविशेषितस्वार्थ बोधकभिन्नया प्रथमयासहैवाख्यातस्य तादात्मेनान्वयबोधौपयिकाकांक्षा भ्युपेतव्या, अत एव धृतिः स्वाहेत्यादौ छन्दसिव्यत्ययानुशासनबलेन संप्रदानत्वार्थिकापि प्रथमा नाख्यातमव्यपक्षेतिचेत ? तर्हि प्रकृत्यर्थ विशेषित कर्तृत्वादि बोधिका प्रथमापिकथं तथास्यात , चैत्रकर्तृत्वं पाककर्तृत्वाभिन्नमिति बोधेचैत्रस्य कर्तृत्वविशेषणत्वात । यदिचपाककर्तृत्वाभिन्न कर्तृत्ववांश्चैत्र इति बोधेभ्युपेयते, तदा शुद्धकर्तृत्वत्वावच्छेदेन पाककर्तृत्वान्वयबोधजनने कृतिः पाककृतिरिति वाक्यस्येवा सामार्थ्यं दुरुद्धरम् । तादात्म्यसंसर्गावच्छिन्न तद्धर्मविशिष्ट निष्ठप्रकारता निरूपित विशेष्यताया निरवच्छिन्नावच्छेदकतासंसर्गेण वाक्यार्थबुद्धे स्तद्धर्मभेदप्रयोज्यत्वाद । चैत्रकृतिः पाककृतिरित्यादौतु कृतित्वनिष्ठविशेष्यता वच्छेदकता सामानाधिकरण्येन चैत्रीयत्वावच्छिन्नैव, तद्विशेष्यविशेषणतया भासमानस्यापि तन्निष्ठावच्छेदकतायां सामाधिकरण्येना वच्छेदकत्वात् । विशेष्यतायामेववा ऽवच्छेदकताद्वयानिरूपितत्वं, अवच्छेदकतायां वा-स्वनिरूपक विशेष्यतानिरूपकत्व संबन्धेनावच्छेदकता विशिष्टभिन्नत्वं। नच स्वंस्वविशिष्ट मन्यत्रात्माश्रय सहनशील विशेषणत्वादि संबन्धेभ्यः ।

अथ प्रथमाया निरर्थकत्वे वचनादिमात्रवाचकत्वेवा आख्याती पात्तं कारकं न प्रथमांतप्रातिपदिकेन्वियात्, सुबाख्यातोभयोपस्थित व्यक्तेरेव प्रातिपदिकार्थविशेषणतया भानव्युत्पत्तेः, वचनवदितिचेत् ? एवं सत्येकवचनतिङ्तथाविध प्रथमांतयो राकांक्षाभ्युपगमस्या वश्यकत्वे किमत्रप्रथमायाः कर्तृत्वार्थकत्वेनोपकर्तव्यं, अकारकाभिधायित्वेपि प्रथमो पात्तत्यागायोगेनैव प्रथमा प्रयोगसंभवात्। अन्यथा पार्थएव धनुर्धर इत्यत्रा न्यत्रविशेषणतापन्ने पार्थे, घटोनास्तीत्यत्रास्त्यन्वयाभाव विशेषणतापन्ने ऽस्तित्वाभाव विशेष्येवा घटे, हंसीव धवळा कीर्ति रित्यत्र साहश्य विशेषणे हंस्यां च, कर्तृत्वबाधेन प्रथमाप्रयोगोनुपपन्नः स्यात् ।

ननु पार्थएवेत्यादौ अस्तिर्भवतिपरो ध्याहर्तव्यः, तत्कर्तृत्वंच विशेषणविशेष्ययो रध्याहृतमिति पार्थइव धनुर्धरेन्व प्रथमा ; घटोनास्ती त्यत्र कर्तृत्वाभावएवा ख्यातप्रथमयोरर्थः, नञ्पदं व्यञ्जकमेव, अन्यथा तिङ्सुबन्तयो निर्व्यपेक्षत्वे घटो घटावा नास्तीतिप्रयोगप्रामाण्यप्रसं गात् ; हंसीव धवळाकीर्तिरित्यत्र कीर्तावस्तिना प्रथमया हंस्यामिव निपातेन प्रथमया च भवनकर्तृत्व मुच्यते ; याहशसुपा यद्यत्कारक लिंगवचनादि बोध्यते ताहशमेवोपमेय इवनिपातेन प्रत्याय्यते; अत एव " मुक्तामालेवनक्षत्रै र्भूषिता चैत्रशर्वरी । हंसीव धवळ श्चन्द्रः सरांसी वामलं नभः ॥ " इत्यादा वुपमानोपमेययोः कारक लिंगवचनवैरूप्य मुपमादोषइति चेन्न ;- " शरैरुस्रैरिवोदीच्या नुद्ध रिष्यन्रसानिव " इत्यादा विवनिपातेनाभिहिते करणत्वकर्मत्वादावुस्र रसयोः प्रथमाप्रसंगतादवस्थ्यात ; तृतीयानुपपत्तेश्च। दृश्यतेच विमलं जलं नद्या इति क्रियानिरपेक्षं वाक्यम् । अस्त्वत्रास्ति भवन्तिपर इति चेत्? कल्की म्लेच्छान्तक इत्यादौ भविष्यति तद्योगासम्भवात् । भवन्तिपर इत्युपलक्षणं भविष्यतीत्यस्यापीति चेत्? कालात्रयः अतीतं तदात्वमायतिरित्यादि विभाजकवाक्य आसीदस्ति भविष्यतीत्येकत मस्यापि प्रयोगासम्भवादिति दिक् ।

इति प्रथमाविवरणम् ॥

द्वितीया मौट्शस स्तत्रा नुबन्धावक्षरे टशौ ।
तस्मा दौ र्वदति द्वित्वं बहुत्वं ब्रुवतेत्वसः ॥ १ ॥

अम् औट् शसिति द्वितीया । सम्पदं, उशनसौ, ग्लाव इत्यादौ श्रूयमाणा स्तदीया भागा अम् औ अस् इत्येव वाचकाः । टशावनुबन्धौ वाचकानन्तर्भूतौ । अत एव प्रथमा द्वितीया साधारणे नौ त्वेन द्वित्ववाचकत्व मसत्वेन बहुत्ववाचकत्व मित्यनुगमोपि सम्भवति । शस् जस् ङसि ङसां लिंगाभिधानौपयिकैकरूप मभ्युपेयम् ।

फलव्यापारयोः सर्वधातूनां वृत्तिरिष्यते ।
द्वितीयार्थो धिकरणं फलगामीति शाब्दिकाः ॥ २ ॥

सर्वधातूनां फलव्यापारयोः पुष्पवन्तादिपदवन्नानार्थवद्वा शक्तिः। एकपदोपात्तयो रपि परस्पर मन्वयो न विरुद्धः, परेषा मप्याख्यातार्थे कृतौ वर्तमानत्वस्य वैयाकरणानां कर्तरि संख्याया श्चान्वयबोधदर्शनात् । फलन्तु संयोगविक्लित्यादितद्रूपेणैव गमिपच्यादिवाच्यम् । व्यापारास्तु रथो गच्छतीत्यत्र स्पन्दविशेषत्वेन, तुरगो गच्छतीत्यत्र प्रयाणत्वेन, वह्निः पचतीत्यत्रोर्ध्वज्वलनत्वेन, शरीरं पचतीत्यत्राधिश्रयणावतारणफूत्कारत्वादिना, पुरुषः पचतीत्यत्र प्रयत्नत्वेन, अवगम्यमान सकलव्यापारानुगतधर्मविरहात् अननुगतानां प्रवृत्तिनिमित्तानां स्वरूपसता मनुगमकेन बुद्धिविशेषविषयत्वेन सर्वनाम्ना मिव धातूनां शक्याः । भवतु वा फलजनकतावच्छेदकत्व मेव प्रयत्नत्वादीनां स्वरूपसदनुगमकम् । अत एव यद्धर्मावच्छेदेन विक्लित्यादिजनकता ग्रह स्तद्धर्मावच्छिन्न मेव पच्यादिनो पस्थाप्यते । धात्वर्थव्यापार एव भावनोत्पादिता क्रियेति व्यपदिश्यते । तत्रैव प्रधानतया भासमाने ऽनुकूलत्वसंसर्गेण फलस्य, आश्रयत्वेन वर्तमानत्वादे राश्रयत्वेन विभक्त्युपस्थाप्य कर्तु रन्वयः । कर्तरि चाख्यातोपात्त तदर्थ संख्याया आधारत्वेन, प्रथमार्थस्य तादात्म्येन, प्रथमार्थे प्रथमोपात्त

संख्यादे रितिसम्बन्धः । फले च कर्मविभक्त्युपस्थाप्यस्याधिकरणस्या धेयत्वेन, अधिकरणेच द्वितीयान्तार्थादे रभेदेन, द्वितीयान्तार्थे द्विती यार्थे वा द्वितीयोपात्तसंख्याया विशेषणत्वम् । तेन चैत्र ओदनं पचती त्यत्र एकचैत्राभिन्नैकाधिकरणवृत्ति रेकौदनाधिकरणवृत्तिविक्लित्तिजनि का वर्तमाना क्रियेत्यन्वयबोधः ।

युज्यते च क्रियायाः प्राधान्यं, तत्र गुणीभावः कारकाणां। अत एव "भावप्रधान माख्यात" मिति निरुक्तस्मृतिः आख्यातान्त पदाना मर्थेषु भावस्य क्रियाया एव प्राधान्य मभिधत्ते, "धात्वर्थः केवलः शुद्धो भाव इत्यभिधीयते" इति परिभाषणात् । अत एव पचन्ति कल्पं चैत्रदेवदत्ता इत्यादौ साधुत्वार्थं नियतं नपुंसकैकवचनं, क्रियायाः लिंगसंख्यान्वयायोग्यत्वेन बहुवचनादे रसमवेतार्थकत्वात् । कर्तुः प्राधान्येतु तत्र लिंगसंख्यान्वययोग्ये तिङुपात्ते च सुबुपात्तापि संख्यान्विवादिति बहुवचनप्रयोगप्रसंगः; आचार्यकल्पा द्विजा इतिवत् ।

किंच पश्यमृगोधावति इत्यादावेकवाक्यत्वं "तिङ्ङतिङ" इति सूत्रस्वरसिद्धम् । तत्र यदि धावनकर्तामृगोदर्शनक्रियायां कर्मतया न्वेति तदामृगात् कर्मणि द्वितीयाप्रसंगः । अप्रथमासमानाधिकरणस्य लटः स्थाने शतु र्नित्यत्वेन तादृशप्रयोगएव न साधुः स्यात् । सिद्धा न्तेतु मृगकर्तृकधावनक्रियाया दृशिक्रियायामन्वयइति धातोः प्रातिपदि कसंज्ञाविरहा न्नद्वितीयाप्रसंग इति सर्वथा भाष्याभ्युपेतक्रियाप्राधा- न्यमेव श्रेयः ।

तथा चौदनं पचति चैत्र इत्यत्र एकोदनाधिकरणके विक्लित्त्यनु कूले व्यापार एकचैत्राभिन्नकर्तृके प्रतीयमाने ओदनादेरन्यलभ्यत्वा दधिकरणमात्रं द्वितीयार्थः । अधिकरणत्वंचा खण्डोपाधि र्गगना भावादिस्वरूपो तिरिक्तो वा स्वरूपेणैव जातिवत् द्वितीयापदप्रवृत्ति निमित्तम् । अत एवाधिकरणत्व माधेयत्वं वा द्वितीयार्थो नत्वाधिकरण

मिति दार्शनिकमत मपास्तम्, अधिकरणतात्वस्य शक्यतावच्छेदकत्वे गौरवात् । कालं पचतीति प्रयोगप्रसंगात्, विक्लृतौ कालवृत्त्यधि करणता निरूपकत्वस्याबाधात । तत्तत्संसर्गावच्छिन्नाधिकरणतानां तत्तद्धातुसव्यपेक्षद्वितीयाशक्यत्वे नानाशक्तिकल्पन प्रसंगः । अधि करणस्य द्वितीयार्थतावादेतु तत्तद्धात्वर्थे फले संसर्गविशेषेण द्वितीया र्थाधिकरणान्वयइति व्युत्पत्तिरेव विचित्रा, नतु शक्तिः । अत एव कर्म लकारपर्यायत्वमपि द्वितीयाया उपपद्यते, चैत्रेणौदनः पच्यत इत्यादौ हि एकौदनाधिकरणक विक्लृतिजनिका एकचैत्राभिन्नकर्तृका पचिक्रिया प्रतीयते । तत्रौदनादे रन्यलभ्यत्वादाश्रयमात्रं लकारार्थः, नत्वाश्रयत्वं, प्रातिपदिकसामानाधिकरण्या नुपपत्तेः ।

ननु तथापि यत्र कर्तृकर्मोभयगामि संयोगादिफलं तत्र चैत्र श्चैत्रं गच्छतीति प्रयोगप्रसंगः, चैत्राधिकरणक संयोगजनकस्य गम- नस्याबाधितत्वादिति चेन्न;- परया कर्तृसंज्ञया बाधितत्वेन द्वितीयाप्रवृत्ते रभावात्, कर्मसंज्ञैव हि द्वितीयानिमित्तम् । अत एव "अपादान सम्प्रदान करणाधारकर्मणां कर्तुश्चोभयसम्प्राप्तौ परमेव प्रवर्तत" इति पठन्ति ।

तच्च द्वितीयोपात्तमधिकरणं फलगामि धात्वर्थफलेन्वेति । तथाहि- पच्यर्थविक्लृता ववयवघटितपरम्परया, गम्यर्थसंयोगे त्यज्यर्थ विभागेच समवेतत्वेन द्वितीयार्थाधिकरणस्यान्वयः । जानाते रावरण भङ्गः प्राकट्यंवा फलम् । आवरणं त्वविद्याज्ञानमिति व्यपदिश्यमानो भावविशेष औपनिषदानांप्रसिद्धः । अतीतानामपि सूक्ष्मरूपेणावस्थि ताना मिदानींतनेन ज्ञानेन फलं जन्यते, तेनातीत मनागतं वा जाना तीति नानुपपन्नं । यदाह हरिः- " तिरोभावाभ्युपगमे भावानां सैव ना स्तिता । लब्धक्रमतिरोभावे नश्यतीति प्रतीयते ॥ " इति ।

जानातीच्छति द्वेष्टि करोति पश्यतीत्यादौ ज्ञानेच्छा द्वेषप्रयत्न दर्शनादीनि फलानि, तदनुकूलामनोयोगादयो व्यापाराएव क्रियाः ।

अतएवचक्षुः पश्यतीति क्वाचित्कप्रयोगः । तत्रच विषयत्वोद्देश्यत्वबाध्यत्व साध्यत्व साक्षात्कारित्वैः सम्बन्धै द्वितीयार्थाधिकरणस्य ज्ञानादौ फलेन्वय इत्यपि केचित् ।

वस्तुतस्तु धातुना प्राधान्येन बोध्यमानो धात्वर्थः क्रिया, तत्र विशेषणतया भासमानो धात्वर्थः फलमिति परिभाष्यते । क्रियायाः साक्षादधिकरणं कर्ता, फलस्याधिकरणं कर्म । अतएव फलस्यैव प्राधान्यविवक्षायां तण्डुलः पच्यते स्वयमेवेत्यादौ विक्लित्तिरेवक्रिया, तदधिकरणे कर्तरिलकारः । तथाच जानातेर्विषताज्ञप्तिश्च, इच्छते रुद्देश्यताकामश्च, करोतेः साध्यतायत्नश्च, द्विषेर्द्विष्टताद्वेषश्च, दृशेर्लौकिकीविषयता साक्षात्कारश्च, अनुमितेर्विधेयतानुमितिश्चे त्येवं फलव्यापारौ क्रमात् प्रतिपाद्यौ । तत्र फलेविषयतादावाधाराधेयभावेन द्वितीयार्थाधिकरणान्वय इति वैयाकरणाः ।

ननु- तन्मते करणाधिकरणादि निष्ठव्यापाराणामपि धातुना प्राधान्येनाभिधानसम्भवा द्धातूपात्तव्यापाराश्रयत्वेन स्वतन्त्रतया कर्तृत्वं स्यादितिचेत् ? स्यादेव, असिश्छिनत्ति पचतिस्थाल्य पसरति धराधरो ददातिद्विज इत्यादौ कर्तृताकारकान्तरे । साध्वासिश्छिनत्तीत्यत्रावयववृत्त्यारंभकसंयोगप्रतिद्वंद्विविभागश्छिनत्तेरर्थः फलं, तच्चावयविना द्वितीयार्थाधिकरणेन समानाधिकरणतया व्यपेक्ष्यते, नत्वाधाराधेयभावेन । अतएव तृणंछिनत्तीति प्रयोगो नतु दळद्वयमिति । तत्फलानुकूलव्यापारः करणनिष्ठो यदा विवक्षित स्तदाकरणस्यापि कर्तृत्वमविरुद्धं । अतएव "विवक्षातः कारकाणिभवंती"तिप्रवादः । एवं स्थालीपचतीत्यत्राधिकरणस्य विक्लित्त्यनुकूलोव्यापारः संतापनादिः, गिरि रपसरतीत्यत्रा पादानस्या पसरतिफलविभागानुकूलकर्माभिमुख्यादिः, द्विजो ददातीत्यत्र ददातिफलस्य स्वत्वध्वंसस्य स्वत्वान्तरस्य वा नुकूलोनुमत्यादिः सम्भवतीति विवक्षावशात् सर्वस्य कारकान्तरस्य कर्तृत्व मवसेयम् ।

ननु तथापि कर्मवृत्तिव्यापारे प्रतिपाद्ये कर्मणामपि कर्तृत्वं स्यादिति चेत्? कुतो न स्यात्,

अधिगच्छति शास्त्रार्थः स्मरति श्रद्दधाति च ।
इत्यादि दर्शनात् कर्मण्यपि कर्तृत्व मिष्यते ॥ ३ ॥

अधिगमविषयत्वं स्मरणविषयत्वं श्रद्धाविषयत्वं च धातुना फलव्यापारयो र्विशेषणविशेष्यभावव्यत्यासेन प्रत्याय्यते । प्राधान्यवशात् क्रियाभावप्राप्तस्य फलस्याधिकरणं शास्त्रार्थो भवत्यधिगम्यादिकर्ता ।

यत्तु – " एकदेशे समूहे वा व्यापाराणां पचादयः । स्वभावतः प्रवर्तन्ते तुल्यं रूपं समास्थिताः ॥ " इति वाक्यपदीयवाक्यस्य – ' एकदेशे फलमात्रे व्यापारमात्रे समूहेवा धातवः प्रवर्तंते, तेनव्यापारा विवक्षायां फलमात्रे फलाविवक्षायां व्यापारमात्रे च धातुप्रयोगः, यथा पच्यते ओदनः स्वयमेव पचति चैत्रइत्यादा ' वित्यर्थं व्याकुर्वाणा अधिगच्छति शास्त्रार्थ इत्यादौ विषयता स्वरूप फलमात्रं गमिर्वदति अतएवा यमकर्मको धातुरिति वदन्ति । तन्न, तथासति अधिगच्छति स्मरति श्रद्दधाति धातूनां पर्यायता प्रसंगात् । तस्मा दधिगमव्यापार विशेषिता विषयता धात्वर्थ इति सारम् ।

नन्वेव मधिगमादेः फलत्व प्रसक्त्या तदधिकरणानां कर्मत्वं स्या दिति शिष्य मधिगच्छति शास्त्रार्थ इति प्रयोगप्रसंगः ; नच "बुभुक्षितं न प्रतिभाति किंचि" दिति दर्शनादिष्टापत्तिः, तत्र कर्मप्रवचनीयेन प्रतिनायोगात द्वितीयाया अकर्मण्येव साधुत्वा दिति चेत्? उच्यते–

विशिष्टवृत्तिस्वीकारा देकदेशे ष्वनन्वयात् ।
कर्मस्थभावको धातु र्नद्वितीयां व्यपेक्षते ॥ ४ ॥

स्मरति शास्त्रार्थ इत्यत्र स्मृतिधातोः स्मरण विषयतायां विशिष्टायां लक्षणास्वरूपा वृत्तिः, नतु विशेषण विशेष्यभाव व्यत्यास

मात्रेण कल्पिताभ्यां खण्डशक्तिभ्यां निर्वाहः, खण्डशक्ति जनित पदार्थोपस्थितेः फळ विशेषणक व्यापार विशेष्यक शाब्दबुद्धि प्रयोजिकायां स्मृधातुत्वा वच्छेदेन तादृश शाब्दबुद्ध्यभाव प्रयोजकीभूताभाव प्रतियोगित्व बुद्धाविव सहकारित्वा भ्युपगमात् । व्यापार प्रकारक फळ विशेष्यक बुद्ध्युपयोगि व्युत्पत्त्यन्तरं तत्र खण्ड शक्तिग्रहजनित खण्डोपस्थितेः सहकारिकल्पनंचा पेक्ष्य विशिष्टोपस्थितेः जनिका विशिष्टे वृत्तिरेव कल्पयितुमुचिता । तथाच विशिष्टपदार्थैकदेशे नद्वितीयार्थान्वयो युज्यत इतिकर्मस्थभावकानां प्रायेणाकर्मत्वमन्यत्र भावदेशकालाध्वभ्यः । स्मरति शास्त्रार्थं इत्यादौ विषयताफलं, उद्बोधकादिः स्मरणीयमात्रवृत्तिर्व्यापार इति फलव्यापारयो वैयधिकरण्याभावाद् कर्मकः कर्मस्थभावको धातुरित्यपिवदंति ।

नन्वेवं पचति ओदन इत्यपिस्यात , कर्मव्यापारविवक्षायां ओदनादेः कर्तृत्वसंभवादितिचेत्? उच्यते

निर्वर्त्येच विकार्येच कर्मवद्भाव इष्यते ।
तस्मात्कर्तृलकारेपि धातोः स्युर्यक्चिण्णादयः ॥ ५ ॥

यन्नाम निवर्त्यं विकार्यंचकर्म, तन्निष्ठभावविवक्षायां सकर्मकाद्धातोः कर्तृलकारेपि कर्मवद्भावानुशासनलिङ्गः । तथाच सूत्रं – 'कर्मवत्कर्मणातुल्यक्रिय' इति । कर्मवृत्तिक्रियाश्रयः कर्ता कर्मवद्भवतीति तदर्थः । तदप्यनुशासनं कर्मातिदेशत्वा यक्चिणात्मनेपदादीनि कर्मकार्याणिविधत्ते, तेनच पच्यते अपाचि ओदनइत्येवप्रमाणम् । नतु पचत्यपाक्षीदिति ।

नन्वेवं यत्र भावेलकारः तत्र कर्मकार्यं द्वितीयास्यादिति तण्डुलं पच्यत इति प्रयोगप्रसंग इति चेत्? उच्यते–

कर्मव त्कर्मणा तुल्यक्रिय इत्यनुशासने ।
द्विलकारकनिर्देशात् सूत्राल्लिट्यनुवर्तते ॥ ६ ॥

ल्लिङाशिषीतिसूत्रे द्विळकारौ संयुक्तौ निर्दिष्टौ, तयो राद्यं ळकारमनुवर्त्य ळकाराभिहितकर्ता कर्मवत् स्यादादिकर्मवृत्तिक्रियोभव- तीति कर्मवत्सूत्रशरीरं पर्यवस्यति । अतो ळकारेण कर्तुरनभिधाने कर्म कार्यं न प्रसज्यते । अत एव कृत्यक्तखलर्थ प्रत्यया अपि कर्मकर्तरि न भवन्ति, कर्तुर्लकारेणा नभिधानात् कर्मत्वादि देशाप्रवृत्तेः । अत एव स्वयमेवभेत्तव्यं भिन्नं सुभिन्नंवा कुसूलेनेत्यादौ भावार्थानान्त व्यक्तखलानां योगे कर्तरितृतीयैव प्रमाणम् ।

ननु कोसौ निर्वर्त्यविकार्यप्राप्याणां कर्मणां विशेष इति प्राप्ते, कथ्यते -

> यदुत्पत्तिस्वरूपेण फलेन व्यतिषज्यते ।
> तन्निर्वर्त्यं विकार्यंविकारैः प्राप्य मतोन्यथा ॥ ७ ॥

यत्कर्मोत्पत्तिस्वरूपेण क्रियाजन्यफलेन संसृज्यते तन्निर्वर्त्यं नाम । यथा कटं करोतीत्यत्र उत्पादनार्थककरोत्यर्थफलीभूतोत्पत्ति संसृष्टः । यत्तु विकारै धात्वर्थफलैः संसृज्यते तद्विकार्यम् । विकार स्तु क्वचिन्नाशस्वरूपः, यथा - शत्रुं हिनस्तीत्यत्र शत्रुः । क्वचि न्नाशानुकूलो ऽवयवविघटनादिः, यथा-तृणंछिनत्ति कुसूलं भिनत्तीत्यादौ तृणकुसूलादिः । उत्पत्ति विकारभिन्नेन फलेन संसृष्टं कर्मप्राप्यं, यथा ग्रामं गच्छति रूपं पश्यतीत्यादौ संयोग विषयत्वाधिकरणं ग्रामरूपादिः । हरिस्तु-"सतीवा विद्यमानावा प्रकृतिः परिणामिनी । यस्य नाश्री- यते तस्य निर्वर्त्यत्वं प्रचक्षते । प्रकृतेस्तु विवक्षायां विकार्य " मित्ये कंपक्षमुदाजहार । यस्य कर्मणः प्रकृतिः समवायिकारणं परिणामित योपादानतया नोपादीयते तत्क्रियाफलोत्पत्तिम न्निर्वर्त्यकर्म । यथाकटं करोतीत्यत्र कटः । नह्यत्र सदपि कटोपादानं वीरणं तथात्वेनाविवक्ष्यते । यत्रच प्रकृतिरुपादीयते तद्विकार्यं । यथा कनकं कुण्डलं करोतीत्यत्र कुण्डलं । कनकपदं कनकोपादाने लाक्षणिकं, कुण्डलपदसमानाधि करणं । अथवा उपादानत्वं साध्यताच कृञर्थः, तत्रोपादानत्वेन कनकस्य

साध्यत्वेन कुण्डलस्यान्वयः। तथाच कनकोपादानकः कुण्डलसाध्यकः प्रयत्नोवाक्यार्थः । विकार्ये कर्मणि प्रकृति र्द्विविधा, क्वचित् सती-उपादेय कालिकी, यथा वीरणं कटं करोति कनकं कुण्डलं करो ति वेणुदलं चक्रं करोतीत्यादौ। क्वचि दविद्यमाना कार्या सहवृत्तिः, यथा काष्ठं भस्म करोति तण्डुलानोदनं पचतीत्यादौ । अत्रध्वंस उत्पत्तिश्च फलविधयाकृञोर्थः, काष्ठध्वंसस्य भस्मोत्पत्ते श्चानुकूलोव्यापारो वाक्यार्थः। पचेरपि विकृतिरुत्पत्तिश्च पदार्थः, तण्डुलविक्लेदिका ओदनो त्पादिका क्रियावाक्यार्थः। प्रकृतित्वन्तु काष्ठस्य परम्परया व्यावहारिक मिति तदर्थः ।

पक्षान्तर मप्याह हरिरेव कैश्चि दन्यथा निरुच्यानं- " निर्व र्त्यश्च विकार्यश्च कर्म शास्त्रे प्रदर्शितं। यदसज्जायते यद्वा जन्मनायत्प्र काशते । तन्निर्वर्त्यं विकार्यन्तु द्वेधाकर्मव्यवस्थितं। प्रकृत्युच्छेदसंभूतं किंचित्काष्ठादिभस्मवत्। किञ्चिद्गुणान्तरोत्पत्त्या सुवर्णादिविकारवत्॥" इति। पूर्वमसतएव सत्त्वमध्वस्तसमयसम्बन्धस्य समयसम्बन्ध उत्पत्ति रिति वैशेषिकादयः। कालिकविशेषणता सामान्येन नकोपि कुत्रापिसमये संसृष्टः, दैशिकसंसर्गभेदेन कालिकविशेषणतानां भेदावश्यकत्वात्। अत एव गवावयवावच्छेदेन संयोगसंसर्गावच्छिन्नकालिक संसर्गावच्छिन्न प्रतियोगिताकाभावो गोमत्यपि काले वर्तते , नतु समवाय संसर्गावच्छिन्नकालिकविशेषणतासंसर्गेण; इदानीमवयवेषु समवायेन गौर्नतु संयोगेनेति प्रतीत्या काले ऽवयवावच्छेदेन गवाभावस्य विषयी करणात् अवयवेसंयोगेन गवाभावस्य व्याप्यवृत्तितया, कालावच्छि-न्नत्वासम्भवात । अतएव चिरान्तरितस्याप्यनुभवयागादेः भवता सुकृतादि संसर्गावच्छिन्नकालिकविशेषणतया स्वर्गस्मरणा व्यवहित पूर्वक्षण वृत्तित्वेन तत्करणत्वं सूपपादम् । तथाच ध्वंसप्रागभावादि स्वरूप दैशिकसंसर्गावच्छिन्न कालिकेनसर्वस्मिन्नपि काले प्रत्यासीद त्येव सर्वोभाव इति नाभावोविद्यते सतः । जन्मतुप्रकाशएव। प्रका-

शस्तु समवायतादात्म्याद्य वच्छिन्नकालिक विशेषणतया प्रथमसमय सम्बन्ध इति कापिलाः । यदाहहरिरेव- "उत्पत्तेः प्रागसद्भावो बुद्ध्य-वस्थानिबन्धनः । अविशिष्टः सतान्येन कर्ताभवति जन्मनः ॥ का-रणं कार्यभावेन यदावाव्यवतिष्ठते । कार्यशब्दं तदा लब्ध्वा कार्य त्वेनोपजायते ॥ यथाहेः कुण्डलीभावो व्यग्राणांवासमग्रता । तथैव जन्मरूपत्वं सतामेके प्रचक्षते" । इति । एवंचासतः सत्वंसतः प्रकाशोवा भवत्युत्पत्तिः । धात्वर्थफलोत्पत्तिम न्निर्वर्त्यं कर्म, यथाक-टंकरोति ओदनं पचतीत्यादौ कटौदनादिः । धात्वर्थ फलीभूत विकार संसृष्टं विकार्यं, यथाशत्रुं हिनस्ति काष्ठं भिनत्तीत्यादौ शत्रुकाष्ठादिः यथावा कनकंकुण्डलं करोतीत्यादौ कनक कुण्डलादि । "प्रकृत्युच्छेदे" त्यादिकारिका 'यदुच्छेदेन सम्भूतं निर्वर्त्यं कर्म साप्रकृति विंकार्यकर्म, यथा-काष्ठोच्छेदसम्भूतं भस्म निर्वर्त्यमिति काष्ठंविकार्यम्, सत्यामेव यस्यांप्रकृतौ गुणोत्पत्तिर्धातुना प्रत्याय्यते तदपि द्वितीयं विकार्यं कर्म, यथा सदेवशलाकास्वरूपं कनकं अवयवानाम नारम्भक संयोगमात्र विरोधिना कर्मणा भुग्नत्वगुणोत्पत्त्या विकार्यं, कुण्डलपदस्य भुग्नंद्रव्य मर्थः, धात्वर्थो-त्पत्तिस्तु भुग्नत्व एवा र्थतोन्वेति, इत्यर्थिका ।

प्राप्यलक्षणमाह हरिरेव- "क्रियाकृत विशेषाणां सिद्धिर्यत्र नगम्यते । दर्शनादनुमानाद्वा तत्प्राप्य मितिकथ्यते" ॥ इति । तत्र क्रियाकृता विशेषा उत्पत्तिक्षयोपचयादयो भावविकारा एवागणनीयाः ॥

तदेवं वैयाकरणस्य मतं निरूप्य नैय्यायिकानां मतमुत्थाप्यते ।

कर्मत्वघटकाभागा लभ्यंतेपरतोयतः ।
द्वितीयार्थ स्ततो भेदसंबन्धाविति तार्किकाः ॥ ९ ॥

परसमवेतक्रियाविशेषणधात्वर्थ फलसमवायित्वं कर्मत्वं ॥ भवति च ग्रामंगच्छतीत्यत्र ग्रामभिन्नसवेतायां क्रियायां विशेषणीभूतेन संयोगावच्छिन्न स्पन्दवाचकस्य गमे रर्थेन संयोगेन संसृष्टो ग्रामः ।

कर्मत्वघटक पदार्थास्तु ग्रामक्रियाफलानि नामधातुभ्यामेवलभ्यंते, प्रतियोग्यनुयोगिभावादयस्तु संसर्गमर्यादयाभासन्तइति न वाचकं पदमपेक्षंते । कर्मफलयोः सम्बन्धः परत्वस्वरूपो भेदश्चानन्यलभ्य त्वात द्वितीयार्थः । प्रातिपदिकार्थ विशेषितः संम्बंधः फले भेदश्च सामानाधिकरण्येन क्रियायामन्वेति । प्रातिपदिकार्थस्तु भेदे वत्तद्व्य क्तित्वावच्छिन्न प्रतियोगितयान्वेति । नञ्पदान्यप्रतिपाद्ये भेदे प्रतियोग्य विशेषणधर्मावच्छिन्नस्यापि प्रतियोगित्वस्य संसर्गत्वेविरोधाभावात् । भव तुवा प्रातिपदिकार्थ आधाराधेयभावेन भेदे भेदस्तु प्रतियोगितावच्छेद कतासंसर्गेण क्रियायां विशेषणम् । विद्यतेच गमनवद्भेदो ग्रामे ।

ननु भेदांशशक्तिरनर्थिका, तदनुभवस्य विवादग्रस्तत्वात् । चैत्रश्चैत्रं गच्छतीति प्रयोगप्रसंगश्च परया कर्तृसंज्ञया बाधादेव प्रतिहतः । संज्ञैव द्वितीया प्रयोजिका, नतु वस्तु, अधिशीङोधिकरणादपि द्विती यादर्शनादितिचेत्; उच्यते-

भूमिं प्रयाति विहगो विजहातिमहीरुहम् ।
ननु स्व मितिनिर्देशे भेदएव निषिध्यते ॥ १० ॥

भवतिताव त्सार्वजनीनः खगोभुवंगच्छति नतुस्वमिति प्रयोगः । तत्र खगे भूकर्मक गमनकर्तृत्वं स्वकर्मकगमनकर्तृत्वाभावश्चोभयं, अथवा खगकर्तृकेगमने भूकर्मकत्वं स्वकर्मकत्वाभावश्चेति द्वयं तुकारेण तत्त दर्थएवानूद्यते । ननु मैत्रोभुङ्क्ते चैत्रस्तु पचतीत्यत्रेव पूर्ववाक्य विधेय व्यावृत्त्यर्थस्तुकारः, पौनरुक्त्यप्रसंगात । स्वपदसमभिव्याहृता द्वितीया यदिवृत्तित्वमात्रमभिधत्ते तदागम्यर्थफले द्वितीयांतार्थस्यस्ववृत्तित्वस्य, ग- मनेवा स्वसमवेतसंयोगजनकत्वस्य कथं नञानिषेधोयुज्यते । भेदस्य द्वितीयार्थतावादेतु विहंगवृत्तिभेदप्रतियोगितावच्छेदकत्वमेव गमने निषिध्यते । एवं रूपं न गच्छतीत्यत्र गम्यर्थसंयोगे रूप वृत्तित्वाभाव एव नञा प्रतिपाद्यते ।

ननु तथापि चैत्रो ग्रामं गच्छति न मनुष्य मित्यादिप्रयोगोऽनुपपन्नः, गमिफले मनुष्यसमवेतत्वस्य गमने मनुष्यान्तरनिष्ठान्योन्याभावप्रतियोगितावच्छेदकत्वस्य च निषेधायोगात्; कथं वा चैत्रो मनुष्यं गच्छतीत्यादिको न प्रयोग इति चेदुच्यते –

फलान्वयिनि वृत्तित्वे भेदे व्यापारगामिनि।
अन्वेति व्यक्ति रेकैव तत्सामान्यं निषिध्यते ॥ ११ ॥

या प्रातिपदिकार्थव्यक्ति र्द्वितीयार्थवृत्तित्वेऽन्वेति सैव भेदे, वृत्तित्वन्तु फलान्वयिभेदप्रतियोगितावच्छेदकतया व्यापारान्वयीति चैत्रो मनुष्यं गच्छतीति न प्रयोगः, वृत्तित्वान्वितमनुष्यव्यक्ते र्भेदान्वयायोग्यत्वात्। चैत्रो न मनुष्यं गच्छतीत्यत्र तु तत्तन्मनुष्यवृत्तिसंयोगजनकत्वविशिष्टे यावत्तत्तन्मनुष्यनिष्ठान्योन्याभावप्रतियोगितावच्छेदकत्वं ताव दभावकूट एव नञा प्रतिपाद्यते। भवतु वा स्वसमवेतसंयोगजनकत्व स्ववृत्त्यन्योन्याभावप्रतियोगितावच्छेदकत्वोभयसंसर्गावच्छिन्नप्रतियोगिताको मनुष्यसामान्याभाव एव गमने नञा बोध्यः। द्वितीयातु संयोगेन घटो नास्तीत्यत्र संयोगादिपद मिव प्रतियोगितावच्छेदकसंसर्गानुवादकतया साधुः। एव मेव चैत्रस्यैवायं भ्राता इत्यादौ चैत्रान्यनिरूपितानि यावन्ति भ्रातृत्वानि तेषां भ्रातृत्वसंसर्गेण चैत्रान्यसामान्यस्य वा व्यवच्छेद एवकार प्रतिपाद्यः। भ्रातृत्वन्तु स्ववृत्त्यन्योन्याभावप्रतियोगितावच्छेदिका स्वजनकपुरुषप्रयोज्यतावच्छेदिका च या शरीरत्वावान्तरजातिः तद्वत्त्व मिति बौद्धाधिकारविवरणे प्रपंचित मस्माभिः।

स्या देतत्, अधिकरणत्वं निरूपकतयाधेयत्वं वा स्वरूपेण फलान्वयि नद्वितीयार्थः, कालं पचतीति प्रयोगप्रसंगात्, पचिफलस्य कालनिष्ठाधिकरणतानिरूपकत्वात्। तत्तद्धातुसमभिव्याहृतद्वितीयायास्तत्तत्संसर्गावच्छिन्नाधिकरणत्ववाचकत्वे शक्त्यानन्त्यप्रसंगात्। त

द्र मधिकरणं द्वितीयार्थः, तस्य तद्धातूपात्ते फले तेन संसर्गेणान्वय इति व्युत्पत्तिवैचित्र्यमिति चेत् ?

निमित्त मन्तरा शब्दाप्रवृत्ते स्सर्वकर्मसु ।
निमित्तैक्यासम्भवा च्च न द्वितीयाश्रयार्थिका ॥ १२ ॥

द्वितीयाप्रत्ययानां विश्वस्मिन्नेवानवच्छिन्ना शक्तिः, तया स्वरूपेण स्मारिते वस्तुनि तादात्म्येन प्रातिपदिकार्थान्वय इति कल्पो न सम्भवति, स्वरूपतः तत्तत्पदार्थविषयकबुद्धित्वावच्छेदेन द्वितीयापदजन्यत्वावगाहिनो नित्यसंकेतस्य सम्भवेपि लौकिकैः तद्ग्रहणासम्भवात् स्वरूपेण विश्वस्यानुपस्थितेः । नापि विश्वत्व मुपलक्षणीकृत्य संकेतग्रहः, तादृशेन ग्रहेण स्वरूपतो विश्वस्य स्मरणासम्भवात् । एवं न कोपि शब्दः प्रवृत्तिनिमित्तविरहितशक्तिमान् । अथ सर्वकर्मसाधारणं किमपि निमित्त माश्रयणीयम् ? तत्राधिकरणत्वं नाम तत्तत्संसर्गावच्छिन्नानुयोगित्वस्वरूपं संसर्गभेदा द्भिद्यत एव । नतु सकलसंसर्गानुगतम् । सम्भवदपि गगनाभावादितुल्यशरीरात्माद्यभावादिभि रविनिगम्यतया शक्त्यानन्त्यापादकम् । नच तत्स्वरूपेण भासितु मर्हति, अजातित्वात् । तस्मा द्रोत्वजाति रिवाखण्डाश्रयत्व ममानकम् । स्या द्वा ऽभावादिवत् । तच्च न स्वरूपेण भासते । तस्मा त्संसर्गभेदभिन्न मधिकरणत्व माधेयत्वं वा द्वितीयार्थः । यत्तु अधिकरणत्वादेः शक्यत्वे तद्वृत्तिधर्मान्तरं शक्यतावच्छेदक मावश्यक मित्यनुशासनग्राहिता मधिकरणत्वस्वरूपविशिष्टे वृत्ति मेव किमिति न रोचये दिति । तत्तु तद्दर्शनसिद्धान्तानभिज्ञत्वद्योतनमात्रम् ।

नन्तु तथापि भावप्रधान माख्यातमिति निरुक्तस्मृत्या क्रियाया एव प्राधान्य मुपगम्यते, तत्कथं नैय्यायिकाद्यभिमतः प्रथमान्ताद्यर्थविशेष्यको वाक्यार्थबोधो न विरुध्यत इति चेत् ?

भावप्रधान माख्यात मिति निर्वचनस्मृतेः ।
आख्यातार्थेषु भावस्य प्राधान्य मनुशिष्यते ॥ १३ ॥

भावप्रधान माख्यातमिति निरुक्तस्मृते राख्यातार्थेषु संख्या वर्तमानत्वादिकेषु भावनाया एव धात्वर्थं प्रति प्राधान्य मर्थः, भाव पदेन भावनाया अभिधानात । अथाचार्यकल्पा इतिवत् पचन्ति कल्पाः पुरुषा इति प्रयोगप्रसंगः, प्रधानप्रकृत्यर्थस्य ईषदपरिसमाप्तपाककर्तुः संख्यान्वययोग्यतया तिङुपात्ताया इव सुबुपात्ताया अपि बहुत्वसंख्याया अन्वयसम्भवादिति चेत ? स्या दयं कर्तु राख्यातार्थतावादिनां दोषः, भावनातु धातूपात्तेव तिङुपात्तापि न संख्यान्वय मर्हतीति साधु त्वार्थक मेकवचनम् ।

पचन्ति कल्पं पुरुषा यान्तिरूपं जना इति ।
शाब्दिकाना मित्रास्माक मप्येकवचनं ध्रुवम् ॥ १४ ॥

ननु पश्य मृगो धावतीत्यत्र मृगस्य धावनक्रियां प्रति प्राधान्येन तस्यैव कर्मतया दर्शनेन्वय स्स्वीकर्तव्यः, अन्यथा वाक्यभेद प्रसंगात् । तथा च मृगा द्वितीया दुर्वारा स्यात , धातो रिव पर्युदासाभावेन प्रातिपदिकत्वादिति चेत? सत्यं, वाक्यैकवाक्यतयैवात्र वाक्यार्थः कर्मत्वेन विवक्षितो नतुवाक्यं प्रातिपदिकमितिकथं द्वितीयाप्रसज्येत । वाक्यं वृत्त्यार्थवत्त्वाभावात कृत्तद्धितसमासाश्चेति नियमविधेर्वा न प्रातिपदिकम् । अतएव-

देवाकर्णयसंग्रामे चापेनासादिताःशराः ।
मलिनन्ते वपुस्त्नाया दित्यादावेकवाक्यता ॥ १५ ॥

संग्रामाधिकरणक चापकर्तृकासादनकर्मणां विशिष्टविषयता स्वरूपकर्मत्वसंसर्गेण देवसम्बोध्यकाकर्णनक्रियायां, मलिनस्य वपुषो विशेषण भागोपसंक्रान्तविशिष्टहेतुतासंसर्गेण स्नानेचान्वयेपि न कर्मणि

द्वितीया, नवाहेतौ पंचमी, वाक्यस्य प्रातिपदिकसंज्ञाविरहात् । एवं धावतोमृगस्यापि विशिष्टकर्मतया दर्शनेनान्वयेनततोद्वितीया । कालय परिप्लुवन्ते गाव इत्यादौ परिप्लवनकर्तृगवां कालने कर्मतयान्वया देकवाक्यत्वम् ।

ननु तथापि केनविनिगमकेनेदं परिच्छिद्यते, यत्प्रथमान्तार्थ एव प्रधानमिति चेत्; उच्यते-

प्रयातिपुरुष स्तस्य पादयो रभिवादय ।
इत्यादौ प्रथमान्तार्थः प्राधान्यान्मृश्यतेतदा ॥ १६ ॥

यदि तिङ्प्रथमान्तयोः प्रथमान्तार्थस्य प्राधान्यं न स्यात् तदा प्रयाति पुरुष इत्यत्र पुरुषस्तच्छब्देन न परामृश्येत, गुणीभूतार्थस्य तच्छब्देन परामर्शासम्भवात् । अन्यथा "दशैतेराजमातंगा स्तस्यै वामी तुरंगमा" इत्यत्र राज्ञस्तच्छब्देन परामर्शप्रसंगात् । अतएवानु मानं निरूप्यतइत्युपक्रम्य तत्रानुमितिरिति तदानिरूपणपरामर्शासम्भ वात् तत्र निरूपणीये ऽनुमानइति प्रभाया मुपाध्यायाः ।

अत्र तत्तद्धातु समभिव्याहृतद्वितीयायाः संयोगविभागादिरर्थः, द्वितीया साकांक्षधातुत्वमेव सकर्मकत्वमिति शुद्धव्यापारस्य धात्वर्थता वादिनः । परेतु धात्वर्थफलावच्छिन्नव्यापारे द्वितीयार्थस्य फलान्वय मभ्युपगच्छन्ति । तदुभयमपि चिन्त्यम् ।

शाब्दिकतार्किकयो र्मतं प्रदर्श्य भाट्टदर्शनसिद्धान्तः प्रस्तूयते ।

आख्यातार्थे भावनायां वदन्तःकारकान्वयम् ।
भाट्टाः कर्तृत्वकर्मत्वा द्यखण्डामिति शासति ॥ १७ ॥

आख्यातार्थे भावनायां प्रधानभूतायां कारकाणामन्वयः । ननु धात्वर्थे, तस्यापि भावनायामन्वयात् कारकतया पदार्थानां कारकाणां परस्परमन्वयायोगात् । कारकन्तुकर्मकर्तृत्वादिक मखण्डएवपदार्थः ।

अतएवाध्वर्यु यजमानयो र्वाक्संयमनभावनाकर्मत्वं दम्पत्योः कर्तृत्वं व्यासक्तमित्युपपद्यत इति भट्टाः।

नन्वाख्यातस्य फलव्यापारोभयवाचित्वाभावात् सकर्मकत्व माख्यातार्थभावनाया मनुपपन्नमिति। मैवं,

करोति रुत्पादयति स्साधि भावयति र्जनिः।
विवृण्वते तिङन्तेनोत्पत्तिव्यापारयो रसौ ॥ १८ ॥

तिङ्प्रत्यय स्ताव दुत्पत्तिवृत्त्यनुकूलव्यापारे उत्पत्तिव्यापारयो र्वा वर्तते। एकपदार्थयो रन्वयबुद्धा वनुकूलत्वस्य संसर्गत्वेनैव लाभ सम्भवात्। अत एवोत्पत्तिपरिच्छिन्नव्यापारवाचिनः करोत्यादयः आख्यातं विवृण्वते।

भावनान्वयवोत्पत्ता वाधारत्वेन संगतं।
कर्म तद्भवते क्वापि धातवः कुत्रचित्फिषः॥ १९ ॥

पचतीत्यत्र पाकं करोत्युत्पादयति साधयति भावयति जनयतीत्यादि विव्रियमाणस्या ख्यातस्या र्थे उत्पादनाया मेकदेशीभूताया मुत्पत्तौवा धाराधेयभावेनान्वितः पाकोधात्वर्थ एवकर्म। अत एव विवरणवाक्ये पाकपदात् कर्मानुवादिका द्वितीया। यत्रचौदनं पचति इत्यत्रा ख्यातार्थभूताया मुत्पत्तौ अन्वय योग्य मोदनादि वृत्तित्वं द्वितीयोपस्थापितं, तत्रफिषां प्रातिपदिकानामर्थ एवकर्म। धात्वर्थस्य तत्रकरणत्वे नौदनोत्पत्तावन्वयः। अतएव पाकेनोदनं भावयतीत्येव तादृशवाक्यस्यविवरणं। अतएव

भावनाकर्मभूतस्य धात्वर्थस्य विशेषणे।
अग्निहोत्रं जुहोतीति द्वितीया प्रतिपद्यते ॥२०॥

यत्र नित्यस्थले न फलान्तरं भावनान्वययोग्यं, तत्र नित्यतया प्राप्तकर्तव्यताको जुहोतिधात्वर्थएव भाव्यतया कर्म। अतएवजु

होति समानाधिकरणे कर्मनामधेयाग्निहोत्रपदे द्वितीया, कर्मविशेषण पदत्वात्, नीलंघटमानयेत्यत्र नीलपद इवेत्युपपद्यते ।

विनाभाव्यान्तरं यत्र नोपपन्ना प्रवर्तना ।

श्रुतंवा कर्मकरणीभूय तत्रक्रियान्वयः ॥ २१ ॥

यस्यां भावनायां स्वर्गादिभाव्यंविना निष्फलत्वेन नलिङुपात्तप्र वर्तनाया अन्वयसम्भवः, तत्र क्रियाया न कर्मत्वेनान्वयः; एककर्माव रुद्धेकर्मान्तरस्यानाकांक्षितत्वात् । किन्तुकरणत्वेन । अतएव सोमेनयजेते त्यत्र स्वर्गस्वरूपेण स्वर्गकामपदोपात्तेनाक्षिप्तेनवा भाव्येन सकर्मिकायां भावनायां करणतया यागादेरन्वयः । तथाच स्वर्गवृत्ते र्यागकरणिका या उत्पत्तेरनुकूलो व्यापारः प्रवर्तनागोचर इति यजेतेत्यत्रवाक्यार्थः । अतएव यजेतेत्यस्य यागेन स्वर्गं भावयेदितिविवरणम् ।

यजत्यर्थसमानाधिकरणेहि विशेषणे ।

तृतीया दृश्यते यागकरणत्वा नुवादिका ॥ २२ ॥

ज्योतिष्टोमेन यजेतेत्यत्र कर्मनामधेय ज्योतिष्टोमपदा त्तृतीया श्रूयते । साच यागभावनायाः संसर्गतया लब्धस्य करणत्वस्यानुवाद कत्वएव संघटते, करणपदसमानाधिकरणे नाम्नि तृतीयायाः कुटिलेन दण्डेन गामानयेत्यादौ दर्शनात् । नन्वेवं " गोदोहेन पशुकामस्य प्रणयेत् ", " दध्नेन्द्रिय कामस्य जुहुयादि " त्यादौ प्रणयनहवना देः धात्वर्थस्य न करणतया भावनान्वयः, दधिगोदोहनादिना करणेना वरुद्धायां करणान्त राकांक्षानुदयात् । नापिकर्मतया, पश्विन्द्रियभाव्या वरुद्धायां भाव्यान्तरनिराकांक्षत्वादितिचेत् ?

क्वचि त्प्रकरणोपात्तक्रियाया अनुवादकः ।

धातु रन्वयवैधुर्या दाख्यातं न व्यपेक्षते ॥ २३ ॥

यत्र प्रकरणवशा दुपस्थितो धात्वर्थः शब्दोपात्ते भावना करणकर्मणी तत्र केवलस्य प्रत्ययस्या साधुत्वा दाख्यातप्रयोगमात्र प्रयोजनको धातु रनुवादकः, नतु तदर्थो वाक्यार्थे निविशते । भावनायां कर्मत्वकरणत्वान्यसंसर्गेण क्रियाया अनन्वयात तयोश्चा कांक्षाविरहात् ।

हन्तैव मप्राप्तधात्वर्थके पदोपात्ताकरणकर्मके सोमेन यजेते त्यादौ क्रियाया भावनान्वयो दुर्घट इति चेत् ?

सोमादिशब्दे मत्वर्थलक्षणा मवलम्ब्य यः ।
विशिष्टविधि रत्रापि भावनाकरणं क्रिया ॥ २४ ॥

सोमेन यजेतेति वाक्यं सोमगुणविशिष्टं यागमेव भावनाक-रणतयाभिधत्ते । तदुपपादनाय सोमपदस्य सोमवति लक्षणा स्वी कार्या । तेन सोमवता यागेन स्वर्गं भावयेदिति वाक्यार्थः ।

नन्वेव मुत्पत्त्यवच्छिन्नव्यापारे भावनाया मुत्पत्ता वधिकरण तयान्वितं कर्म, करणतयान्वितं करणं, व्यापारांशेधिकरणत्वेना न्वितः कर्तेत्यधिकरणत्व माधेयत्वं वा करणत्वं कार्यत्वं वा तृतीया दीना मर्थोस्तु ; कृत मखण्डकर्तृत्वकरणत्वकर्मत्वादिस्वीकारेणेति चे दुच्यते –

भावनाकर्मणि स्वर्गे व्रीहौ धात्वर्थकर्मणि ।
कर्मानुगतबुद्ध्यैवाखण्डं कर्मत्व मिष्यते ॥ २५ ॥

स्वर्गकामो यजेतेत्यत्र स्वर्गो भावनाया व्रीहीनवहन्तीत्यत्र व्रीहि र्धात्वर्थावहननस्य कर्मेत्यनुगत्य प्रतीयते व्यवह्रियते च । तत्र धात्वर्थतावच्छेदकेन तिङर्थतावच्छेदकेन सम्बन्धो नानुगमेन निर्वक्तुं शक्यत इति पदप्रमाणकं कर्मत्व मखण्ड मनुगत मभ्युपे-तव्यम् । एवं कर्मत्वकर्तृत्वादे रखण्डत्वादेव –

विधिवाक्येषु कर्मत्व मध्वर्युयजमानयोः ।
दम्पत्यो रपि कर्तृत्वं व्यासक्त मिति युज्यते ॥ २६ ॥

अध्वर्युयजमानौ वाचं यच्छत इत्यत्राध्वर्युयजमानयोः कर्मत्वं, क्षौमे वसानावग्नीनादधीता मित्यत्र दम्पत्योः कर्तृत्व मेक मेव द्वयोः पर्याप्यत इत्यधिकं विधौ बोधयिष्यते ।

स्या देतत्, मतत्रयेपि घटं जानातीत्यादा वावरणभंगः प्राकट्यं विषयतास्वरूपं वा धात्वर्थफलं, अजन्येपि व्यापारविशेषणे धात्वर्थान्तरे फलपरिभाषा मादाय कर्मसंज्ञाप्रवृत्तेः । अखण्डकर्मत्व पक्षेपि दर्शनान्तराभिमतकर्मत्वव्यंग्यस्यैव तस्याभ्युपगमात् । एवमपि भगवान् भगवन्तं जानात्यात्मनात्मानं वेत्सीत्यादौ भगवतः क्षेत्रज्ञस्य वा भेदा द्व्यापारफलयो स्तुल्याधिकरणत्वात परया कर्मसंज्ञायाः कुतो न बाधः? कथं वा तत्र क्रियायाः परसमवेतत्वं? यत्त्ववच्छेदक भेदादेकस्यापि कर्तृत्वकर्मत्वोभयं न विरुद्धमिति; तन्न, भेदाभेद वादोपगमे चैत्र श्चैत्रं गच्छतीति प्रयोगापत्ते स्तथापि दुर्वारत्वादिति चेत्? सत्यम् ।

आधेयत्वंच भेदंच युगपद्भवतोप्यमः ।
जानासित्वांत्व मित्यादौ भेदहानेनलक्षणा ॥ २७ ॥

यद्यपि त्वमेवत्वां जानासीत्यादौ विषयतास्वरूप फलगाम्याधेयत्वमात्र मभिधयाप्रतिपादयितुममानशक्यते, तस्य पुष्पवन्तादिपद वदेकयोक्त्याफलगाम्याधेयत्वं कर्त्रादिगामिभेदं चाभिधातुमेव सामर्थ्यात् । तथापि भेदांशापहारेणा धेयत्वमात्रे द्वितीयाया लक्षणा संभवत्येव, बलवदनिष्टाननुबन्धित्वांशापहारेण विधेरिवश्येनादौ । तथा चात्र भेदहानेनवाक्यार्थबुद्धिरिति तार्किकसरणिरेव श्रेयसी ।

ननु लोके विभक्तौ न लक्षणा, तथाहिवार्तिकं, "सुपांकर्मादयोप्यर्थाः संख्याचैव तथातिङां । प्रसिद्धोनियम स्तत्र नियमः प्रकृत

वा ॥ " इति । सुपांतिङां च यथानुशासनं कर्मादिकारकमेकत्वा दिसंख्याचार्थः। तत्रानुशासनानि नियमपर्यवसायीनि । सच नियम एकवचनमेवैकत्वं द्विवचनमेव द्वित्वं द्वितीयैवकर्मत्वं प्रतिपादयती त्याकारः। तेनद्वितीयाभिन्ने कर्मत्वबोधकत्वाभावः फलति । नन्वेवं द्वीतीयाक्वचित् कर्मापहाय गमनमपि बोधये दुक्तनियमभंगप्रसंगविर हादित्यतः पक्षांतरमाह ( नियमः प्रकृतेषुवेति ) तथाच द्वितीया क-र्मण्येवेति नियमशरीरम्। तथाच यावन्तोनुशासनसिद्धा द्वितीयार्थास्त स्मात प्रकृतादन्यमर्थं द्वितीया नप्रतिपादयतीत्यर्थतः फलितमिति त-स्यवार्तिकस्य विवरणम्। अतः कथमननुशिष्टे कर्मैकदेशे द्वितीया सा-धुरितिचेन्न; -

विभक्तिः प्रकृतेष्वेवेत्येवं नियमवादिनि ।
चतुर्थे चरणेऽनास्थां वाकारेणाह वार्तिकम ॥ २८ ॥

कथितवार्तिकस्यचतुर्थचरणे अनास्थायां वाकारः । विभक्तिः प्र-कृतेष्वेवेतिनियमशरीरस्या संभवदुक्तिकत्वात्। तर्हि विभक्तित्वावच्छे देन प्रकृतभिन्नप्रतिपादकत्वाभावः प्रकृतप्रतिपादकत्वं च प्रतीयते। नतु विभक्तित्वसामानाधिकरण्येन, विभक्तिः कर्मण्येव शब्दोवाचक एवेत्यप्रयोगात्; उद्देश्यतावच्छेदकावच्छेदेनो भयभागयोग्यत्व एवैव कारस्य साधुत्वात्। दृश्यन्ते च निरर्थका अपि निपातसमभिव्याहृताः सुपः। अव्ययार्था नासत्त्वस्वरूपत्वेन संख्यान्वयेप्ययोग्यत्वात । प्रा-तिपदिकार्थः सत्ताच सुपामर्थ इति प्रागेव निराकृतम् ।

ननु -भवतुतर्हि प्रकृतेषु विभक्तिरिति परिसंख्या,विभक्तिः प्रकृते तरत्नप्रतिपादयतीतितस्या एव छंदसि प्रतिप्रसवः क्रियते सुपांस्विति। तेन स्वर्गकामोयजेतेत्यत्र प्रथमैव स्वर्गस्य यागकरणकभावनाकर्मत्वं लक्षणया प्रतिपादयन्त्यपि नाननुशिष्टविषया । अक्षीणिमे दर्शनीयानि सुंदराः पादाः संपन्नाव्रीहयइत्यादौ जातिगतैकत्वाभिधायकं बहुवचनमपि

"जात्याख्यायामेकस्मिन् बहुवचनमन्यतरस्या" मित्यनुशासनप्रति प्रसूतमिति नास्त्यननुशिष्टे विभक्तीनां लक्षणेतिचेत्? तर्हि -

'भेदाधेयत्वयोः शक्ति रमोनेकार्थमुद्रया ।
द्वयो रबाधे भेदस्य बाधेन्यस्य समन्वयः ॥ २९ ॥

कर्मणि द्वितीयेत्यनेन सूत्रेण कर्मषटकेषु क्रियाफल तदधिकरणाना मन्यलभ्यतया भेद आधाराधेयभाव अमौदृशसां शक्य इति प्रतिपाद्यते । शक्तिर्नयौगपद्येन, पुष्पवन्तपदवद्बोधकाभावात् । किन्तु नानार्थरीत्या । आकांक्षावैचित्र्या च्चैकपदोपात्तयोरपि भेदाधेयत्वयोर्यौगपद्येनान्वय बुद्ध्यनुप्रवेश औत्सर्गिकः । यत्रकर्तरि कर्तृमात्रेवा फलं· तदधिकरणान्वययोग्यः कर्ता, यत्रतु फलस्य व्यापाराधिकरणमात्रगतत्वेन भेदान्वयबाध स्तत्राधेयत्वमात्रं द्वितीययाशक्त्यैव प्रतिपाद्यते । नचानुशासनव्यत्ययइति बाधसापेक्षवृत्तित्वेनाभिधाया मेव लक्षणाव्यपदेशः । बाधश्चात्र फलाधिकरणभिन्ने व्यापारोनप्रवर्ततइति सामान्याकारेणोपतिष्ठते । तेन द्वयनियतवृत्तिक संयोगादिफलकेधातौ नियमेनोभयान्वयएव । तेन चैत्रश्चैत्रंगच्छतीति न प्रयोगः । यत्र चैकमात्रवृत्ति विक्लत्यादिफलं तत्र कर्मगतव्यापाराभिधायिनि धातौ "कर्मवत्कर्मणातुल्य क्रिय" इत्यनेन फलतो द्वितीया प्रतिषिद्ध्यते । कर्मवदितिसूत्रन्तु निर्वर्त्यविकार्यकर्ममात्रविषयकामित्यतः प्राप्यकर्मगतव्यापाराभिधायिनि धातौ जानातीत्यादौ आधेयत्वमात्रार्थिका द्वितीयानानुपपन्नेत्यधिकं सकर्मकत्वलक्षणे ऽनुसन्धेयम् । ज्ञाधातोर्बुद्धिः फलं, तदनुकूलोव्यापारः क्रिया, बुद्ध्यन्वयिनिविषयत्वे द्वितीया लाक्षणिकी नकर्मसंज्ञा मपेक्षते । स्वंजानातीत्यादौ कर्तृसंज्ञावरुद्धेपि विषये द्वितीया नानुपपन्ना । "नियमः प्रकृतेषु वे" ति वार्तिकं तु निरूढलक्षणास्वरूपां वृत्तिमेव प्रकृतेषु नियमं प्रापयति । इयन्तु स्वारसिकी विभक्ते र्विषयत्वादौ लक्षणा । एवं मेव स्वं द्विनस्तीत्यत्र ध्वंसं तदुत

कूलव्यापारं चाभिदधतोहिंसेरर्थे ध्वंसे फले द्वितीयालक्ष्यं प्रतियोगित्व मप्यन्वेति । नचापेक्षते प्रतियोगिनि कर्मसंज्ञाम्, आकडारादेका सं-ज्ञेति कर्तरि तदसम्भवात् । अभिधेयमाधाराधेयभावमात्रन्तु द्वितीया प्रभवति प्रतिपादयितुं, भेद मादायैव तस्याः स्वाभिधेयप्रतिपादक-त्वात् । अतो न चैत्रं श्वैत्रं गच्छतीति प्रयोगः । नचैवं स्वारसि-कलक्षणाया अनियाम्यत्वे द्वितीयया प्रतिपाद्येतेति वाच्यं, स्वारसिक लक्षणायामपि भट्टपादै रप्रयोगस्य बाधकत्वोपन्यासात् । यदाहुः - "क्रियन्ते सांप्रतं काश्चित् काश्चि न्नैवाप्रयोगत " इत्युदाहरन्ति । रक्तं वस्त्रमिति प्रयोगतः क्रियते, रूपं वस्त्र मित्यप्रयोगतो न क्रियत इति कारिकाया अन्वयः । नेयार्थतापीयमेव पदप्रयोगप्रतिहता । लक्षणाप्रयोजनराहित्य मत्र नेयार्थताप्रयोजकमिति प्रयोजनप्रत्यय जननयोग्यतावच्छेदक सल्लक्षणत्वविरहपरमिति तत्र तत्र द्रष्टव्य मित्यपि वदन्ति ।

अकथितंचेति सूत्रेण विषये कर्मसंज्ञा ज्ञाप्यते । यतेस्तु प्राधान्येन यत्नवाचिनो धात्वर्थ फलाभावाद कर्मकत्वान्न विषये कर्मसंज्ञेत्यपरे ।

धातोरुत्सर्गतो वृत्तिः फलव्यापारयो र्द्वयोः ।
विद्यन्ते केचनत्र्यर्थां दुह्याचूपृच्छिरुधादयः ॥ ३० ॥

उत्सर्गतो धातूनां फलव्यापारावर्थौ द्वावेवेति प्रपंचितप्रायम् । दुहादयस्त्रयर्थाः । तथाहि - विभागः स्यन्दनंव्यापरश्चदुहेरर्थः । स्यन्दन त्वं द्रवद्रव्यजन्यतावच्छेदिका क्षीरादिक्रियावृत्तिर्जातिः । गांदोग्धि दुग्धं गोपाळ इत्यत्र गोविभागोजनकतया क्षीरस्यन्दने, तच्च तथैव गोपाळव्यापारेन्वेति । दानं प्रतिश्रवः व्यापारश्चयाचेरर्थः । देय-त्वेनाभ्युपगमः प्रतिश्रवः । राजानं कनकं याचत इत्यत्र राजसम वेतं दानमनुकूलतया कनकविषयके प्रतिश्रवे, सच स्वलिप्साप्रका-शके देहीतिवाक्यादौ भिक्षुव्यापारे संसृज्यते । कनक विषयतैव

द्वितीयार्थः । एतज्ज्ञापक लिङ्गैव विषयस्य कर्मसंज्ञा । समवायेन दानप्रतिश्रवयोः सामानाधिकरण्येपि समवाय विषयत्वाभ्यां वैयधिकरण्यमस्तीतिभवति प्रतिश्रवांशे धातोः सकर्मकत्वं । प्रतिश्रवोव्यापारश्चेत्युभयमेव धातोरर्थः । प्रतिश्रवश्च समवायिना विषयेणकर्मणा साकांक्षइतिभवति द्विकर्मको याचिरित्यपिवदन्ति । उत्तरमनुशास्यत्व मनुयोगश्चपृच्छेः । सामान्यवति विशेषबोधकं वचनमुत्तरम् । जिज्ञासितत्वेन प्रतिपत्तिरनुशास्यता । किमादि शब्दघटित वाक्यादिरनुयोगः । जानपदं पन्थानं पृच्छतिपथिक इत्यत्रपरम्परया जानपदाश्रितमुत्तरं पथविषयक जिज्ञासितत्व प्रतिपत्तौ, साचकः पन्था इत्यादिवाक्ये जनकतयान्वेति । अत्राप्युत्तरमात्रम्फलम् । तच्च कृतिद्वाराधिकरणेन ज्ञानद्वाराविषयेन कर्मणान्वित मित्यपरे । विभागानुत्पादः कर्मानुत्पादो व्यापारश्च रुधेः । व्रजंगां रुणद्धीत्यत्र व्रजविशेषितो विभागानुत्पादोगोः कर्मानुत्पादे, सच पुरुषव्यापारे योगक्षेम साधारण्या जनकतयान्वेति । व्रजपदादि समभिव्याहृता द्वितीया भेद माधेयत्वं चाभिधत्ते, तेन गांगां रुणद्धीति नप्रयोगः । अतएव द्वितीयायाः केवल माधेयत्वे शक्त्या न निर्वाहः, कर्मसंज्ञाया स्तां प्रत्यबाधकत्वेन निरुक्त प्रयोगापत्तेः । संयोग ध्वंस आकर्षण कर्म व्यापारश्च चिनोतेरर्थः । तरुं पुष्पं चिनोतीत्यत्र तरुसंयोग ध्वंस स्तदाकर्षणरूपे पुष्पकर्मणि, तच्च पुरुषव्यापारे जनकतयाविशेषणं।शाब्दबोधः स्मरणंशब्दश्चब्रुवः, नृपंहितं ब्रवीति इत्यत्र नृपसमवेतशाब्दबोधो हितविषयस्मरणे, तच्च वचने जनकतयान्वेति । शाब्दबोध एव ब्रवीति फलम् । सच समवायिविषयोभयगामीत्यन्ये । स्वामित्वध्वंसस्त्यागो व्यापार श्च दण्डेः । गर्गं शतं दण्डयतीत्यत्र गर्गविशेषितः स्वामित्वध्वंसः शतविषयके त्यागे, सच प्राड्विवाकव्यापारेन्वेति । कृति रुपदेशो व्यापारश्च शास्तेः । कृतिः प्रवृत्ति निवृत्ति श्च । उपदेशः कर्तव्यत्वेना कर्तव्यत्वेन वा व्यवसायः । शिष्यं धर्ममधर्मं वा शास्तीत्यत्र यथायथं शिष्यसमवेताप्रवृ

त्तिर्निवृत्तिरुपदेशयो र्धर्माधर्म विषयकयो स्तौच गुरुव्यापारे विशेषणं । दण्डयतेः प्रभुव्यापारो जयते स्तुद्यूतादि प्रधानमिति मुख्यार्थ कृतोर्थ भेदोनगुणकृतः । यथा आक्षिकं शतं जयतीति । मज्जनाख्यसंयोग ध्वंस उद्गमनाख्यं कर्म व्यापार श्च मन्थेः । क्षीरसागरं कौस्तुभं मथ्नातीत्यत्र क्षीरसागरादिसंयोगध्वंसः कौस्तुभादिकर्मणि, तच्च विलो- डनव्यापारेन्वेति । स्वामित्वे सति यथेष्टाविनियोगः स्वत्वाभावे यथेष्टविनियोगो व्यापार श्च मुष्णातेः । वणिजं हिरण्यं मुष्णातीत्यत्र स्वामिनो वणिजो यथेष्टविनियोगाक्षमत्वं हिरण्यस्य स्वस्य विनियोग योग्यत्वे, तच्च तस्करव्यापारे प्रयोजकत्वेन । शिथिलावयवरूपा वि- क्लृति रुत्पत्ति र्व्यापारश्च पचेः । तण्डुला नोदनं पचतीत्यत्र ओदनो त्पत्तौ तण्डुलविक्लृतिः सा व्यापारे विशेषणत्वेनान्वेति । एते द्वादश धातवो दुह्यादयः । संयोगः कर्मव्यापार श्च नयतेः । ग्राम मजां नयतीत्यत्र ग्रामाद्युत्तरसंयोगे जाकर्मणि, तच्च पुरुषव्यापारे प्रेरणाया मन्वेति । नयतिनाप्रेरणादि वहतिनापुन राधेयकर्मानुकूलमाधार कर्म प्रत्याय्यत इति विवेकः । नौकादिस्वकर्मणा पुरुषे कर्म जन यित्वा देशान्तरं नयति । नाश्यसंयोगसन्निकृष्टसंयोगादित्रिकं नयति वत् कृषे रर्थः, वहतिवच्च हरते रिति चत्वारो न्यादयो धातवः । एवं षोडश त्र्यर्थाः । दण्डजयत्यादिवत् ग्रहिरपि त्र्यर्थ इति केचित् । तन्निर्मूल मित्यन्ये ।

तेषां त्रयाणा मर्थानां द्विक्रिये मध्यमान्तिमे ।
आदिमध्ये फले तत्र कृतार्थ मनुशासनम् ॥ ३१ ॥

कर्तृप्रत्ययान्तेन धातुना स्वार्थविशेष्यतया प्रतिपाद्यमानो व्यापारः, स्वार्थविशेषणतया प्रतिपाद्यमानं फलं । स्वजन्यस्मरणमुख्य विशेष्यतया भासमानः स्वार्थः । तत्र विशेषणविशेष्यते आकांक्षा नियम्ये, नतु प्राकृते, तेन कर्मप्रत्ययान्तेन धातुना फलस्य प्राधान्येन

प्रतिपादनेपि न व्यापारत्वम्, नवा तत्र गुणतया भासमानस्य व्यापारस्य फलत्वम् । नवा फलतावच्छेदकविशेष्ये फले व्यापारत्वं न व्यापार विशेषणे व्यापारतावच्छेदके फलत्वम् । तथाच गां दोग्धि दुग्धं गोपाल इत्यत्र स्यन्दनं पुरुषव्यापारश्च क्रिये, स्यन्दनं विभागश्च फले । तथा च मुख्यव्यापारशालितया गोपालस्येव गुणीभूतव्यापारवत्तया दुग्धस्यापिकर्तृत्वप्रसक्त्या तदपवादाया कथितं चेति सूत्रम् । एतेन धात्वर्थफलशालितया गोदुग्धयो र्द्वयो रपिकर्मत्वं "कर्तुरीप्सितम्" "तथा युक्तमनीप्सितं च" ति सूत्राभ्यामेव सिद्धमित्यकथितसूत्रा रम्भोनिरर्थकइति समाहितम्, कर्तृकर्मोभयसंज्ञाप्रसक्तौ परत्वात् कर्तृसंज्ञाया एव विनापवादं दुर्वारत्वात् ।

विभागेन परिच्छिन्नं स्यन्दनं ब्रुवतोदुहेः ।
एकदेशान्विते कर्म संज्ञार्थं वा नुशासनम् ॥ ३२ ॥

भवतु तर्हि विभागजनकस्यन्दनं फलविधयाबोधयन् द्व्यर्थ एव दुह्या दि धात्वन्तरवत् । तदर्थैकदेशान्वयं तत्प्रयुक्तागौणकर्मणि गवादौ कर्मसंज्ञांचा पूर्वं प्रतिपादयितु मकथितं चेत्यनुशासनम् ।

शाब्दिकास्तु "गान्दोग्धिदुग्धमित्यत्र गोः सम्बन्धमात्रविवक्षायां शेषेषष्ठीप्रसक्ता रजकस्यवस्त्रंददातीत्यादिवत्, तदपवादायाकथितं चेति सूत्रारम्भः । तथा च गोसम्बन्धिपयः कर्मकन्दोहनं वाक्यार्थः । यदि च गोर्विभागाधिकरणत्व विवक्षा तदाभाकृतीकर्मसंज्ञा । गवा धिकरणकविभागानुकूलं पयोधिकरणकं स्यन्दनं, तदनुकूलो गोपा धिकरणको व्यापारइतिबोधः । यदि च गोरवधित्वविवक्षा तदा गोःपयोदोग्धीति पंचमी । गोः सम्बन्धविवक्षायां षष्ठ्यपि प्रामाणि कीति प्राहुः ।

दुह्यादयोन्यादयश्च द्विविधास्ते द्विकर्मकाः ।
प्रथमोसौ गौणकर्मप्रत्ययप्रकृतिर्गणः ॥३३॥

यदिदं प्राक्प्रतिपादितं दुह्यादिरिति न्यादिरिति द्विकर्मकधातूनां द्वैराश्यम् । प्रथमोदुह्यादिर्गणो गौणे फलविशेषण फलाधिकरणे कर्मण्या ख्यातकृत्यक्त खलर्थानां प्रकृतिः, नतु मुख्ये ; न्यादिस्त्वर्थान्मुख्ये मुख्यव्यापारविशेषणफलाधिकरणे प्रतिपाद्ये कर्मप्रत्ययान् लभते, नतु गौणे । तत एव तयो गणयो रितरांशेकर्मानभिधाना द्वितीयैव प्रयोज्या । तथाहि – दुह्यते दोग्धव्या दुग्धा दुर्दोहा गौः क्षीरमित्यादौ कर्मप्रत्ययाः गोः कर्मत्व मभिदधते, नतु पयसः । अत एव राजाशतं याचितः अहमिदमन्योद्यं चोद्यं इति पृच्छिपर्यायेण चुदिनाभाष्यम् । गामवरुध्यते व्रजः पुष्पमपचीयते लता हित मुक्तो भ्यसूयति गर्गाः शतं दण्ड्यन्ते जीयन्तेवा, धर्ममनुशास्यते शिष्यः देवासुरै रमृतमम्बुनिधि र्ममन्थे, रत्नानिमुषितोवणिक्, ओदनाःपच्यन्ते तण्डुलानित्यादिप्रयोगाश्च दुह्यादिभ्योगौणे; नीयते ग्राममजा, द्वीपमुह्यन्ते नावा सांयात्रिकाः, निकटंकृष्यते कन्दुक इत्यादयश्च प्रधानेकर्मणि प्रत्ययं प्रयुञ्जते ।

गतिबुद्ध्यशनार्थेषु शब्दकर्मण्यकर्मके ।

अणौ कर्तासणौ कर्म नियमा दथवा विधेः ॥ ३४ ॥

गत्यर्थागमिव्रज्यादयः बुद्ध्यर्था ज्ञानत्व विशिष्टवाचकाज्ञा बुद्ध्यत्यादयः । नतु ज्ञानविशेषार्थाजिघ्रत्यादयः । अशनार्थाः गळसंयोगफल व्यापारवाचिनो भुज्याद्याः । शब्दकर्माणः शब्दवाचका इति केचित् । कर्मपदं कारकपरं, तेनशब्दा भिन्नकारको पळक्षितक्रिया वाचिनइत्यपरे । अकर्मका देशकाळभाव गन्तव्याध्वभिन्नैः कर्मभिरव्यपेक्षाः, नतु कर्मव्यपेक्षायोग्याः । अविवक्षितकर्मिणोपिगम्यादयः कुरून् स्वापयति पथिकंमासमासयति गुरुं गोदोहं स्थापयतिमाणवकं क्रोशं रमयति यात्रिकानिति प्रयोगवत् पाचयति चैत्रेणेत्येवप्रमाणं । एषां धातूनां णिजभावे यत्र कर्तृसंज्ञा तत्राणिच्समभिव्याहारे सति कर्मत्वं

संज्ञायते । गमयति दिगन्तर मरी नित्यचारीणां कृतिः,बोधयति धर्म माणवकानित्यत्र माणवकानामाधारत्वं, तदाधेयत्वं वा, भोजयति मिष्टमतिथीन् इत्यत्रातिथीनां प्रपन्नः, एवं ब्रह्मव्यवहारयति इत्यत्रैतस्मिन् कर्तृत्वं, आसयत्यतिथिमित्यादा वतिथौ यत्नश्च द्वितीयार्थः । सच णिच् प्रकृतिधात्वर्थान्वयीति दार्शनिकाः । णिच्प्रकृतिधात्वर्थान्वित आश्रयो द्वितीयार्थइति वैयाकरणाः ।

नन्वेवं गमयति दिगन्तरमरीनित्यत्र णिजन्तधात्वर्थव्यापार विशेषणीभूत गमनादिफलवति कर्मसंज्ञायाः "कर्तुरीप्सिततमं-कर्म" इत्यनेनासिद्धेः गतिबुद्धि प्रत्यवसानार्थ शब्दकर्माकर्मकाणामणि कर्तासणौ" इतिसूत्रं व्यर्थमितिचेत ? सत्यं, नियमार्थमिदंसूत्रम् । णिजन्तप्रधानकर्मसंज्ञा ण्यन्तागत्यर्थादि ष्वेव, अन्यत्रतु णिच् प्रकृतिधात्वर्थाधिकरणतया कर्तृसंज्ञैवावतिष्ठते, तेन चैत्रेण पाचयत्यन्नमितिप्रयोगः सूपपादः । तदाहुः- "गुणक्रियायां स्वातन्त्र्यात प्रेरणे कर्मतांगतः । नियमात्कर्मसंज्ञायाः स्वधर्मेणाभिधीयते ॥" इति । गुणक्रियायां णिच्प्रकृत्यर्थे व्यापारस्वातन्त्र्यं साक्षादाश्रयत्वं पंचम्यर्थः स्वधर्मेण तृतीययाभिधाने ऽन्वेति प्रेरणे णिजर्थे कर्मतांगतोपीति शेष इतिप्राञ्चः ।

नवीनास्तु विधायकमेव गत्यादिसूत्रं । अन्यथा परया कर्तृसंज्ञया कर्मसंज्ञाया बाधप्रसंगात् । प्रयोज्ये कर्तृसंज्ञां विना णिचएवानुत्पत्त्या तत्सापेक्षकर्मसंज्ञाया मुपजीव्यतयाकर्तृसंज्ञायाएव बलवत्त्वात हेतुमति णिज्विधीयते । कर्तृप्रयोजकश्चहेतुः स्वकारकविशिष्टाच क्रिया णिजर्थेन्वेति । गुणक्रियाकारकसंज्ञा न्तरंगतयाबलवती । अर्थतः प्रधानंच गुणक्रिया भवति । गमयति चैत्रइत्यत्रहि चैत्रकर्तृकव्यापार जन्यंगमनमित्येवान्वयबोधइति अन्वयानुरोधादेव संज्ञाबलवत्त्वं युज्यते । तदुक्तमभियुक्तैः "परत्वादन्तरंगत्वादुपजीव्यतया तथा । प्रयोज्यस्यास्तु कर्तृत्वं गत्यादे विधितोचिते" ति । इति व्याकुर्वते ।

नन्वेवं गमयति दिगन्तरमरीन् इत्यत्रारीणां कर्तृसंज्ञापवादे कर्तुरीप्सिततमत्वाभावाद्दिगन्तस्य कर्मसंज्ञा नप्रवर्तेत इति चेत्? उच्यते-

संज्ञान्तरासमाविष्टे स्वतन्त्रे परिभाषितः ।
कर्तृशब्दःस्वतन्त्रेर्थे गौणो वाचकएववा ॥ ३५ ॥

यद्यपि कर्तृशब्दः संज्ञान्तरानवरुद्धे स्वतन्त्रे धातूपात्तव्यापारवति पाणिनिना परिभाषितः, आकडार मेकसंज्ञाप्रतिपादनात् । तथापि "कर्तुरीप्सिततमंकर्म" त्यत्र कर्तृपदं स्वातन्त्र्यमात्रे लाक्षणिकम्, समुदायशक्तस्यैकदेशे लक्षणाभ्युपगमात । अतएव "प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणाम् । अप्रधानेदुहादीनांण्यन्ते कर्तुश्चकर्मणं" इति भाष्ये कर्मसंज्ञावरुद्धेपि चतुर्थचरणे कर्तृशब्दप्रयोगः ।

वस्तुतस्तु कर्तृशब्दस्स्वतन्त्रमात्रस्य वाचकः, संज्ञान्तरानवरोधादेः परिभाष्यतावच्छेदकत्वे गौरवात् । अपवादकैस्तु कर्तृसंज्ञाप्रयुक्तानि कार्याण्यपोद्यन्ते । आकडारप्रतिज्ञापि कार्यं प्रतिनियमार्थिकैवेति दिक् ।

यथानुशासनं ण्यन्त धातुयोगेन कर्तरि ।
कर्मसंज्ञाविधिक्षेपविकल्पानां व्यवस्थितिः ॥ ३६ ॥

ण्यन्तधात्वर्थकर्तरि कर्मसंज्ञाविधिर्जल्पश्रुग्रहदृशां, पुत्रमक्षराणि जल्पयति श्रावयति ग्राहयति दर्शयति वेतिप्रयोगात् । यत्तु श्रृणोतेः शब्दकर्मतया कर्तरिकर्मसिद्धेः न पुनर्विधानमुचितमिति ; तन्न, श्रुधातोः श्रावणत्वमिव शाब्दत्वमपि प्रवृत्तिनिमित्तं, आत्मा श्रोतव्यइति श्रोतव्यवहारात । तथा च धर्मं श्रावयति सुतमित्यादिप्रयोगोपपत्तये विध्यन्तरावश्यकत्वात् । नच शाब्दबोधवाचकस्यापि श्रुवेर्बुद्ध्यर्थकतया गतिबुद्ध्यादिसूत्रेणोपग्रहइति देश्यं, बुद्धिसामान्यवाचिनामेवाहि बुद्ध्यर्थकतया निर्देशो नतुतद्विशेषार्थानां, दृशेश्चेति पृथगनु

शासनात् । स्मारयत्येनंगुल्मं स्वयमेवेत्यादौ भाष्यप्रयोगोन्नीतविधि बाधितं स्मरणकर्तरिकर्मत्वम् ।

परंतु शब्दकर्मेत्यत्र कर्मपदं कारकवाचि, तथाच यद्रूपावच्छेदेन शब्दः कारकं तद्रूपविशिष्टवाचकधातुरेव शब्दकर्म इत्युच्यते । श्रावणत्वावच्छेदेन शब्दःकर्म शाब्दबोधत्वावच्छेदेन करणमित्युभयार्थस्य शृणोतेरुपग्रहइति शृणोतौ न पृथग्विधिरिति । एवं ग्राहिरपि न द्विकर्मकः । अतएव जाययाप्रतिग्राहिते गन्धमाल्ये ययेतिविग्रहे जायाप्रतिग्राहित गन्धमाल्यामिति बहुव्रीहिणा जायाकर्तृकव्यापारजन्यस्य गन्धमाल्यकर्मकप्रतिग्रहस्य कर्त्रीमित्यन्वयबोधः । नह्ययं जाययाप्रतिग्राहिते गन्धमाल्येयामिति कर्मणि बहुव्रीहिः, ण्यन्तेकर्तुश्चकर्मण इत्यनुशासनात् प्रयोज्यकर्मण्येवक्तप्रत्ययसाधुत्वात् गौणेकर्मणि तदसम्भवात । नच गन्धमाल्ये जायया प्रतिग्राहितामिति विग्रहा दर्थ पिप्पल्यादिवदसाविति देश्यम् , तत्पुरुषस्योत्तरपद लिंग्रग्राहकतयाटापो दौर्लभ्यप्रसंगादित्याहुः ।

गत्यादिसूत्रेण प्राप्ते कर्मवद्भावे क्षेपो निषेधः, यथा गतिविशेषित व्यापारवाचकतया गत्यर्थयो र्नीवह्योरादिखाद्यो र्हिंसार्थस्यभक्ष रकर्मकस्य शब्दायतेश्च । तेनं नाययति वाहयति भारंभृत्येन आदयति खादयति वा त्वं वटुना शब्दापयति सैनिकैरित्यादयः सूपपादाः । भक्षयति बलीवर्दान् सस्यमित्यादौ भक्षिर्हिंसार्थः, क्षेत्रवृत्तिसस्यानां प्राणित्वात । नियंतृकर्मकस्य वहेरप्रतिषेधः, नियन्ता पशुप्रेरकः, तेन वाहयति रथिनं वाहान् सूतः वाहयति गोणीं बलीवर्दान्वणिक् इत्याद्युपपन्नं । क्वचित्प्रयोज्ये कर्तृकर्मसंज्ञयोर्विकल्पः । यथाहारयति कारयति दर्शयत्यभिवादयते पिता पुत्रेणपुत्रंवा इत्यादिप्रयोगात । कारिहार्यो स्तिङन्तयो श्चाभिवादिदृश्योः ।

आधारोधिशयत्यादेः कर्म तत्र द्वितीयया ।

कर्तृसान्तर आधाराधेयभावो नुभाव्यते ॥ ३७ ॥

अधिशेते अधितिष्ठति अध्यास्ते अभिनिविशते उपवसत्यनुव सत्यधिवसत्यावसति वाजनपदमित्यादौ द्वितीया सप्तमीवत् कर्तृद्वारकं दैशिकविशेषणता संसर्गावच्छिन्नं वाधिकरणत्वमाधेयत्वं वाभिधत्ते । तत्रानुशासनिक माधारस्य कर्मत्वम् । यत्रपुनर्भोजनार्थं उपवासि स्तत्र वने षूपवसतीत्येव प्रमाणं । 'एकादशी मुपवसे द्वादशी मथवा पुन' रित्यादौ नाभोजनमुपवसे रर्थः, किन्तु दोषादुपावृत्तस्य गुणैस्सहवासः,

उपावृत्तस्य दोषेभ्यो यस्तुवासोगुणै स्सह ।
उपवासः सविज्ञेय इत्यार्षपरिभाषणात् ॥ ३८ ॥

कर्माणि देशकालाध्वभावा स्स्युर्गतिकर्मणां ।
आधाराधेयतां धातु र्द्वितीयावात्र भाषते ॥ ३९॥

अकर्मकधातूनां योगे देशादीनां कर्मेतिसंज्ञा, देशो जनपदः कुरुपांचालादिः । कालःकालावयवत्वेन परिभाषितः प्रहराहोरात्र मासादिः । अध्वाक्रोशगव्यूति योजनादिर्गन्तव्यः । भावः क्रिया । तत्र कुरून् स्वपितिक्रोशमास्ते इत्यत्र दैशिकसंसर्गावच्छिन्नः, मासमास्ते गोदोहं तिष्ठतीत्यत्र कालिकसंसर्गावच्छिन्न आधाराधेयभावो धातोरत्र फल विषयार्थः । तत्र कुर्वादि देशादिनिरूपितत्वं द्वितीयार्थ इति केचित । आधाराधेयभावेधात्वर्थान्वयिनि द्वितीयानुशिष्यते । अत एव प्रथगनुशासनमर्थवत् , इतरथा कर्तुरीप्सिततम मित्यनेनैव कर्म संज्ञासिद्धेस्तद्वैयर्थ्यात् । कर्मसंज्ञातु मासमास्ते मास आस्यते इति कर्मणि सुप्तिङो रुपपादन यत्यपरे । तत्पाचिक्रियाजन्यविक्लृत्यधिकरण त्वसति तत्पाचिक्रियानधिकरणत्वं तत्पाचिक्रियाकर्मत्वम् । तदेवच कर्मपदप्रवृत्तिनिमित्तं । तादृशकर्मत्व मुपलक्षणीकृत्य द्वितीयाप्रतिपाद्यत्वं कर्मणिद्वितीयेति सूत्रेण प्रतिपाद्यते : तत्रचान्नं पचतीत्यत्र पचेर्व्यापार मात्रं द्वितीयायाः फलं विकृति रर्थः । तत्र चाधाराधेयभावेनान्नस्यान्वय इत्यनन्यलभ्यफलं कर्मप्रत्ययप्रवृत्ते र्विषयः । भिद्यन्ते च तुल्यार्थाना मपि शब्दाना मन्वयविशेषबोधानुकूलाकांक्षाः । तथाहि द्विती-

यैव धातु माकांक्षति न कर्मपदं, समुच्चिनोतिधातु रेवपांसून् समुच्चिनोतीत्यादौ द्वितीया माकांक्षति न समुच्चयार्थोऽपि चकारादिः । यत्नार्थकः करोति रेव नयतीति ज्ञानार्थको जानात्यादि रेव न वेत्तिः, इच्छार्थको वश्यादिरेव नरंजि द्वितीया माकांक्षति । द्वितीयार्थप्रकारकपच्यर्थविशेष्यकबुद्धौ अम्पदसमभिव्याहृतपाचिज्ञानस्य कारणत्व मित्यनया रीत्या यो धातु राकांक्षाप्रविष्टः स एव सकर्मक इत्युच्यते, नतु व्यापारव्यधिकरणफलवाचकधातुत्वं सकर्मकत्वप्रयोजक मित्येके । नव्यापारमात्रं धात्वर्थः, त्यजिगम्योः पर्यायत्वप्रसंगात ; किन्तु फलमपि, तथाच धात्वर्थफलान्वयि आधेयत्वं द्वितीयार्थ इत्यपरे । फलमात्रं धात्वर्थः, तदन्वय्याधेयत्व मधिकरणत्वं वा द्वितीयार्थ इति मण्डनः । सर्वमतेपि याव दप्राप्तं फल माधेयत्वं वा तावदेव द्वितीयार्थो नत्वाधारः, तस्य प्रकृत्यैव लाभात् । एवं चानभिहित इत्यधिकारस्याय मर्थः – यत्पदसमभिव्याहृतद्वितीयां विनापि तत्क्रिया कर्मत्वं तत्पदार्थे प्रतिपाद्यते तत्पदात द्वितीया न प्रयोक्तव्या निराकांक्षत्वात् । एवं चोक्तार्थाना मप्रयोग इति न्यायस्यैवानुवादः । तत्र–

कर्माभिधान माख्यातसमासाव्ययतद्धितैः ।
कृता च तदभावेतु द्वितीया वक्ति कर्मताम् ॥ ४० ॥

पच्यते ओदन इत्यत्र पाककर्मत्वं माख्यातेन, प्राप्तोदको ग्राम इत्यत्र उदककर्तृकप्राप्तिकर्मबहुव्रीहिणा, नारद इत्यबोधीत्यत्र बुद्धौ नारदकर्मकत्वं निपातेन, शत्य इत्यत्र शतकरणक्रयकर्म तद्धितेन, पक्व ओदन इत्यत्र पाककर्मकृता, पदान्तरसहकृतेन प्रत्याय्यते ; तत्र न द्वितीया । किन्त्वोदनं पचतीत्यादौ ।

नन्वेवं कृतपूर्वीकटमित्यत्र क्तप्रत्ययेन कर्माभिधानात् कट मित्यत्र द्वितीयानुपपत्तिः, अन्यथा कटः कृतः पूर्व इत्यतोपि द्वितीयाप्रसंगात् । नच कृतपूर्वीत्यत्र कृतमिति भावक्तान्तं, कर्मयोगे भावे प्रत्ययानुपपत्तेः ।

एव मिष्टी सुरा नधीती वेदा नित्यादौ निष्ठाभिहिते कर्मणि द्वितीयानुपपत्तिः,"पूर्वादिनिः""सपूर्वाच्च" "इष्टादिभ्यश्चे" ति सूत्रैश्च कर्तरिविहित इनिः,"श्राद्धमनेन भुक्तमिनिठना"वित्यतोऽनेनेत्यनुषंगादितिचेत ? उच्यते

कटादेः कर्मतादात्म्यान्वयायोगात् कटादितः ।
द्वितीयोत्पद्यते धातुव्यपेक्षाकृतपूर्विणि ॥ ४१ ॥

कृतपूर्वीकट मित्यत्र क्तप्रत्ययेन कर्मणोभिधानेपि कटे कर्मतादात्म्यं न प्रतिपादयितुं शक्यते, कृतकटपदार्थयो स्तादात्म्यान्वये तन्त्रस्य समानविभक्तिकत्वस्याभावात ; सविशेषणस्य कृतशब्दस्य वृत्त्यनुप्रवेशानुपपत्तेश्च, सविशेषणानां वृत्तिर्नेति कात्यायनस्मरणात । अतः कटत्वावच्छेदेन कृततादात्म्यान्वयबोधस्य कर्मार्थकेनापि कृतपदेना नुपपादनात् कटपद समभिव्याहारेण द्वितीयोत्पत्ति कोवारयिता । कृतपूर्वीकट मित्यत्राश्रय इनितद्धितार्थः । तत्र कृञ्धात्वर्थस्य प्रयत्नस्य भावनायावान्वयः, भावनायां च निष्ठोपात्तं कर्म द्वितीयोपात्त कर्मत्वंच विशेषणत्वेनान्वेति । वृत्त्यनुप्रविष्टस्य कृतो धात्वर्थविशेषणस्वार्थबोधकत्वस्य व्युत्पत्तिसिद्धत्वात । अत एव प्राप्तोदकोग्राम इत्यत्रोदकं तादात्म्येन कर्तरि कर्ताच प्राप्तौ साच बहुव्रीहिसमुदायवाच्ये चरमावयवलक्ष्येवा कर्मण्यन्वेति इत्युदककर्तृक प्राप्तिकर्मग्राम इत्यन्वयबोधः ।

भट्टास्तु कारकाणां प्रत्ययार्थभावनायामेवान्वयो.न धात्वर्थे,"गुणानांच परार्थत्वादसम्बन्धः समत्वात्स्या"दितिन्यायात । कृतपूर्वी त्यत्रभावना तद्धितार्थः, सच कृतिरेव । तस्यां द्वितीयोपात्तकर्मत्वान्वयः । अतएवकर्तृक र्मणोःकृतीत्यत्र तद्धितार्थ कर्मत्वे षष्ठीप्रसंगवारणाय कृतिग्रहणमप्युपपद्यते इत्याहुः–तच्चिन्त्यं,एवंसति कृतमित्यत्रापि प्रत्ययार्थभावनाकर्मैवाभिधीयेत । अन्यथा तेनकृतमित्यत्र कर्मत्वान्वयस्यानुपपत्तेः । नच तद्धितार्थस्य कृतार्थस्यवा कृतेर्भेदः, नापिपदभेदात्कर्मभेदः, किन्तु क्रियाभेदात । नच कृति

पार्श्वान्वयिसंबंधित्व मर्थः । तथाच सुभद्रापार्श्वद्वयवृत्तिवासुदेव संकर्षणा वित्यन्वयबोधः । "नाम्नोद्विधैव संबन्धः सर्ववाक्येव्यवस्थितः। सामानाधिकरण्येन षष्ठ्यावापिं क्वचि द्भवेदि" इत्यत्र षष्ठीपदं षष्ठ्य पवादकविभक्तीना मप्युपलक्षणम् । पार्श्वपदेनात्रच पार्श्वानां पञ्ज रास्थनांवा समूहोनाभिधीयते, किंतु – तत्सन्निहितोदेशः । एकपार्श्वा वधिक द्वितीपार्श्वनिरूपित परत्वाधिकरणं देश इतियावत । तेनाग्र पृष्ठयोः पार्श्वद्वयतुल्यान्तरयो र्व्युदासः । दक्षिणपार्श्वदेशस्तु वामपार्श्वा वधिक दक्षिणपार्श्वसमवेतापरत्व निरूपकदैशिकपरत्ववान् वाम पार्श्वा द्दक्षिणपार्श्वमपेक्ष्यापरोयं देशइतिप्रतीतेः । सर्वतः कृष्णं गोपाइत्यत्र सर्वपदं सर्वदिक्परं, वृत्तित्वंतसः, दिगन्वयिसम्बन्धित्वं द्वितीयार्थः । कृष्णस्य सर्वदिक्षुगोपाइत्यन्वयबोधः । धिक्शाक्या नित्यत्र धिक्शब्द स्य नरकानुबन्ध्याचारो जुगुप्सानाम द्वेषविशेषोवा गर्हा द्वितीयाया वृत्ति विषयत्वंवार्थः । तथाच शाक्यवृत्ति नरकानुबन्ध्याचारः शाक्यविषयिणी जुगुप्सावावाक्यार्थः । धिगस्तु तृष्णातरळं भवन्मनइत्यत्र मनइति द्विती यान्तमस्तिक्रियाकर्तृ, धिगितिच मनसानसम्बन्ध्यते, किन्तु क्रियया, तथाच जुगुप्सित सत्तावद्भवन्मनइत्यन्वयबोधः। धिङ्मूर्खेत्यत्र मूर्खसम्बो ध्यकाजुगुप्सा इत्यन्वयबोधः । सम्बोध्यत्वस्याक्षिप्तभवत्पदार्थेनान्वयो भवनएव धिगितिसम्बध्यते इतिकेचित । उपर्युपरि भूलोकमधोधश्चंद्रम स मध्यधिगगनं रविरित्यत्र उपरिपदस्य ध्रुवावाधिकंवा नक्षत्राधिकरण वायुगोळावधिकंवा परत्वं तदधिकरणदेशोवार्थः, तदन्वयि स्वनिष्ठपरत्व निरूप्यत्वं द्वितीयायाः; एवमधःपदस्य भूगर्भावधिकपरत्वं तदधि कारणोदेशोवार्थः, तदन्वयिस्वनिष्ठपरत्व निरूपकत्वं द्वितीयायाः, एवमधिशब्दस्याधेयत्वं वायुगोळार्थक गगनपदसमभिव्याहृत द्वितीयाया निरूपकत्वमर्थः, तथाचध्रुवाद्यवधिकस्य भूगोळसमवेतपरत्व निरूपितस्या परत्वस्याधिकरणं तदधिकरण देशवृत्तिर्वा भूगर्भावधिकस्य चन्द्रनिष्ठ परत्व निरूपकस्याधिकरणं तदधिकरण देशवृत्तिर्वा गगनानिरूपिताधे

यतावान् रविरित्यन्वयबोधः।" उपर्युपरि बुद्धीनां चरन्तीश्वर बुद्धय" इत्य त्रोपरिबुद्धीना मुपरीत्यन्वयात उपरिशब्दस्यान। म्रेडितत्वा न्न द्वितीया । उपर्यध्यधसः सामीप्यइत्यनेनविहिते सामीप्याभिव्यंजके द्विर्वचनेतु षष्ठ्ये विति पुनरभियुक्ताः। एतासामुपपद द्वितीयाना मर्थोनामाथैन सहसंगतः, अनुशासनबलाद। तथाहि स्मर्यते-"उभसर्वतसोः कार्याधिगुपर्यादिषुत्रिषु। द्वितीया म्रेडितातेषु ततोन्यत्रापि दृश्यते ॥" इति । धिगितिलुप्तसप्तमी कम् । अन्यत्र स्तोकं पचतीत्यादौ क्रियाविशेषणे । एवंसर्वतः पर्याययो रभितः परितः पदयोः, सामीप्यार्थकयोः समया निकषाशब्दयोर्योगे द्वितीया। शोकार्थकहाशब्दयोगे शोच्या द्वितीया। शोकोविषयगोचरो द्वेषविशेषः। तत्रालंबनत्वेन विषयत्वं द्वितीयार्थः। हासाधू नित्यत्र साधु विषयको विषयद्वेष इत्यन्वयबोधः। हाराम हादेवर तातमात रित्यादौ हापदार्थे शोके नरामदेवर तातादेर्विषय त्वेनान्वयः, किन्तु सीतायाः स्वविषयद्वेषे हापदार्थे राम सम्बोध्यकत्वस्य। प्रत्युपसर्ग पूर्वकस्य धातो र्योगे द्वितीया। माणवकं प्रतिभान्तिवेदा इत्यत्र ज्ञानविषयत्वं धात्वर्थः, विशिष्टशक्तस्य धातोः खण्डशः फलावाचकत्वादकर्मकत्वं। तत्र ज्ञाने पदार्थैकदेशे माणवकसमवेतत्वान्वया न्माणवकसमवेतज्ञानविषया वेदा इत्यन्वयबोधः। ज्ञानमात्रं प्रातिभातेरर्थः, फलावाचकत्वादयमकर्मकः। विषयत्वमाख्यातार्थ इत्यपि वदन्ति । परत्व निरूपिता परत्वद्वयं तदधिकरण देशोवा भवत्यन्तरापदार्थः । द्वितीयाया स्समवेतत्व मवधित्वं वार्थः । मगधान् विदेहानन्तरा गंगेत्यत्र मगधावधिकेन विदेहसमवेतेन विदेहावधिकेन मगधसमवेतेन परत्वेन प्रत्येकंनिरू पितं यत्परत्वद्वयं तद्वती तद्देशवृत्तिर्वा गंगेत्यन्वयबोधः । क्वचिदप्रा प्तिरन्तरापदार्थः, तद्योगेपि द्वितीयैवप्रमाणम्। प्राप्तिरपि ज्ञापनंगमनंचेति द्वेधा। "अनुरागमयेन भूयसा मधुरेणापि रसेन कोगुणः। प्रियसङ्गमभूमिमं तरा यदिविच्छिन्नपदा सरस्वती" त्यत्र भारत्या अनुरागप्रकृतिकेनापि भू यसाशृंगाररसेन कोगुणो यदि प्रिययोः संगमपर्यंत मज्ञापयित्वा मध्ये विच्छिन्नप्रबन्धा चित्रांगदचरितकथा सरस्वतीति प्रकृतम्, अथ सरस्वत्या

नदीविशेषस्य लौहित्यबाहुल्येन भूयस्त्वामिश्रेन जलेन को गुणो यदि प्रियस्य समुद्रस्य संगमश्री समाप्स्येव विलीनगति रसावित्यप्राकरणिक मित्यनयोरुपमाध्वनेः प्रतीयते। [illegible] तद्न्वयिप्रतियो ग्यनुयोगिभावो द्वितीयायाः । धन मन्तरेण न सुख मित्यादौ धनसामान्या भावप्रयुक्तः सुखाभाव इत्यन्वयबोधः । द्वितीयार्थप्रतियोगितायां धन स्याधेयतया धनत्वस्यावच्छिन्नत्वे नान्वयात् धनसामान्याभावलाभः । अभावयोः प्रयोज्यप्रयोजकभाव स्तु संसर्गः ।

[illegible] हेत्वादिभिः रन्वितः ।
नामार्थ [illegible] द्वितीया द्योतयत्यसौ ॥ २ ॥

येषां मान्धीनां [illegible] बाधेन कर्मप्रवचनीयसंज्ञा तदर्थ एव हेत्वादिः । [illegible] उपपदाद्वितीया जपाया हेतुरित्यन्वय[illegible] विशेषण [illegible] च वाक्यार्थः ।

अयन्तु [illegible] द्वितीयाया एव हेतुत्वे हेतुत्व[illegible] । [illegible] मिति तृतीयाबाधक "अनु लक्षणे कर्मप्रवचनीय संज्ञायां द्वितीया" [illegible] मित्यभियुक्ताः । एव मनोरथः [illegible] स्तृतीयार्थोऽर्थः । नदी मन्ववसि ता सेनेत्यत्र नद्या सहावसिता सम्बद्धा सेनेत्यन्वयबोधः । अनुहरि मुपहरिं वा सुरा इत्यत्रानूपयो र्हीनत्व मर्थः, तेन हरे र्हीनाः सुरा इत्यन्वयबोधः । वृक्षं प्रति अभि परि अनु वा द्योतते विद्युत् इत्यत्र चतुर्णां प्रत्यादीनां लक्षणं वाच्यं द्योत्यं वा । लक्षणन्तु द्योत्यद्योतकभावादिः । वृक्षवृत्ति द्योतकतानिरूपकद्योतनाश्रयो विद्युदित्यन्वयबोधः । आलोकान्तर संयोगानपेक्षद्रव्यचाक्षुषविषयत्वं द्योते रर्थः, तत्र चक्षुर्व्यापाराणा माभिमुख्यादिद्वारा कथंचिद्वृक्षादेर्द्योतकत्वं । मुनि मभि विकास मुपेयुषी विलोचने इत्यत्र विकासः पुटविभागः । तत्र मुने र्विकासकत्वं

द्वितीयार्थः । एवं तत्तत्क्रियासमभिव्याहारेण नानार्थकल्पने गौरवा ज्जनकतैव लक्षणं । वृक्षवृत्तिजनकताकं द्योतनं मुनिवृत्तिजनकताक श्च विकाशो वाक्यार्थ इत्यपरे । तच्चिन्त्यं, तथासत्यनुर्लक्षण इति सूत्रप्रणयनवैयर्थ्यात् । एव मित्थम्भावाख्यानेपि । ते चत्वारः । तदुक्ते द्वितीयायाः क्वचिद्विषयीभावोर्थः । भक्तो विष्णुं प्रतीत्यत्र विष्णुविषयक भक्तिमानित्यन्वयबोधः । क्वचिदुद्देश्यत्वं, तच्च क्रियाजनकेच्छाविषयत्वं, शत्रून् प्रतिधावतीत्यत्र शत्रुगोचरनाशादीच्छाप्रयोज्या धावनक्रियेत्यन्वय बोधः । भागेवाच्ये द्योत्येवाप्रतिपर्यनवः कर्मप्रवचनीया नत्वभिः । लक्ष्मीहरिं प्रतीत्यत्र हरेः स्वामित्वमर्थः । वृक्षं वृक्षमभिसिंचतीत्यत्र वीप्सायां द्विर्वचने कर्मत्वस्य द्वितीययाभिधानाद्वीप्सायां प्रतिपर्यन्वभीनां कर्मप्रवचनीय संज्ञा गत्युपसर्गसंज्ञापवादाय, तेनोपसर्गपरत्व प्रयुक्तषत्वाभावस्वरूपं फलमुपपद्यते । मासमधीते इत्यादावधिकरणत्वं द्वितीयार्थः, मासत्वा वच्छेदेनाधिकरणत्वस्यान्वयः । क्रोशंकुटिलानदीत्यत्र क्रोशत्वा दिक मध्यपरिमाणविशेषः, तदवच्छेदेन कौटिल्यस्याप्यन्वयो व्युत्पत्तिवैचित्र्यात् । क्रोशत्व व्यापककौटिल्यवती नदीत्यन्वयबोधः । देश विषया कालविषयाचावच्छेदकत्वं द्वितीयार्थः, तथाच मासमधीत इत्यत्र मासावच्छेदेनाध्ययनवत्ता, क्रोशंकुटिलेत्यत्र क्रोशावच्छिन्ना कुटि लताच प्रतीयते । निचतुरादिदिनमात्राध्ययनादेरधिकरणतातुमासेन नावच्छिद्यते, किन्तु तदेकदेशेनेत्यपि वदन्ति ।

इत्युपपद द्वितीयाविवरणम ॥

---

टाभ्यांभिसस्तृतीया त्रानुबंधष्ट स्तयापुनः ।
तिङादिनानभिहितः कर्ताकरण मुच्यते ॥ १ ॥

टाभ्यांभिसिति तृतीया । तत्र टकारोनुबंधः । आत्वेनैववाचकता । तस्या स्तृतीयायाः, कर्ताकरणं कर्तृत्वकरणत्वे, अर्थः । तत्रापि पचतीत्यो

दावाख्यातेन पाचकइत्यादौ कृता पक्वपूर्वीत्यादौ तद्धितेन पक्वोदन इत्यादौ समासेनाभिहिते कर्तरि न तृतीया, उक्तार्थत्वेन प्रयोगानर्हत्वात् । एव मक्षादीव्यंत इत्यत्राख्यातेन साधकतमे कर्मसंज्ञया फलतः करणस्यैवा भिधानात्, पचनंकाष्ठमित्यत्र कृता पक्वोदनं काष्ठमित्यत्र बहुव्रीहिणा, स्नानीयं चूर्णमित्यादौ कृत्येन, शत्यागौरित्यादौ च तद्धितेनाभिहिते करणे तृतीयापि व्याख्याता । चैत्रेणसूपः पच्यत इत्यत्रविक्लत्यनुकूलः प्रयत्नः पचेरर्थः; आश्रयस्तृतीयायाः, आश्रयेतादात्म्येनचैत्रः, आश्रयः समवेत त्वेन प्रयत्नेचान्वति । प्रयत्नएवच प्रधानम् । तत्रैव सूपाभिन्नाश्रयकं फलम न्वेति । "स्वतन्त्रः कर्ता" "कर्तृकरणयोस्तृतीये" ति सूत्राभ्यां तृतीयाया आश्रयवाचकत्वानुशासनात् । स्वतंन्त्रोहि धातूपात्तव्यापाराश्रयः । तथाच तद्धातूपात्तव्यापाराश्रय बोधिका तद्धातुसाकांक्षा तृतीयेति सूत्रयो रेकवाक्यतयाऽर्थः ।

तत्रधातोरुपादानस्य शाब्दबोधाविषयत्वात् व्यापारस्यच धातुनैव लाभा दनन्यलभ्ये आश्रये तृतीयायावृत्तिः पर्यवस्यतीति वैयाकरणाः ।

आश्रयांशस्यापि तृतीयाप्रकृतिलभ्यत्वा दनन्यलभ्यतर माश्रयत्वमाधेयत्वंवा । प्रयत्नस्य च धात्वर्थत्वाभावे सएव तृतीयार्थः । अतएव पाकं करोतीत्यादौ धात्वर्थबहिर्भावेन कृतेर्निवेशः । शेषमाख्याते व्याख्यास्यत इतितार्किकाः ।

पच्यतइत्यत्रापि पाकः क्रियतइति कृत्रा विवरणात कर्मलकारस्यापि कृत्यादिस्वरूपा भावनैवार्थः । तदन्वयिकर्तृत्वमखण्डं तृतीयार्थः, अन्यथा दंपत्योर्व्यासज्यवृत्तिकर्तृत्व मनुपपन्नं स्यादिति मीमांसाकाः ।

तत्र तार्किकमतमनुसृत्य तृतीया विव्रियते ।

प्रयत्नवृत्ति विषयि प्रकारि प्रतियोगिताः ।
तत्तद्धातु व्यपेक्षिण्या प्रतीयन्ते तृतीयया ॥ १ ॥

चैत्रेण गम्यत उच्यत इत्यादौ प्रयत्न स्तृतीयार्थः । सच समवायेन चैत्र विशेषितः साध्यतया गमने वचनेच विशेषणम् । रथेन गम्यत इत्यादौ वृत्तिराधेयत्वम्। तेन स्वद्यते रुच्यते प्रतिभायते प्रकाश्यते इत्यादौ विषय विषयिभाव इच्छामात्रार्थकयोः स्वदतिरोचत्योः ज्ञान मात्रार्थकयोः प्रतिभातिप्रकाशत्योः, विषयित्वार्थकर्तृप्रत्ययेनैव सह सा- कांक्षत्वात् । तेन प्रतिबिम्बते इत्यत्र प्रकारप्रकारिभावः प्रतिहतच क्षुर्जनितभ्रमार्थक प्रतिबिम्बतौ, प्रकारित्वार्थक कर्तृप्रत्ययस्यैव सव्य पेक्षत्वात । नहि मुखंप्रतिबिम्बतइतिवदादर्शः प्रतिबिम्बतइति प्रयोगः। तेन नश्यत इत्यत्र प्रतियोग्यनुयोगिभावः । अत्र प्रयत्नत्वंजातिस्तृतीया प्रवृत्तिनिमित्तं लाघवात । अन्यत्र लक्षणा । व्यापारश्चाधिश्रयणादिः क्रियाजनकतावच्छेदकधर्मत्वे नोपलक्षणेना नुगतप्रवृत्तिनिमित्तेन करणप्रत्ययेन प्रतिस्व मुपस्थाप्यः । यदिचाधेयतात्वादिकमखण्डं तदा तद्विशिष्टेपि शक्तिरेवेति न तेन धातुना तत्तदर्थबोधौपयिकी तृतीया कांक्षाभिद्यते ।

व्यापारसान्तरोहेतुः फलेनोपहितोथवा ।
करणं तत्रसुब्वाच्यो व्यापार उपधेयता ॥ ३ ॥

सव्यापारकंकरणं । तथा च यदाधिश्रयणादिस्वरूपो व्या- पारो धातुनोपस्थाप्यते, तदाधिश्रितस्यकर्तृत्वं, यदि च नधातुनाभिधीयते विवक्ष्यते च धात्वर्थजनकतया स्थाल्यादि, तदासर्वोपिकारणगणः करणमेव। तदाहुः- " क्रियायाः परिनिष्पत्ति र्यद्व्यापारादनन्तरम् । विवक्ष्यते यदातत्र करणन्तत्तदास्मृतम् ॥ वस्तुतस्तदनिर्देश्यं नहिवस्तु व्यवस्थितम् । स्थाल्यापच्यत इत्येषा विवक्षा दृश्यतेयतः ॥ " इति। तथा च काष्ठेनपच्यत इत्यत्र काष्ठनिष्ठव्यापारजन्य एकाधिकरण वि क्लृतिजनकःपाक इत्यन्वयबोधः । तदाश्रय व्यापारोभयं व्यापारमात्रं वा तृतीयार्थः । काष्ठव्यापारयो राधाराधेयभावो व्यापारपाकयोश्च जन्यजनकभावश्च संसर्गः ।

वस्तुतो व्यापारेण तृतीयार्थेन प्रकृत्यर्थस्य क्वचित्कार्यकारण भावात्मकः संसर्गः, यथा अनुभवेन स्मरति यागेन स्वर्गं गच्छति चक्षुषा पश्यति श्रोत्रेण शृणोति इत्यादौ तृतीयार्थेषु संस्कारा पूर्व सन्निकर्षशब्दे ष्वनुभव याग चक्षुःश्रोत्राणां जन्यत्वं संसर्गः । क्वचिदाधाराधेयभावः । चिकीर्षया प्रवर्तते परामर्शेना नुमीयते शब्देन शृणोतीत्यादौ प्रत्यासत्तिभूत श्चिकीर्षा परामर्श शब्दानां समवाय स्तृतीयोपात्त आधाराधेय भावेन प्रकृत्यर्थ विशेषितः प्रकृ-त्यनुमिति श्रवणेषु जन्यजनकभावे नान्वेति । सर्वत्रवा करण तृतीयार्थे प्रकृत्यर्थस्य जन्य जनकभावसंसर्गे णैवान्वयः। चिकीर्ष-या प्रवर्तत इत्यादौ हेतौ तृतीया, नतु करणे, दण्डेन घट इति वत्, इति वैयाकरणाः ।

अनुमानीयः परामर्श इत्यत्र करणेऽछअत्ययात् परामर्शेनानुमीयत इत्यत्र करणएव तृतीया, करणत्वन्तु फलोपधायकत्वं । सएव तृतीयार्थः। उपहितत्वंवा। हेतुतृतीयायास्तु स्वरूपयोग्यत्व मर्थ इत्यन्ये ।

दिवोर्थकरणे कर्मप्रत्यया अपि साधवः ।
अक्षादौ कर्मकरणोभयसंज्ञासमुच्चयः ॥ ४ ॥

स्मरतितत्र पाणिनिः – “दिवः कर्मचे” ति सूत्रम्। दिवः साधकतमं करणं कर्म च संज्ञायते इति तदर्थः । संज्ञाद्वयसमा वेशार्थक श्चकारः । अत एव मनसा देव इत्यत्र मनसः करण संज्ञा प्रयुक्ता तृतीया, कर्मसंज्ञया च कर्मोपपदप्रयुक्तो ऽण्प्रत्ययः, मनसः संज्ञायामिति तृतीयाया अलुक् । एवं स्थिते दीव्यतेः कर-णत्व मभिदधती द्वितीया तृतीया च साधुः । अक्षै रक्षान् वा दीव्यती त्यत्र दीव्यतेः क्रीडासुखसाधनव्यापारोर्थः । तत्र चाक्षाः करणत्वेना न्वयन्ति । तेन अक्षकरणक सुखसाधन क्रीडनव्यापारो वाक्यार्थः।

यत्तु दिवस्साधकतमे करणसंज्ञाप्रयुक्तं कार्यं देवना अक्षा इत्यत्र ल्युट्, कर्मसंज्ञाप्रयुक्तन्तु अक्षा दीव्यन्त इत्यत्र लः । अक्षै दीव्यत इत्यत्र उभयसंज्ञाप्रयुक्तकार्यप्रसक्तौ परया करणसंज्ञया कर्मसंज्ञातत्प्रयुक्तं कार्यं वा प्रतिषिध्यते । तस्मा दक्षान् दीव्यतीति न प्रमाणमिति । तन्न, एवं दिवः कर्मचेति सूत्रे चशब्दवैयर्थ्यप्रसंगात, ऐच्छिकविकल्पेन कार्यद्वयोपपादकतयैव चकारसार्थकता । व्यवस्थितविकल्पस्य संज्ञा द्वयविधानबलादेव सिद्धेः । अक्षा दीव्यन्त इत्यत्र देवनसाधकतमत्व माख्यातेनाभिहितमिति न करणतृतीया, नवा देवनाअक्षा इत्यत्र कर्मणि द्वितीया प्रसज्यते, ल्युटा उक्तार्थत्वात ।

अधर्मसाधने दाने दाणोर्थे सम्प्रदानताम् ।
तृतीया कथयत्येवं संज्ञः कर्मणि कर्मताम् ॥ ९ ॥

यत्र दाण् प्रकृतिकेन यच्छतिना धर्मसाधनं दान मुपस्थापितं, तत्र चतुर्थ्यर्थे सम्प्रदानत्वे तृतीया । तेन दास्या धनं संयच्छत इत्यादौ दासीसम्प्रदानकं दानं वाक्यार्थः । न पुनरिहाधर्म साधनत्वमपि शाब्दबुद्धिविषयः, आक्षेपलभ्यत्वात् । संयच्छत इति तु "दाणश्च साचे च्चतुर्थ्यर्थे" इत्यनुशासनेन सम्पूर्वका द्दाण आत्मने पदं प्रयोज्यं यदि सा तृतीया चतुर्थ्यर्थ इत्यर्थकेन सिद्धम् । एवं सम्पूर्वकस्य ज्ञाधातो रवेक्षणार्थकस्य कर्माणि विषयतास्वरूपं कर्मत्व मपि तृतीयाया द्वितीयाया श्चार्थः । पित्रा पितरं वा संजानीत इत्यत्र पितृविषयक मवेक्षणं वाक्यार्थः । संजानीत इति "सम्प्रतिभ्या मनाध्यान" इत्यनुशासनेन सम्पूर्वकात् प्रतिपूर्वका च्च ज्ञ आत्मनेपदं भवति यद्याध्यानं स्मरणं न संज्ञोर्थ इत्यर्थकेन सिद्धम् । आध्याने तु मातरं मात्रा वा संजानातीत्येव प्रमाणम् ।

केचित्तु आध्याने मातरं मातु र्वा संजानातीत्येव साधुः, नतु मात्रेति, तृतीयायाः परया षष्ठ्या बाधात, अत एव पितुः संज्ञान मित्यादौ कृद्योगषष्ठ्या तृतीयाया बाध इत्याहुः । तच्चिन्त्यम् ।

इति कारकतृतीयाविवरणम् ॥

प्रकृत्यादिगणा ज्जाता तृतीया तु तदात्मताम् ।
अवच्छेदकता वृत्तिप्रकारत्वादि शंसति ॥१॥

प्रकृत्यादिभ्यो विहिता तृतीया काचित्तादात्म्य मभिधत्ते । यथा प्रकृत्याचारु इत्यत्र । सुखजनकसाक्षात्कार विषयधर्मवान् चारुपदार्थः । चारुपर्याया एवा भिरामहृद्य सुन्दरमञ्जुळादयः । मनोभिरामो नयनाभिराम इत्यादौ पदार्थैकदेशे सुखजनकसाक्षात्कारे नयनमनोजन्य तादात्म्यान्वयः । यावदाश्रयभावी स्वाधिकरणनिष्ठात्यन्ताभावाप्रतियोगी स्थूलकालावच्छेदेन स्वाश्रये वर्तमानस्यात्यन्ताभावस्याप्रतियोगी यो धर्मः प्रकृतिरित्युच्यते , यतो जाति रीश्वरस्यसार्वज्ञ्यं जलस्य शैत्यं पृथिव्या गन्धो गुणस्य द्रव्यसमवेतत्वं प्रकृतिरिति प्रयोगात् । उत्पत्तिक्षणे शैत्याभावो जले, पाकक्षणे गन्धाभावः पृथिव्यां, समवायिनाशक्षणे द्रव्यसमवेतत्वाभावो गुणे, विद्यमानोऽपि न स्थूलकालावच्छेदेन । विद्या ब्राह्मणस्य मत्सरः खलस्य संयोगो द्रव्यस्य कर्म मूर्तस्य प्रकृतिरित्यादौ जात्यादिप्रकृतिसादृश्यादभीक्ष्णानुवृत्तेः प्रकृतिपदं गौणम् । चारुपदार्थैकदेशधर्मान्वयि तादात्म्यं प्रकृतिपदप्रकृतिकतृतीयार्थः । प्रकृत्यभिन्न चारुत्ववा नित्यर्थः । नाम्ना सुतीक्ष्णश्चरितेन दान्त इत्यत्र सुतीक्ष्णपदं सुतीक्ष्णपदबोध्ये लाक्षणिकम् , नामवाचकं, चरितमाचारस्य प्रयत्नस्य विषयः, तथा च वाचकाभिन्न सुतीक्ष्णपदबोध्यः प्रयत्नविषयाभिन्न दमवानित्यन्वयबोधः । सुतीक्ष्णपदयोगार्थे दमस्य विरोधस्तु ध्वननीयो न श्रौतः । सुरथोनाम राजाभू दित्यत्र नामेत्यव्ययं, ततो लुप्ता तृतीया, नामाभिन्न सुरथपदबोध्यो राजाभूदित्यन्वयबोधः । नामेति सम्भावनार्थकमव्ययंवा । गोत्रेण गार्ग्यइत्यत्र पुरुषारम्भक शुक्रावयवारम्भ्यत्वं गोत्रपदार्थः । पत्न्याः सगोत्रव्यपदेशो गौणः । गार्ग्यपदार्थैकदेशे गर्गापत्यत्वे गर्गारम्भक शुक्रावयवपरमाण्वारम्भ्यत्वे गोत्रपदार्थाभेदान्वयः । तथा च पुरुषारम्भक शुक्रावयवारब्धत्वाभिन्नं यद्गर्गारम्भक शुक्रावयवारब्धत्वं तद्वा-

निति वाक्यार्थः । धान्येनधनीत्यत्र धान्याभिन्न धनबोधः । जात्या ब्राह्मण इत्यादौ स्वरूपेणोपस्थिते ब्राह्मणत्वे जातितादात्म्यान्वयो नानुपपन्नः । ब्राह्मणपदं वा पुण्यप्रयोज्यजातिमत्परम् । पृथिवीजलयो द्रव्यत्वेन साधर्म्यमित्यत्र प्राधान्येनोपस्थापितेपि पदार्थे पदार्थान्तरता- दात्म्यं बोधयन्तीतृतीया दृश्यते । नपरं पदार्थैकदेशमात्रान्वये । एवम र्चादिकया सपर्यया सपर्यंपूजयत, वाजपेयेन यजेतेत्यादौ क्रियायां प्रातिपदिकार्थ तादात्म्यमपि तृतीयाबोधयति । विशेषणान्तरविशेषि तसपर्यायाः पूजनतादात्म्यान्वये न निराकांक्षत्वम् , प्रमानुभव इति सह प्रयोगदर्शनात् । यथार्थानुभव वाचकोहि प्रमाशब्दः । अतएव “जगादमधुरांवाचं विशदाक्षरशालिनी” मित्यत्र वाचमिति क्रिया विशेषणमुपादेयम् , मधुरत्वादि विशेषणावच्छिन्न वाच स्तादात्म्यस्य गदधात्वर्थफलेन्वये साकांक्षत्वात्, वाच्शब्दस्या जहल्लिंगतया क्रिया विशेषणत्वे क्लीबत्वासम्भवात् इति वामनः । प्रकाशकारोपि तत्रा पुष्टार्थत्वमेवोदाजहार । नत्वभवन्मतयोगं । “ मधुरंजगादे ” त्येतावतैव वाचि धात्वर्थफले मधुरतादात्म्यान्वये मधुरवाक् तादात्म्यस्या र्थाद् प्राप्तौ आक्षेप लभ्यस्य पदेना भिधानाद् पुष्टोय- मर्थः । आकांक्षा विरहेत्व भवन्मतयोग एव स्यात् । एव मर्चा- दिना पर्यपूजय दित्येतावतैव सामञ्जस्ये सपर्ययेत्य पुष्टार्थः स्यात् नतु निराकांक्षमिति । सपर्ययेति करणानुवादी तृतीया, धात्वर्थस्य भावनायां करणत्वेना न्वयादिति भाट्टाः ।

क्वचि त्तृतीयाया अवच्छिन्नत्व मवच्छेदकत्वं वार्थः । वह्नित्वेन वह्नेः कारणत्वं कार्यत्वं प्रतियोगित्वं प्रकारत्वं विशेष्यत्व मित्यादौ कारणत्वादिषु वह्नित्व वृत्त्य वच्छेदकता निरूपकत्वं वह्नित्व निरूपका वच्छिन्नत्व वत्त्वंवा वाक्यार्थः । समवायेन रूपवा नित्यत्रतु मत्वर्थैकदेशे ऽधिकरणतायां समवाया वच्छिन्नत्वं, समवायेन ध्वंसो नास्तीत्यत्र नञर्थे समवायावच्छिन्नत्वं प्रकारो व्युत्पत्ति वैचित्र्यात्

यथैव प्रति योगितया ध्वंसोनञर्थे विशेषणं तद् घटित संसर्गेणैव तृतीयार्थोपि इत्यर्थात समवाया वच्छिन्न ध्वंस प्रतियोगिकः संसर्गा भावो लभ्यते । संसर्गीभूत प्रतियोगिताया मपदार्थेपि व्युत्पत्ति वैचित्र्यात् समवाया वच्छिन्नत्वं प्रकार इति स्वतन्त्राः । एतेन घटत्वेन घटोनास्ति शशीयत्वेन श्रृंगं नास्ति इत्यादि प्रयोगाणां प्रा माणिकत्वे तेपि व्याख्याताः ।

तच्चेदमवच्छेदकत्वं क्वचिद्घटकतास्वरूपमपि । यथाधूमत्वेन वह्निव्याप्तिः वह्न्यावयः पिण्डेन धूमव्यभिचारः, वह्निधूमयोः पर्वतेन सह भावइत्यादौ धूमव्यापकवह्निमद्वृत्तिधूमत्वेव्याप्तौ धूमत्वस्य धूमाभाववद्वृ त्तिवह्नित्वादौ व्यभिचारे धूमाभाववदयः पिण्डस्य, वह्नि धूमसामानाधि करण्येसहभावे पर्वतस्य च, घटकत्वात् । समेनैति विषमेणगच्छतीत्यादौ कर्तृद्वारकमधिकरणत्वम्, दैशिकविशेषणता संसर्गावच्छिन्ना वृत्तिर्वातृतीयार्थः । भूगर्भावधिक तुल्यान्तरा यस्य सर्वे वयवाः सदेशः सम इत्युच्यते । तदितरोविषमः । अत्रसप्तम्यर्थे तृतीया, नतुगमनस्य समविषमदेशवृत्ति व्यापारजन्यत्वविवक्षयाकरणे; तथासति "समस्तृतीयायुक्ता" दित्यत्र सकरणकादित्येव मुनिरवक्ष्यत्, नतुतृतीयायुक्तादिति । रजतत्वेन पुरोवर्तिनं जानातीच्छति करोतिद्वेष्टीत्यादौ प्रकारत्वे तृतीया । विशेष्यत्वंधातोः फलविधया द्वितीयायावाअर्थः । तत्रैव निरूपकत्वेन तृतीयार्थस्यान्वयः ।

लक्षणप्रामाण्यादिभि रनुमाने निरूपणीय इत्यत्र शाब्दबोधानुकूलव्यापारो निरूपेरर्थः, तत्समभिव्याहृत तत्कर्मकृत्य प्रत्ययस्य निरूपण जन्यशाब्दबोधविशेष्यतावदर्थः, कृत्यार्थैकदेशे विशेष्यतायां निरूपक तया तृतीयार्थस्य प्रकारत्वस्यान्वयः । तेन लक्षणादिप्रकारतानिरूपिताया निरूपणजन्यशाब्दबोधविशेष्यता तद्वत्यनुमान इति वाक्यार्थबुद्धिः ।

तत्रविशेष्यतामात्रं कृत्यप्रत्ययार्थः, शाब्दबोधस्य धातुनैव लाभात, कर्मप्रत्ययोपसंदाने धातुनाव्यापारविशेषितस्य फलस्याभि धानादिति व्यापारफलयोः पृथक्शक्तिवादिनः ।

अन्येतु धातुना फलविषयो पात्तं कर्म प्रत्ययाः तादूप्येणाभि दधते, तेन शाब्दजनक व्यापारजन्य शाब्दबोध विशेष्यो निरूप णीय पदार्थ इति मन्यन्ते ।

परिच्छिन्नत्व मपि क्वचित् तृतीयार्थः। द्विद्रोणेन धान्यं क्रीणाती त्यादौ द्रोणो गुरुत्व विशेषः, क्रय कर्मत्वान्वयी तृतीयार्थः । तच्च द्विद्रोण समवायि द्रव्य द्वयारम्भक परमाणुत्व समनियता या संख्या तत्सजातीय संख्याव्यापकत्वम् । व्यापकत्वन्तु आधारतया स्वाधार द्रव्यारम्भकत्वेन वा संसर्गेणा वच्छिन्नं प्रवेशनीयम् । तथाच क्रय कर्मत्वं नाम क्रय जनितं स्वत्वम् । तच्चैकमेव सकलेषु धान्यतदारम्भकेषु धान्येष्वे-ववा । भवतिच परमाणुष्वपि स्वत्व स्वीकारे साक्षा देव तादृश संख्यायाः कोटित्वादे व्यापकत्वं । इतरथा तद्धान्यमात्र वृत्त्यपि स्वत्वं परम्परया तथेति द्विद्रोणसमवायिद्रव्यारम्भक परमाणुत्व समनिय तासंख्या तत्सजातीय संख्याव्यक्तिं प्रति साक्षा त्परम्परयावा व्याप-कस्य धान्यवृत्तेः स्वत्वस्य जनिका क्रियेत्यन्वय बोधः । एकदेशि नस्तु द्वाभ्यां द्रोणाभ्या मारब्धं गुरुत्वान्तरं द्विद्रोणम् । तत्समवायित्वं धान्यान्वयि तृतीयार्थः, एकोधान्यराशिरिति प्रतीत्या तिरिक्तस्य राशे स्तस्यधान्ये सत्वस्यच स्वीकारात् । अन्यथा वयविमात्रा सिद्धि प्रसंगादित्याहुः । तच्चिन्त्यं, राशौ धान्यत्वादीनां स्वीकारे धान्ययवा सुभयादि घटितराशौ तुल्ययुक्त्या धान्यत्व यवत्वाद्य भ्युपगमेन यव-त्वादिना साङ्कर्य प्रसंगात् ।

यत्तु- एकजातीय मवनमनं प्रति द्विद्रोण स्वरूपस्या वयवि गुरुत्वस्य तावतांच परमाणु गुरुत्वानां वैकल्पिकी कारणता, द्विद्रोण

प्रयोज्य जातीयावनमनप्रयोजकानि यावन्ति गुरुत्वानि तावद्भि राश्रय घटित परम्परया संसृष्टत्वं धान्येषु तद्वृत्तिस्वत्वेवा प्रतीयत इति । तत्र अवयविगुरुत्वस्य साक्षात्पतनं प्रत्येवा समवायिकारणत्व मव नमनेतु परमाणु गुरुत्वानामेव परम्परया तथात्वम् । अन्यथा सर्षपराशि जनितावनमनापेक्षया लोहपिण्ड जनितावनमनस्य प्रकर्ष प्रसंगात् । कारणोत्कर्षेण कार्योत्कर्षा वश्यंभावादिति न्याया द्वितीयाध्याये विवृतत्वादिति दिक् ।

सामानाधिकरण्यादिः सहार्थःस्यादनेकधा ।
तृतीयार्थ स्तदीयत्व मभेदः कारकं तथा ॥ २ ॥

संयोगि संयुक्तत्व समवायिसमवेतत्व देशदैशिकत्वकालकालिक त्वादिरनेकविधः सहार्थः । सच यत्र नामार्थविशेषितो नामार्थेनान्वेति तत्रप्रतियोगित्वं तृतीयार्थः । संकर्षणेन सहवासुदेव इत्यत्र संकर्षणप्रतियो गिक संयोगवदधिकरणसंयुक्तो वासुदेवइति, सहरूपेण रस इत्यत्र रूपप्र तियोगिकसमवायवदधिकरण समवेतो रसइति, सहैवदशभिः पुत्रै र्भारं वहतिगर्दभी त्यत्र दशपुत्रप्रतियोगिक दैशिकसंसर्गवति देशे दैशि केन संसर्गेण विद्यमानागर्दभीति, सहपत्न्या पतिरित्यत्र पत्नी प्रति योगिकाधिकरणे कालिकेन संसर्गेणविद्यमानः पतिरित्यन्वयः । सहदिवसै र्दीर्घाः श्वासदण्डा इत्यत्र दीर्घपदस्य चिरस्थिरः आयतश्चार्थ स्तृतीयायाश्चाभेदः, सच चिरस्थिरे दीर्घपदार्थे, सच समानकालीनत्वे सहार्थे, सचायते दीर्घपदार्थेन्वेति । व्युत्पत्तिवैचि त्र्यात् । एवं च दिवसाभिन्न चिरस्थिरसमानकालीन दीर्घाभिन्नाः श्वा- सदण्डा इत्यन्वयबोधः । तृतीयार्थेभेदान्वये च समानलिंगवचनादि नतन्त्रं, सीतयादारवानित्यादिप्रयोगात । तेन कन्यया सहरमणीयो वर इति नानुपपन्नम् । एवमेव पुत्रेण सहागतः पितेत्यादौ पुत्राभिन्नो यआगत स्तत्समानकालीनागताभिन्नः पितेत्यन्वयबोधः, गमनविशिष्ट

योः समानकालीनत्वे भासमाने गमनयोरपि तद्भासते, विशिष्टान्वयबोध सामग्रीस्वभावात । पुत्रेण सहागच्छति पुत्रेण सहागत्याऽऽष्ठतीत्यादौ कर्तृत्वेतृतीया, तदन्वितमागमनं सहार्थे समानकालीनत्वे, तच्च द्वितीयागमने, तच्चा ख्यातार्थकर्तृत्वे न्वेति । धनेन सहगां लभतइत्यादौ तृतीयार्थः कर्मत्वं, तल्लाभे सहार्थे सगोकर्मकलाभे स कर्तृत्वाद्यान्वेति । धनकर्मकलाभ समानकालीन गोकर्मकलाभकर्तृ त्यन्वयः । दण्डेन सहचक्रेणोत्पाद्यते अध्वर्युणासह सदस्याय ददाति शक्रपदेन सह स्वर्गात्पतति पित्रा सहमातुः स्मरति नावा सहनद्यान्ति ष्ठति इत्यादौ सम्प्रदानापादानविषया धिकरणत्वानि यथायथं तृती यार्थः । सहयुक्तधातुना भिहितयोः क्रिययोः पदान्तरनिर्दिष्टः सर्वोपि कारकगणो यौगपद्येनान्वेति, अन्यत्र तृतीयानिर्दिष्टात् । तेन ग्रामं गच्छति पुत्रे नगरं गच्छति पितरि पुत्रेणसह नगरं गच्छति पितेति न प्रयोगः, द्वयोरपि क्रिययो र्नगरकर्मत्वान्वयध्रौव्ये नगरकर्मक पुत्रकर्तृक गमनस्याभावात। गवा सहधनं लभत इत्यत्र गोकर्म लाभे धनकर्मकला- भेचाख्यातोपात्तो गुणक्रियाप्रथमानिर्दिष्टो वा प्रधानविषयाभासते । सहार्थएव वा समानकर्तृकत्वम्, तेन गोश्चैत्रेणलाभे गवा सहधनं लभते मैत्र इति न प्रमाणम् । पत्न्या सह यजत इत्यत्र पत्न्या गौणं कर्तृत्वं तृतीयया निर्दिश्यते । यदि दम्पत्यो र्व्यासक्तं किमप्यखण्डं कर्तृत्वं, सहयुक्तेनक्रिये एकासहार्थ स्तवि विशेषण मपराप्रधानं । यस्यच कारकस्य प्रधानक्रियायां नान्वयः तज्जातीय गुण क्रियापि तृतीयया न प्रतिपाद्यते । "सहयुक्ते ऽप्रधान" इति सूत्रस्याय मर्थः, सहयुक्तक्रियान्वयिनो स्तुल्यजातीययोः कारकयो र्मध्ये यदप्रधानम प्रधान क्रियाकारकं तस्मिन्नभिधेये तृतीयेति । तेन ग्रामेण सह चैत्रो गच्छतीति न प्रमाणम् । प्रमाणंच ग्रामेण सह गृहं गच्छति चैत्र इति । एकक्रियाकारकत्वं साहित्य मिति प्रवादेतु एकपदोपात्त त्वेन क्रिययो रैक्यव्यपदेशः ।

यत्तु पुत्रेण सह गच्छतीत्यादौ यत्कारकान्वयिनी या तत्कारकविशिष्ट तत्क्रियासमानकालीनत्वं सहशब्दार्थः, तदेकदेशेकारकेन्वितं वृत्तिमत्त्वं तृतीया भिधत्ते । तथाच पुत्रकर्तृताविशिष्टा गमनसमानकालीना गमनकर्त्रीत्यन्वय बोधः । नच तत्कारकान्वयिनी साक्रिया पदान्तरेण न प्रतिपादिता, तथा सति सह पदं तत्र मूकम् । अतएवात्र पुत्रकर्तृकागमनकालीन मागमनं पुत्रकर्तृक गमन समानकालीनमागमनं च न प्रतीयत इति । तन्न, तथा सति यशसासहमूर्छति तव शत्रुरित्यादौ श्लेषभित्तिकसहोत्त्यलंकारे यशः कर्तृकवृद्धिसमानकालीन मोहकर्ता शत्रुरित्यन्वयबोधानुपपत्तेः । मूर्छतीत्यनेन कर्तृत्वान्वितायाः मोहक्रियाया एवाभिधानात् सहशब्देन यशः कर्तृकवृद्धिसमानकालीनत्वाभिधानासम्भवात । सम्भवेवा यशसा सह मुह्यति तवशत्रु रित्यत्रापि तथा प्रतीयेत । तस्मा न्मूर्छति नाश्लिष्टार्थेन वृद्धिर्मोहश्चोपस्थितः, तत्रवृद्धौ तृतीयार्थयशःकर्तृत्वस्य, वृद्धेः सहशब्दार्थसमानकालीनत्वे तस्य च मोहेन्वयः । सहार्थ समानकालीनत्वे विशेषणतया विशेष्यतयाचान्वये तद्धातुजन्यक्रियोपस्थितिस्तन्त्रमिति मुह्यतिनावृद्धे रनुपस्थापनात् यशसा सहमुह्यति शत्रुरिति न प्रयोगः । नवा सहपदस्य क्रियाकारकभेदेनार्थभेदः, रूपप्रागभावेन सह गन्धप्रागभाव इत्यादौ क्लृप्तया समानकालीनत्व शक्त्यैव निर्वाहात । तृतीयायाः करणकर्तृत्वयोः क्लृप्तशक्तिकायाः कारकचतुष्टये शक्तिचतुष्टयं कल्प्यत इत्यतिलाघवम् ।

ननु गां पुत्रे धनं पितरि लभमाने पुत्रेण सहधनं लभत इत्यपि प्रसज्यते । नच तृतीयानिर्दिष्टभिन्नस्य कारकस्यैकरूपावच्छिन्नत्वेन गुणप्रधानाक्रिययो रन्यन्वयबोधसामग्र्यपेक्षणीया, अत्र च नधनकर्मताया गुणक्रियायामन्वयसम्भव इति न तथा प्रयोगइति वाच्यम् ; एवं सति शिशुः पयोधास्यति सागरे सहेत्यत्र श्लेषभित्तिक सहोक्तौ धास्यतीत्यनेन धारणपानक्रिये उपस्थिते तयो र्धारणेसागरकर्तृत्वस्य सहार्थ

समानकालीनत्वे धारणस्य पाने सहार्थस्य पयःपदार्थक्षीरकर्मत्वस्यचा न्वयः, गुणक्रियायां सागरकर्तृकधारणे नतदन्वयो बाधात्, किन्तु पयः पदार्थ सलिलकर्मत्वस्येति नैकरूपावच्छिन्नस्य कारकस्य द्वयो रन्वयसम्भव इत्यनुपपत्तितादवस्थ्यात्। तेनैककर्मत्वाद्यपि कर्तृत्वार्थक तृतीयासमभिव्याहृतस्य सहपदस्यार्थ इत्यपि निरस्तमिति चेन्न; -गुणप्रधान क्रिययो रेकपदार्थकर्मकत्वाद्यन्वयस्यैव व्युत्पत्तेः।

इदमत्रा कूतं-शिशुः सागरैः सह पयोधास्यतीत्यादौ शिशुपदेन शिशोः सागरपदेन समुद्रस्य सहपदेन समानकालीनत्वस्य धास्यति पदेन खण्डशोभाविधारणत्व पानकर्तृत्वानांच पयःपदेन नीरक्षीरयो र्द्वितीयया कर्मत्वस्योपस्थितिः, सागरकर्तृक धारणे नीरकर्मतायाः शिशुकर्मकपाने क्षीरकर्मत्वस्य योग्यताज्ञानं, परस्परं पदानामाकांक्षा ज्ञानंचेति शाब्दसामग्री; तया सागरकर्तृक नीरकर्मकधारणसमानकालीन शिशुकर्तृका क्षीरकर्मिका भाविपानक्रियेत्यन्वयबोधः। यत्र पय श्शब्देन क्षीरमात्रस्योपस्थितिः समानफलोपधायक पयःपदजनितनीर स्मृतिः[न] तद्योग्यता ज्ञानादिविरहात्, यत्र च प्रधानक्रियायामपि न कर्मत्वान्वयः, तत्र तदघटिताभिन्नैव सामग्रीति दिक्।

श्लेषस्थले एकपदोपात्तयोरभेदोव्यंजनया प्रतीयते, वैयंजनिक बोधे बाधोनविरोधी। श्लेषमूलका भेदाध्यवसायाच्च क्रिययोरेककर्मत्वं सहपदेन ध्वननवृत्त्याप्रत्याप्यते। एवमेव सकलकलं पुरं चंद्रमण्डलमिवे त्यादौ [स]कलकल सहितस्य सकलकलायुक्तस्यच श्लेषभित्तिकाभेदात स एवसाधारणधर्मतया परिस्फुरतीति तु रसविद्याविदः। श्लेषस्थले पयःपदस्य पयःपदवाचित्वावच्छिन्ने लक्षणा, तत्कर्मत्वं च धारण पानयो रुभयो रप्य बाधितमेव। एवं पुरचन्द्रयोः सकलकल पद प्रतिपाद्यत्व मेव साधारणो धर्मइति व्यंजना विद्वेषिणः।

नन्वेवं "पुमान् स्त्रिये" ति सूत्रे स्त्रिया सहोक्तौ पुमान् शिष्यत इत्यादि व्याख्यान मनुपपन्नं, मुख्य क्रिया कर्मण्य नभि-

हिते गौण क्रियाकर्मणि सहयुक्त तृतीयाया असाधुत्वात; अन्यथा ग्रामेणसह गच्छतीत्यपि प्रसज्येत, तथाच प्रकृते स्त्राकर्मकोक्तिस-मानकालीनायां मुक्तौ पुमान् शिष्यत इति कथ मवगम्यत इति चेत् ? पुंसइति कृयोग लक्षग षष्ठ्यन्तपदमनुषज्य पुमान् स्त्रियेति वाक्यस्यो पपादनीयत्वात । एवमेव यत्कर्तव्यं तदनया सहेत्यत्रापि पत्येति पद मध्याहरणीय मिति प्रांचः । वस्तुतो यत्रैक द्रव्ये क्रियाद्वय निरूपितं कारक मभिधानीयं, तत्र प्रधानीभूत क्रिया कारक प्रतिपादिका विभक्तिरेव प्रयोक्तव्या, गुण क्रियाकारकं तत्स मभिव्याहृतया प्रथमादिविभक्त्यैव प्रतिपाद्यते, संसर्ग मर्यादयैववा भासते, पक्त्वौ दनो भुज्यत इत्यादौ तथा दर्शनात । उक्तंच "प्रधाने तरयो यत्र द्रव्यस्य क्रिययोः पृथक् । शक्ति गुणाश्रया तत्र प्रधान मनुरुध्यते । " प्रधानविषया शक्तिः प्रत्ययेनाभि धीयते । यदा तदा गुणे तद्व दनुक्तापि प्रतीयते ॥ " इति । स्त्रियासहोक्तौ पुमान्शिष्यत इत्यत्र प्रधानक्रियायाः शिष्यति नोपात्तायाः कर्तृकारके आख्यातेनोपात्ते गुणक्रियाया वचनस्य कर्मत्वं विनापिकृद्योगषष्ठ्या प्रथमया प्रतिपाद्यते संसर्गमर्यादयावाभासत इति नपुंसइति पदमध्याहर्तव्यं । एवमेवशाकेनसहपक्त्वोदनो भुज्यते पत्न्या सहपक्त्वा भुङ्क्ते ओदनं पतिरित्यादयोपि प्रयोगाः सूपपादाः ।

शाब्दिकास्तु सहपदं व्यंजक मेव, नतु वाचकं, क्रियायाः समानकालीनत्वादिसंसर्गेनान्वयः । अतएव सह प्रयोगं विनापि पुत्रेणाग च्छति पितेति वाक्य प्रामाण्यं वृद्धो यूनेति निर्देशेन ज्ञाप्यत इति प्राहुः ।

व्यक्तिर्जात्या सह भासत इत्यत्र क्रिययो स्तादात्म्यं सहार्थः, भासतेर्ज्ञान माख्यातस्य तृतीयायाश्च विषयतालक्षणं गौणं कर्तृत्वम् । तथाच जातिकर्तृकभानाभिन्नं व्यक्तिकर्तृकं भानमित्यन्वय बोधः । जा-

स्यासह व्यक्तिमवगाहते बुद्धिरित्यत्र तृतीया द्वितीययोः विषयतारूपं कर्मत्वं, अवगाहते निरूपकत्वफलकोविषयितारूपो व्यापारः, आख्यातोपात्तं गौणमगौणं वा कर्तृत्वं प्रकृत्यर्थ विशेषितं तद्विशेषणंवा, गौण प्रधान क्रिययो विशेषणतया विशेष्यतयावा, प्रथमान्त विशेष्यक शाब्द बुद्धिपक्षे गुणक्रियाया द्वेधान्वयः । तथाच जातिकर्मकावगाहन कर्तृ बुद्धि जातिकर्मकावगाहन समान कालीन व्यक्त्यवगाहन कर्त्रीत्यन्वय बोधः । सहपद तुल्यार्थाश्च साकसार्धं समं शब्दाः ।

महाशरीरे वैजात्यविशेषो यासमग्रता ।
तदभावो यद्विकारात् तृतीया तत इष्यते ॥ ३ ॥

सन्तितावच्छरीरेषु समग्रत्वलक्षणा मनुष्यत्वव्याप्या ब्राह्मणत्व व्याप्या वा जातयः, यदवच्छिन्ने विजातीयानां त्वगसृग स्थिपादादीनां समवायिकारणता । अस्थिवृत्तिसमवायेन महाशरीरोत्पत्तौ तादात्म्येना स्थिकारणं, अतो नमांसे व्यभिचारः । काणखञ्ज शरीरादौ च न साजातिः, तदवच्छिन्नसमवायिकारणस्या विकृतचक्षुर्गोलकपादादेरभावात् । एव मधिकावयवेपि त्रिलोचनादौ न साजातिः, अधिकस्य तृतीयलोचनस्य तत्सामग्र्या मनुप्रवेशात् । तथा च "येनाङ्गविकार" इति सूत्रे 'येनांगेनांगिनो विकारस्ततस्तृतीये'ति वृत्तेरयमर्थः- यत्समवेतत्वप्रयुक्तो महाशरीरत्वजातेरभावः खण्डशरीरे ततःप्राणि प्रतीकात् तृतीयेति । अवयवस्य विकारस्तु फलतः सिद्ध्यति, विकृतावयवसमवेतत्वस्य महाशरीरत्वाभाव प्रयोजकत्वात् । अक्ष्णाकाण इत्यत्राक्षिपदं गोलकपरं, समवेतत्वप्रयुक्तसामग्र्याभाव स्तृतीयार्थः, काणपदस्य चक्षुरधिष्ठित गोलकारब्धत्वे सति चक्षुरनाधिष्ठित गोलकसमवेत शरीरमर्थः । तथा च गोलकसमवेतत्व प्रयुक्तसमग्रत्वाभाववान् चक्षुरधिष्ठितानधिष्ठित गोलकसमवेतः पुरुष इत्यन्वयबोधः । गोलकस्यविकारः कनीनिकोपघातादिप्रयुक्तो वैजात्य विशेषाभाव आक्षेपलभ्यः, अविकृतचक्षुरारभ्यत्वस्य महाशरी

स्त्वाभाव प्रयोजकत्वाभावात । प्रयोज्यप्रयोजकभावस्तु व्याप्य-व्यापकभावस्स्वरूपसम्बन्धविशेषोवा । एवं पादेन खञ्जइत्यत्र पाद वृत्ते स्तत्संस्थानवृत्तेर्वा जातिविशेषस्याभाववति पादे समवेतः खञ्जपदार्थः । तथाच पादसमवेतत्वप्रयुक्तसामग्र्याभाववान् यथा स्थितपादसमवेत इत्यन्वयबोधः । यदि चामूलमुत्खातिकगोळको लून पादको वा काणः खंजश्च भवति, तदा चक्षुरधिष्ठितगोळकद्वया समवेतत्वे सति चक्षुष्मद्गोळसमवेतः काणः; समग्रपादद्वयासमवेतः पादसमवेतः खंजः; तादृशस्थले चाक्ष्णा पादेनेति सम्बध्यते ।

वस्तुतस्तु तृतीयाया विकारोर्थः, सच क्वचिन्नाशः, क्वचि दुपघातः, क्वचि च्छापादिः । तथा चाक्ष्णा काण इत्यत्राक्षिविकार प्रयुक्तचक्षुःशून्यत्ववद्गोळकवान् तत्प्रयुक्तचक्षुष्मद्गोळकद्वयासमवेतत्व वान् वेत्याकारको बोधः । काकगोळकस्य तु शाप एव विकारः । अत एव "एत मक्ष्णा काणं चकार च रामो रघुराजपुत्र" इति मुरारिः । मुखेन त्रिलोचन इत्यत्र मुखे लोचनत्रयवत्ताप्रयुक्तो विकारः सामग्र्यविशेषस्याभावः तत्प्रयुक्तो महाशरीरत्वाभावः, गोळकाभ्यां मुखं मुखेन शरीरं प्रारभ्यत इत्यभिप्रायेण मुखेन त्रिलोचन इति माघः । वपुषा चतुर्भुज इत्यत्र वपुःपदं शरीरपूर्वार्धपरमिति दिक् ।

हेतौ तृतीया हेतुस्तु कारको ज्ञापको द्विधा ।
जन्यत्वं ज्ञाप्यता तस्या अर्थ इत्येकदेशिनः ॥ ४ ॥

"हेतौ तृतीये" त्यनुशासनेन हेतोः प्रकृतिलभ्यतया हेतुत्वे तृतीयावाच्यत्व मनुशिष्यते । हेतुश्च द्विविधो जनको ज्ञापकश्च । दण्डेन घटो धूमेन वह्निरित्यादा वाधाराधेयभावेन दण्डहेतुत्वयो धूम ज्ञापकत्वयोश्च निरूपकतयाच कारणताघटयो ज्ञापकतावह्न्योश्चान्वयः ।

मणिकृतस्तु न ज्ञापकत्वं तृतीयार्थः, चक्षुषा रूप मिति प्रयोगप्रसंगात; धूमस्याज्ञापकतया धूमेन वह्निरित्यप्रयोगप्रसंगात ;

अननुशासना च्च । किन्तु धूमेन वह्निरित्यत्र धूमपदं धूमज्ञाने वह्नि पदं वह्निज्ञाने ज्ञायमानवह्नौ वा लाक्षणिकम् । हेतुत्वाच्च तृतीयार्थः । तथा च धूमज्ञानवृत्तिहेतुतानिरूपकज्ञानविषयो वह्निरित्यन्वयबोधः । चेष्टया पचतीत्यादौ चेष्टाज्ञाननिष्ठहेतुतानिरूपकज्ञानविषयभावनेत्य न्वयबोधः । भावनावाचिन आख्यातस्य ज्ञायमानभावनायां लाक्षणि कत्वात् आख्यातार्थैकदेशे ज्ञाने निरूपकतया तृतीयार्थहेतुत्वस्यान्वयः । विभक्त्यर्थयो र्न परस्पर मन्वय इति पुन रप्रामाणिकम् । एवं प्रत्यक्षो पजीवकत्वेन निरूप्यत इत्यादौत्वप्रत्ययः प्रत्यक्षोपजीवकत्वज्ञाने लाक्ष- णिकः । तन्निष्ठजनकतानिरूपकत्वं निरूपणे भासते । प्रत्यक्षोप जीवकत्वसंगते ज्ञानं च तज्जिज्ञासाया जिज्ञापयिषाया वा प्रयोजक त्वेन निरूपणजनकम् । यजेतेति वेदेन याग इष्टसाधन मित्यादा वपि वेदज्ञानजन्यज्ञानविषयेष्टसाधनत्ववान् याग इत्यन्वयबोध इत्याहुः ।

एकदेशिनस्तु जनकत्वं ज्ञापकत्वंवा न तृतीयार्थः, तथासति घटो नरासभेनेतिवत् घटो नदण्डेनेति प्रयोग प्रसंगात्; दण्ड निष्ठ हेतुताया अभावस्य घटे सुतरांसत्त्वात् । नच निरूपकता संसर्गो वृत्तिनियामको येन तत्संसर्गावच्छिन्न प्रतियोगिताको हेतुत्वाभाव स्तृ तीया समभिव्याहृतेन नञा बोध्यते । नापि वृत्त्यनियामक सम्बन्धः प्रतियोगिता वच्छेदक इति जन्यत्वं ज्ञाप्यत्वंच तृतीयार्थ इत्याहुः । तच्चिन्त्यं, वृत्त्यनियामकसम्बन्धस्य प्रतियोगितानवच्छेदकत्वे घ- टो न पारिमाण्डिल्येनेत्यादौ घटे पारिमाण्डिल्य जन्यत्वाभावो प्रसिद्ध प्रतियोगितया नबोधयितुं शक्यः, तृतीयार्थेच निरूपकता संसर्गा वच्छिन्न प्रतियोगिताकः पारिमाण्डिल्याभाव श्चा प्रसिद्ध इत्यनन्वय प्रसंगादित्यधिक मुपरिष्टात् ।

हेताविति सूत्रे फलमपि हेतुः । अध्ययनेन वसतीत्यत्राध्य- यनफलको वासो वाक्यार्थः । तत्फलकत्वं च तदिच्छाप्रयोज्या

चारविषयत्वं, नतु तज्जनकत्वं, निर्वाणेन सुगत मुपास्ते जाल्म इत्यादौ सुगतोपासने निर्वाणजनकताया बाधात् ।

तुलोपमान्यशब्दार्थ सादृश्यप्रतियोगिताम् ।
तृतीयाऽप्याह षष्ठयेव स्या त्तुलोपमयो र्द्वयोः ॥ ९ ॥

सादृश्यवाचकपदसव्यपेक्षा तृतीया षष्ठी च सादृश्यान्वितं प्रतियोगित्व मभिधत्ते । चन्द्रेण चन्द्रस्य वा सदृशं तुल्यं समं वा मुख मित्यादौ चन्द्रप्रतियोगिकसादृश्यवन्मुख मित्यन्वयबोधः । तत्र यदि सादृश्य मतिरिच्यते, तदा तत्प्रतियोगित्वमपि तथा । यदि च वृत्तितद्धर्मवानेव सदृशपदार्थः, तदा वृत्त्यन्वयिनिरूपकत्वमेव प्रति योगित्वं तृतीयार्थः । तथा च चन्द्रनिरूपकवृत्तिमद्धर्मवन्मुख मित्य न्वयबोधः । सादृश्यघटकभेदे च तृतीयार्थः प्रतियोग्यनुयोगिभाव स्वरूप एवान्वेति, घटेन रहितं शून्यं वा भूतल मित्यादौ प्रति योगित्वार्थतृतीयादर्शनात् । भेदाविशेषितसाधर्म्यार्थकसदृशशब्दादि योगेपि वृत्त्यन्वयिनिरूपकत्वार्थिका तृतीया , रामरावणयो र्युद्धं रामरावणयो र्युद्धेन सदृश मित्यपि प्रयोगात् । एतादृशानन्वयालंकारे प्रथमतो रामरावणयुद्धनिरूपितवृत्तिकधर्मवद्रामरावणयुद्धमितिबोधः । ततो भेदांश मपहाय साधर्म्यमात्रे लाक्षणिकपदप्रयोगफलविधया निरुपमं रामरावण युद्धमिति वैयंजनिकोबोधः । समानसः शाब्दो वेत्यन्यदेतत् । सदृशपदं निरुपमे, युद्धपदं रामरावणयुद्धेतरत्र लाक्षणिकं रामरावणयो रिति पदं लक्षणातात्पर्यग्राहकमिति काव्यमार्गविरुद्धम् ; [अ] निरूढलक्ष णाया: प्रयोजनशून्यत्वेनेयार्थत्वोपगमात् । सादृश्यवाचिनोरपि तुलोपमयो र्योगे चन्द्रस्य तुलामुपमां वा मुखं धत्त इत्येवप्रमाणम् । नतु चन्द्रे णेति । कथं तर्हि " तुलां यदारोहति दन्तवाससे " ति, "स्फुटो पमम्भूति सितेन शम्भुने " ति प्रयोगइति चेत्? सहपदस्याध्याहारेण तदर्थस्य संसर्गविधया वा भाने सहयुक्ते तृतीयाप्रयोगात् । तथा च दन्तवासः कर्तृक तुलाकर्मकारोहण समानकालीन तुलारोहणकर्तेति, भूतिसित

शम्भवभिन्नस्फुटोपम समानकालीन स्फुटोपमाभिन्न नारदं, इति चान्वय बोधः ।

परंतु चैत्रेणसंयुज्यते समवैतीत्यादौ निरूपकत्वं, निर्वैरेण वैरायते निर्मत्सरेण सहस्पर्धते इत्यादौ विषयविषयिभावः, तेन सहोपमीयते तुल्यते इत्यादौ तदीयत्वादि सहार्थः । अत एव " तदुत्तमांगजैः समश्रमयैव तुलाभिलाषिण " इति श्रीहर्षः । सहयुक्ते तृतीयातु साधुत्वार्थे त्याहुः ।

प्रकारोद्विविधः विशेषणमुपलक्षणं च । तत्र तद्बुद्धिसमानकालीनत्वे सति तद्बुद्धिप्रकारोविशेषणम् । प्रमेयोद्रव्यं गौरिति प्रतीतौ गोत्वादि । तद्बुद्ध्यसमानकालीनत्वे सति तद्बुद्धिप्रकारउपलक्षणं । यथा गुरुणाटीका, कुरुणाक्षेत्रमित्यत्र कुरुगुरू । अत्र हि तत्कालनिष्ठस्य ध्वंसस्य कादाचित्काभावस्य प्रतियोगित्वं सम्बन्धश्च तृतीयार्थः । तथाचा विद्यमानस्य गुरोष्टीका कुरोः क्षेत्रमित्यन्वयबोधइति केचित् ।

"इत्थम्भूतलक्षणे तृतीये" ति सूत्रे अतीतार्थकोपि निष्ठाप्रत्ययोपि साधुः । इत्थं भूतस्य अतीतस्य लक्षणेसम्बन्धे बोध्ये तृतीया साधुरिति सूत्रार्थः । इत्येतन्मतोत्तम्भनावसरे मिश्राः – विशेषणत्वं प्रकारत्वं च पर्यायशब्दौ । योयस्यां बुद्धौ यत्रप्रकार स्सतत्रविशेषणं। विशेषणोपस्थापक मविशेषण मुपलक्षणम् , यथा काकेनोपस्थितः संस्थानविशेषादिः देवदत्त गृहविशेषणीभूय भासतइति तत्प्रतीतावुपलक्षणं काकः । एव मनुमितौ लिंगस्य शाब्दबोधेपदस्य उपलक्षणत्व मिष्टमेव । काकेन देवदत्तगृहाइत्यत्र च काकज्ञानजन्य बुद्धिविषया देवदत्तगृहा इत्यन्वयबोध इत्यपरे ।

विशेष्ये साक्षात्संसृष्टं विशेषणं, परम्परयोपलक्षम् । यथाह शिवादित्यः- " व्यावर्त्तनीयमधितिष्ठति यद्धिसाक्षादेत द्विशेषणमतो विपरीतमन्यत। दण्डीपुमानिति विशेषणमत्रदण्डः पुंसोनजातिरनुदण्डमसौ

च तस्ये" ति । अनुदण्डं दण्डमनुगतादण्डत्व जातिः पुंसो नविशेषणम्, किं त्वसौदण्डस्येत्यर्थ इत्यपरे ।

मणिकृन्मतानुयायिनस्तु विशेषण मुपलक्षणमिति परिभाषा-नानार्था । यत्र दण्डीपुरुष इति ज्ञानं, तत्र ततो निर्दण्डि पुरुषव्यावृत्तो दण्डी पुरुष इति निश्चयः तत्र दण्डो विशेषण मित्युच्यते । यत्रैकैकस्या एव व्यावृत्ते रनुयोगिता प्रतियोगितावैक धर्मावच्छिन्ना तत्र तदनुयोगिता वच्छेदकत्वेन तत्प्रतियोगिता वच्छे दकाभाव प्रतियोगित्वेनच प्रतीयमानत्वं विशेषण पद प्रवृत्तिनिमित्तं ; अतएव श्वेतेतरकरवीरस्य कुवलयस्य व्यावृत्तौ पुण्डरीकत्वा वच्छेदेन गृह्यमानायां श्वेतत्वं न कमलविशेषणम् । अतएव चेदं विशेषणत्वं न व्यावृत्ति बुद्धे विषयः, किन्तु तदनुव्यवसायादेः । काकतो गृहा देवदत्तस्ये त्यादौ देवत्त स्वत्व रहित गृहव्यावृत्तिः संस्थान विशेषावच्छेदेन गृह्यतइति काको न विशेषणम् । अपितु विशेषणान्यत्वेसति व्यावृत्ति बुद्धि प्रकारतया तदुपस्थापकतया व्या वर्तकतयावोपलक्षणम् । अतएव प्रमेयत्वादे विशेषणोपलक्षण बहि र्भावात् प्रकारो द्विविध इति प्रतीकं गृहीत्वा व्यावर्तक इति शेषो-मिश्रैः पूरितः । इयांस्तु विशेषः मिश्रमते विशेषणत्वं वस्तुसदेव व्यावृत्त्यधिकरणता वच्छेदकत्वम् । तच्च संयोगाद्य वच्छेदकत्वात् स्वरूप सम्बन्धविशेषः । तस्य प्रामाणिकत्व द्योतनाय मणौ प्रत्याव्य व्यावृत्तीत्यादि निर्देशइति । तत्र "व्यावृत्त्युल्लेखानन्तरमेवहि विशे षण प्रत्यय" इति मणिवाक्यं दुरुपपादम् । उपलक्षण तृतीयायास्तु नोपलक्षणत्वं शक्यं, किंन्तु वस्तु सत्युपलक्षणे प्रतिपादकेनोपस्थापिते सम्बन्धमात्रम् । काकेन देवदत्तगृहा इत्यत्र काकसम्बन्धिनो देव दत्तगृहा इत्यन्वय बोधः । प्रमेयत्वादिच न स्वरूप सद्व्यावर्तक मिति नप्रमेयत्वेन घटइति प्रयोगः । यत्तु पशुना यजेतेत्यादौ पशु गतमेकत्वं विशेषणं, गृहं समार्ष्टीत्यत्र गृहगत मुपलक्षणमिति छान्दसानां

व्यवहारः, सच विशिष्टान्वय तदनन्वय निबन्धनः । विशिष्टान्वयस्तुत्रिविधः- पशुना यजेतेत्यादौ तृतीयोपात्त कर्मताशं यागभावनायांवा पशोरन्वये एकत्वावच्छिन्न प्रतियोगिताकः संसर्गाभासत इत्येकः । पशौ तद्विशेषणतापन्नैकत्वेच प्रकारता पर्याप्तेतिद्वितीयः । एकत्वे प्रकारत्वद्वयम् अन्योन्यावच्छिन्न - मेकं पशुविशेष्यतया द्वितीयं भावनादिविशेष्यतया निरूपितम् , एक मेववा भिन्न विशेष्यता द्वय निरूपक संसर्गता युगळा वच्छिन्न मिति तृतीयः कल्पः । तथा च यदि दण्डावच्छिन्नः पुरुषसम्बन्धो विवक्षितः, तदा दण्डस्य विशेषणत्व मितरथातूपलक्षणत्वम् । उपलक्षणतायां दण्डेन पुरुष मानयेत्यादि प्रमाणम् । प्रमेयः प्रमेयपदवाच्य इत्यादौ विशेष्यान्वयिवाच्यतादात्म्यान्वयितया प्रमेयत्व मपि विशेषण मित्याहुः ।

तत्र तृतीयायाः सम्बन्धमात्रार्थकतया प्रमेयत्वेन द्रव्यत्वेन वा पुरुष मानयेत्यादिकः कुतो न प्रयोग इत्युच्यते -

अभावप्रतियोगित्वं वैशिष्ट्यं च तृतीयया ।
कथ्यते तत्र लक्ष्यस्य पुरुषादे र्द्विधान्वयः ॥ ६ ॥

दण्डेन पुरुष इत्यादौ अभावप्रतियोगित्वं वैशिष्ट्यं च तृतीयार्थः । तत्राभावे पुरुषः, तत्प्रतियोगित्वं च दण्डत्वावच्छेदेन दण्डे, सच वैशिष्ट्ये, तत्पुरुषे ऽन्वेतीत्युपलक्ष्यस्य विशेषणतया विशेष्यतयाच द्वेधा वाक्यार्थानु प्रवेशः । पुरुष निष्ठात्यन्ताभाव प्रतियोगि दण्ड विशिष्ट पुरुष इत्यन्वय बोधः । प्रत्येकं गुणानां द्रव्य निष्ठात्यन्ताभाव प्रतियोगित्वेपि न गुणत्वावच्छेदेन तथेति गुणेन द्रव्यमिति नप्रयोगः, उपलक्षणता वच्छेदक धर्मावच्छेदेन तृतीयार्थान्वय व्युत्पत्तेः । " कळक्वणित गर्भेण कण्ठेना घूर्णितेक्षणः । पारावतः परिभ्रम्य रिरंसु श्चुम्बति प्रिया " मित्यत्र कळक्वणित गर्भकण्ठत्व मेवोपलक्षणतावच्छेदकं, तच न पारावत निष्ठात्यन्ता-

भाव प्रतियोगिता वच्छेदकत्व बाधः । अत्यन्ताभावो वैशिष्ट्यं च तृतीयार्थः,अत्यन्ताभावे न्वयितावच्छेदका वच्छिन्न प्रतियोगितया वैशिष्ट्येच निरूपकतया दण्डस्यान्वयः, पुरुषत्व सामानाधिकरण्येन दण्डाभावो दण्डवैशिष्ट्यं चान्वेति इत्यपि वदन्ति ।

अवच्छिन्ना प्रतियोगिता तृतीयार्थः, तत्रावच्छिन्नत्वे दण्डस्य पुरुषत्वविशिष्टे च प्रतियोगित्वस्यान्वयः, तथा च दण्डावच्छिन्न प्रतियोगितावान् पुरुषइत्यन्वयबोधः । पुरुषत्वव्यापकं प्रमेयत्वादिकं तद्व्याप्यं चैत्रत्वादिच न पुरुषत्वावच्छिन्न प्रतियोगितावच्छेदकं, व्याप्यव्यापकभावापन्नयो रेक प्रतियोगितानवच्छेदकत्वादिति प्रमेयत्वेन चैत्रत्वेनवा पुरुषइति न प्रयोग इत्यपरे ।

यजतेपशुनारुद्र मित्यादौ दानवाचके ।
यजतौ कर्मता माह तृतीयाधारतां क्वचित् ॥ ७ ॥

पशुनारुद्रंयजतइत्यादौ पशुंरुद्राय ददातीत्यन्वयबोधः । कर्मणि तृतीयासम्प्रदाने द्वितीया । पुष्येण स्नायादित्यत्र कालिकमाधारत्वं तृतीयार्थः, पुष्यपदं पुष्यचन्द्र संयोगावच्छिन्नकालपरम् । भोगेन प्रसित उत्सुकइत्यत्र तृतीयाविषयत्वलक्षणं गौणमाधारत्वमभिधत्ते ।

कालाध्वात्यन्तसंयोगक्रियाचे दपवर्गिणी ।
तृतीया युज्यते तर्हि द्वितीयैवान्यथा भवेत् ॥ ८ ॥

"अह्नाक्रो शेन वानुवाको ऽधीत" इत्यादाव हस्त्व क्रोशत्वादि व्यापिकीं कालिकीं दैशिकी माधारतां तृतीया ब्रूते, यदि फलवती क्रिया धातूपात्ता । फलत्वन्तु यदिच्छा प्रयोज्याचारविषयः क्रिया तत्वम् । तदुपहिताक्रिया तथा । अध्ययनाचारश्च दृढ संस्कारेच्छा प्रयोज्य इति दृढसंस्कारोपहिताध्ययने धातुर्लाक्षणिकः । यत्रतु क्रियायां न फलोपधानं 'मासमधीतोऽपि नाभ्यस्त' इति, तत्र

द्वितीयैव प्रमाणम् । अत्यन्त संयोगमात्रं तृतीयार्थः अन्यस्तु व्यंजनागम्यः । दिवसेन भवान् युद्धयेतेत्यत्र दिवसाभिव्यापकंभवत्कर्तृकं युद्धमिति प्रथमः, विजय फलेनोपहितं युद्धमिति द्वितीयश्च बोध इति प्रकाश काराः ; तत्र तवशत्रु र्दिवस मयुद्ध्यत नतु दिवसेनेत्यत्र गति श्चिन्त्या । फलोप हितत्वस्य पदार्थतावादेतु दिवसाभिव्यापक युद्धकर्ता दिवसाभि व्यापक फलोपहित युद्धकर्तृत्वाभाववांश्च तव शत्रुरित्यन्वयबोधः ।

इति तृतीयाविवरणम् ॥

---

ङेभ्यांभ्यसश्चतुर्थी सा सम्प्रदानत्व वाचिका ।
सम्प्रदानन्तु दानस्य क्रियायावा फलोपयुक् ॥ १ ॥

ङेभ्यांभ्यसितिचतुर्थी । तत्र ङकारोनुबन्धो नवाचककोटिप्रविष्टः । चतुर्थ्यर्थस्तु सम्प्रदानत्वम् । तत्र ददातेः स्वत्वध्वंस जनको व्यापारोर्थः । अतएव स्वत्वध्वंसवत्तया हिरण्यादेः कर्मत्वं । उत्सर्गेपि ददाति मुख्यएव । विक्रयादावपि ददातिप्रयोगो दृश्यते गामिधुनमादायकन्यां ददाति इत्यादौ ।

यद्वा उपेक्षायां ददातिव्यवहाराभावात् स्वत्वानुकूलत्यागो ददात्यर्थः । त्यागस्तु नमम किं त्वस्येत्याकारो नममेत्यनेनोपेक्षा साधारणेन स्वत्वध्वंसम्प्रतिजनकः । स्वत्वध्वंसप्रकारतानिरूपित विशेष्यतासंसर्गेण तत्पुरुषीय त्यागस्य विशेषणतया तत्पुरुषीय स्वत्वध्वंसं प्रति जनकत्वात् । किन्त्वस्येत्यनेन परस्वत्वं प्रतित्यागस्य जनकता । स्वत्वध्वंसोव्यापारः । अतएव चिरान्तरितेपि त्यागे सम्प्रदानानुमत्या तदीयं स्वत्वं जन्यते, नजन्यतेच चोरकर्तृकत्यागेन परस्वत्वं । पूर्वस्वामि स्वत्वस्य स्वत्वान्तरप्रतिबन्धकत्वात् ।

यत्तु त्यागस्योपेक्षासाधारणेन रूपेण स्वत्वनाशं प्रत्येव जनकत्वं न तु स्वत्वे, प्रमाणाभावात्; "सप्तवित्तागमा धर्म्या लाभोदायः क्रयोजयः । प्रयोगः कर्मयोगश्च सत्प्रतिग्रहएवचे"त्यत्र, "याजनाध्यापनप्रतिग्रहै ब्राह्मणो धनमार्जयेत्" इत्यत्रच, प्रतिग्रहस्यैव स्वत्वोपायत्वाभिधानात् । प्रतिग्रहस्यापीदं ममेत्याकारानुमतिस्वरूपस्य समित्कुशाद्युपादान साधारणेन रूपेण स्वत्व जनकत्वम् । तत्पुरुषनिरूपितस्वत्वं प्रति तत्पुरुषसमवेतस्वीकारस्य विशेष्यतयाकारणत्वात् । तथा च स्वत्वमात्रं चतुर्थ्यर्थः । तत्र प्रकृत्यर्थस्य निरूपकतयान्वयः । जनकतया च स्वत्वस्य ददात्यर्थफले स्वत्वध्वंसे ऽन्वयात् ब्राह्मणाय गान्ददातीत्यादौ ब्राह्मणनिरूपितस्वत्व जनकगोनिष्ठ स्वत्व ध्वंसजनकत्यागवा नित्यन्वयबोधः । व्यधिकरण स्वत्वं प्रतिगविस्वत्वध्वंसस्यजनकतया स्वत्वे गोवृत्तित्वमर्थाल्लभ्यते । तेन पुत्रस्वाराज्यकामनया दीयमानायां गविपुत्राय गान्ददातीति न प्रयोग इति ।- तन्न स्वत्व ध्वंसजनकत्यागमात्रस्य ददात्यर्थत्व उपेक्षायामपि ददातिप्रयोगापत्तिः । दानस्य स्वत्वं प्रत्यकारणत्वे अन्यमुद्दिश्यत्यक्ते न्यस्योपादाने स्वत्वोत्पत्तिप्रसंगात् । उपादानमात्रस्य स्वत्वकारणत्वे समित्कुशादाविव प्रामनाष्टिक हिरण्यादावपि उपादानमात्रेण स्वत्वोत्पत्तिप्रसंगात् । उपादानेन स्वत्वेजननीये समित्कुशादीनां तादात्म्येन सहकारित्वाभ्युपगमे तु दानस्यापि विशेषसामग्रीघटकत्वमावश्यकम् । तत्पुरुषीय स्वत्वप्रकारतानिरूपित विशेष्यतासंसर्गेणत्यागस्य तत्पुरुष स्वत्वं प्रतिकारणत्वम् । स्वत्वध्वंसस्तुव्यापारः । ब्राह्मणाय गान्ददातीत्यादौ निरूपकत्वं स्वामित्वंवा चतुर्थ्यर्थः । तथा च ब्राह्मणनिरूपितस्य ब्राह्मणसमवेत स्वामित्व निरूपितस्य वा स्वत्वस्य स्वत्वध्वंसव्यापारेण जनकस्त्यागोवाक्यार्थः । भवतु वा स्वत्वस्योद्देश्यत्वाख्य विषयतासंसर्गेण त्यागान्वया स्वत्वोद्देश्यकत्वरूप स्त्यागएव ददात्यर्थः । अतएव स्वत्वानुपहिते प्युत्सर्गे ब्राह्मणस्य सम्प्रदानत्वं ददातेश्च मुख्यत्व मुपपद्यते ।

यत्तु - उत्सर्गेणापि समनन्तरमेव सम्प्रदानस्वत्वं जन्यते। अतएव तदुद्देश्येन त्यक्तेधने तस्मिन्न प्रतिगृह्यैव निधनमुपगते तत्पुत्राणां स्वत्वोत्पत्तिरुपपद्यते, तद्व्यक्तिमरणजन्यस्वत्वध्वंसस्य स्वत्वध्वंसव्यापारेण तद्व्यक्तिमरणस्य वा तत्पुत्रस्वत्वं प्रति जनकत्वात्। अपुत्र व्यक्तिमरणजनित स्वत्वध्वंसस्य तत्पत्नीस्वत्वं प्रत्येवजनकत्वम्, 'अपुत्रस्य धनं पत्न्यभिगामी' ति स्मरणात्। ऋतुमपेक्ष्यनिधनमुपगते पितरिजातमपि स्त्रीस्वत्वं पुत्रोत्पत्त्या नाश्यते, पितृमरणजनित तत्स्वत्वनाशेनच मातृस्वत्वनाशानन्तरं पुत्रस्वत्वं जन्यते, तादृशस्थलेच मात्रा विक्रीते न पुत्रस्वत्वोत्पत्तिः, क्रेतृ पुरुषस्वत्वस्य प्रतिबन्धकस्य नाशकाभावात्-इत्यवश्यमुत्सर्गे व्यवहितस्यापि पुंसः स्वत्वं जन्यतइति। तन्न एवमपि मृतं प्रोषितमुद्दिश्यत्यक्ते तत्पुत्रस्य स्वत्वानुत्पादप्रसंगात् उत्सर्गेऽव्यवस्थान्तरस्यावश्य माश्रयणीयत्वात्। ब्राह्मणमात्र मुद्दिश्यत्यक्त तुलापुरुषादौ ब्राह्मणसामान्य स्वत्वोत्पादप्रसंगात् परस्वे दातु र्विभज्यवितरणेप्यनाधिकार प्रसंगात्। इत्थंच सम्प्रदानमित्यन्वर्थ संज्ञाबलात् दानफलस्वत्वनिरूपकत्वमेव सम्प्रदानत्वं चतुर्थ्या मुख्यार्थ इतिदार्शनिकाः।

शाब्दिकास्तु - ददातेः स्वत्वध्वंसः स्वत्वंच फलविधयार्थः, त्यागक्रियाफलद्वयमप्येकेनैव साकांक्षं। द्वितीयोपात्तमधिकरणं स्वत्वे स्वत्वं ध्वंसेच यौगपद्येनान्वेति। गां ददातीत्यत्र गोवृत्तेः स्वत्वस्य स्वत्वध्वंसस्य चानुकूल स्त्यागो वाक्यार्थः। तेन ग्रामलाभकामनया नीयमानायां गवि गां ग्रामं ददातीति न प्रयोगः। चतुर्थीतु धात्वर्थ फलान्वयिप्रीत्यादिफलान्तर मभिधत्ते। तेन गां ददाति ब्राह्मणाये त्यत्र ब्राह्मणप्रीतिजनक गोवृत्तिस्वत्वस्य गोवृत्तिस्वत्वध्वंसस्य चानुकूल स्त्यागो वाक्यार्थः। प्रीति मजनयत्यपि स्वत्वे यदि ददाति प्रयोगः, तदा तत्रेष्यमाणं प्रीतिजनकत्वमेव चतुर्थ्यर्थः। इच्छायां

चतुर्थ्यन्तप्रकृत्यर्थस्य विषयतयान्वयः। ब्राह्मणविषयतानिरूपित प्रीतिविष यतानिरूपित जनकत्वविषयतानिरूपित विषतयाभिप्रायः स्वत्वेऽन्वेति ।

अत एव " कर्मणा य मभिप्रैति स सम्प्रदान " मिति (१·४·३२) सूत्रे फलगोचर मभिप्रायविशेषमेव चतुर्थ्यर्थतया पाणिनिरुदाजहार । तत्र सम्प्रदानपदं नान्वर्थसंज्ञकं, येन दानजन्यफलभागेव सम्प्रदान संज्ञस्स्यात ; किन्तु क्रियान्तरजन्यफलवदपि सम्प्रदानमिति सञ्ज्ञा-यते, " क्रियाग्रहणं कर्तव्य " मिति वार्तिकात् । चतुर्थ्युपात्तं च फलं क्वचि दनुकूलतया धात्वर्थफले ऽन्वेति, यथा " ब्राह्मणाय ददाती ", त्यत्र दानफलस्वत्वे ब्राह्मण प्रीतिः, " वृक्षायोदकं सिञ्चती " त्यत्र क्रियाफले जलसंयोगे वृक्षपुष्टिः, " यद ग्नय च प्रजापतये च जुहोती " त्यत्र च वह्नि संयोगफलप्रक्षेपात्मक होमफले वह्नि संयोगे ऽग्निप्रजापति स्वाम्यं तत्प्रीति र्वा, ' विप्रायान्नं निर्वपती ' त्यत्र निर्वाप फले विक्लृतौ विप्रभाजनं, " खण्डिकोपाध्याय शिष्याय चपेटां ददाती " त्यत्राभिघात फलकक्रियाफले अभिघाते शिष्यव्यथा, ' अजां ग्रामाय नयती ' त्यत्र कर्मानुकूलव्यापारात्मक नयनफले कर्मणि ग्राम संयोगः ।

यत्र च नयतिना संयोगोऽप्युपात्तः, तत्र परया कर्मसंज्ञया सम्प्र-दानताबाधात् ' अजांनयति ग्राम ' मित्येव प्रमाणम् । एवं गमनजन्य फलस्य चैत्रेपि सम्भवेन ' चैत्र श्चैत्राय गच्छती ' ति प्रयोगापादन मपि परास्तम् , परया कर्तृसंज्ञया सम्प्रदानसंज्ञाबाधात् ।

क्वचि च्चतुर्थ्यर्थः प्रधानक्रियाया मन्वेति, यथा, ' आत्मनेवै पुत्रः प्रियोभवती ' त्यत्र पुत्रप्रियभावे आत्मनः प्रीतिः,' पत्येशेते प्रौढावधू ' रित्यत्र प्रौढवधूकर्तृकशयने पतिः, " ग्रामाय गच्छती " त्यत्र शुद्ध स्पन्दार्थक गमि धात्वर्थे ग्रामसंयोगः । अतएव गत्यर्थ कर्मणि विभाषाचतुर्थी विधिः मत्याख्येयः, गमि फलस्य धातुनो

पादाने चतुर्थीति न्याय सिद्धतया 'ग्रामाय चलति' 'वृक्षाय स्पन्दते' इत्यादाविव ग्रामाय गच्छतीति प्रयोगस्या प्युपपन्नत्वात । पाक मात्रस्य धातुनोपादाने 'ओदनाय तण्डुलायवा पचती' त्यादि प्रयो गोपीष्ट एवेत्याहुः ।

रुच्यर्थधातुसाकांक्षा चतुर्थी प्राह धर्मताम् ।
स्पृहिणा यतिना सव्यपेक्षातु विषयत्व वाक् ॥ २ ॥

'चैत्राय मोदते रोचते स्वदते मोदक, इत्यत्र रुच्यादे रभिलाषोर्थः, तत्समभि व्याहृत माख्यातन्तु विषयत्वं चतुर्थी समवेतत्व मभिधत्ते । तेन चैत्र समवेता भिलाष विषयो मोदक इत्यन्वय बोधः । स्पृहयति समभिव्याहृत माख्यातन्तु समवायित्व मभिधत्ते , चतुर्थीतु विषयतां । तेन 'पुष्पेभ्यः स्पृहयति' 'पटाययतते' इत्यत्र पुष्प विषयाभिलाषवान् पटविषयक यत्नवा नित्यन्वय बोधः । पट मुद्दिश्य तन्तुं साधयत्यपि प्रयत्न तदुद्देश्यत्वेन विषय इति 'पटाय यतत' इति निराबाधः । "स्त्रोषु प्रवीर जननी जननीतवैव देवी स्वयं भगवती गिरिजापि यस्यै । त्वद्दो र्वशीकृत विशाख मुखावलोक व्रीडाविदीर्ण हृदया स्पृहयाम्बभूव " इत्यत्र रेणुका सदृशीभवेय मित्यभिलाष एव स्पृहा, तस्यांच रेणुकाविषयत्वाबाधः । यदिच विषयतामात्रस्य चतुर्थ्यर्थत्वे 'पुष्पत्वाय स्पृहयति' इति प्रयोगापत्त्या स्वनिष्ठविषयतानिरूपित मुद्देश्यत्वमेव स्पृहिसमभि व्याहृतचतुर्थ्यर्थः, भवति च 'पुष्पं मेस्यात्' 'पुष्पवानहंस्या' मित्यभिलाषविषयत्व मुद्देश्यत्वस्वरूपमिष्टसाधनं, पुष्पमिष्टसाधनं पुष्पं ममेति ज्ञानद्वयेन इष्टसाधनं पुष्पं ममेति विशिष्टज्ञानेनवा तादृशेच्छा जननात्, इतिरेणुकासदृशीभवेयमित्यभिलाषो न रेणुकां किन्तु तत्सा दृश्यमुद्दिशतीति 'रेणुकायै भगवतीस्पृहयता' ति प्रयोगोनुपपन्नइति विभाव्यते ; तदा स्वीक्रियतां तादात्म्येनो द्देश्यप्रकारकोभिलाषः,

' ब्राह्मणोऽहंस्या ' मितीच्छाकारोल्लेखदर्शनात । तत्रच ब्राह्मण इष्ट साधनं । ब्राह्मणोह मित्यादिज्ञानद्वय मेकंवा कारणमित्यन्यदेतत । तथा रेणुकाहं भवेयमित्यभिलाषएव स्पृहा । तत्रच रेणुकाया निरु क्तमुद्देश्यत्वं निराबाधमितिदिक् ।

नन्वेवं ' स्पृहणीयगुणैर्महात्मभि ' रित्यत्र कर्मणि कृत्य प्रत्ययोदुरुप पादः, निरवकाशया सम्प्रदानसंज्ञया कर्मसंज्ञाया धात्वन्तरलब्धपदाया बाधादितिचेत; उच्यते । ' दानीयोब्राह्मण ' इति प्रयोगात सम्प्रदानतानी यरोपि प्रवृत्ते निमित्तमिति गम्यते, सम्प्रदानत्वप्रवृत्तिनिमित्तको नीयर प्रत्यय इति दानीयो ब्राह्मण इति प्रयोगदर्शना दवगम्यते । तेन स्पृहणीयो गुण इत्यत्र सम्प्रदान एव कृत्यप्रत्ययो न कर्मणि । एतेन " परस्परेण स्पृहणीयशोभनं नचे दिदं द्वन्द्व मयोजयिष्य" दित्यपि व्याख्यातम् ।

हरदत्तस्तु स्पृहे रीप्सित इति सूत्रं स्पृहाकर्मणि न सम्प्रदान संज्ञां विधत्ते, तथा सति तुल्यविषयतया निरवकाशया विशेषसंज्ञया धात्वन्तरसावकाशायाः कर्मसंज्ञाया बाधः स्यात, किन्तु यत्र स्पृहि रिच्छामात्रवाचितया फलावाचकत्वादकर्मकस्तत्र विषयतात्वेनोद्देश्यत्व भावेन वा विषयताभिधायिचतुर्थीसम्पत्तये तत्र संज्ञाविधीयते । यत्र विषयता स्वरूपफलावच्छिन्नाभिलाषवाचिस्पृहिः यत्र वा विषयतैव सम्बन्धत्वेनाभिधानीया तत्र कर्मणि द्वितीया शेषषष्ठी च प्रमाणम् । अत एव " स्पृहयन्ति गुणान् मनीषिणः परिवादन्तु परस्य दुर्जन " इति, " कुमार्य इवकान्तस्य त्रस्यन्ति स्पृहयन्ति च " ति प्रयोग उप पद्यत इत्याह ।

श्लाघह्नुङ्स्थाशपां कर्म राधे विप्रश्नगोचरः ।
उत्तमर्णोधारयते भजते सम्प्रदानताम् ॥ ३ ॥

उत्कर्षप्रकारक प्रतिपत्ते रनुकूलव्यापारः शब्दोवा श्लाघः, अदर्शनस्यानुकूलो व्यापारो ह्नुतः, प्रकाशस्यानुकूलोव्यापारः सम्मुखाव

स्थानादिः तिष्ठते, रपकर्षप्रकारकप्रतिपत्ते रनुकूलः शपे रर्थः । नर पतये श्लाघत इत्यत्रोत्कर्षप्रकारकप्रतिपत्तिस्वरूपफलान्वयिनि विशेष्ये नरपतिं स्तौतीतिव त्कर्मसंज्ञाप्रसक्तया तदपवादाय चतुर्थी विधीयते । जारायह्नुते बन्धकीत्यत्र जारंप्रच्छादयति इत्यादाविवा दर्शनस्वरूपाप्र- काश समवायितया जारादेः, शिशवे शपत इत्यत्र शिशुं निन्दतीत्यादौ विवापकृष्टज्ञानविशेष्यतया शिशोः, प्रसक्तं कर्मत्व मपवदन्ती सम्प्रदानसंज्ञा विधीयते । यत्रतु स्थेयत्वेन निर्णायकत्वेनवाश्रयणं तिङन्तस्य तिष्ठतेरर्थः तत्र न सम्प्रदानता । अतएव " संशय्यकर्णा दिषु तिष्ठतेय " इति भारविः । संशयानन्तरितस्य कर्णादौ निर्णा यकत्वेनाश्रयणस्य कर्ताय इति तदर्थः । यत्र च नोपालम्भः शपेरर्थः, किन्तु शपथः - शुद्ध्यशुद्धिविवेचकः पुत्रदारशिरः स्पर्शादिरर्थः, तत्रपुत्रेण शपतीत्येवप्रमाणम्, नतु पुत्रायेति । अतएव " आचम्यचाम्बुतृषितः करकोशपेयं भावानुरक्तललनासुरतैः शपेयम् । जीयेय येन कविना यमकैः परेण तस्मै वहेयमुदकं घटकर्परेण " इति घटकर्परः । वासुदेवमपराध्यति गर्गइत्यत्र दैवपर्यालोचनं राधेरर्थः, चतुर्थ्यास्तु समवेतत्वं, तथा च वासुदेवसमवेतं दैवं गर्गः पर्यालोचयतीति वा- क्यार्थः । राधिरीक्षते रप्युपलक्षणं, तेन कृष्णायेक्षते गर्ग इत्यत्र निरु- क्तैवगतिः ! मम पुत्रस्य कीदृशं शुभ मशुभंवेति विविच्यप्रश्नगोच रतातु वासुदेवपदेन न प्रतिपाद्यते, किन्तु व्यंजनैव । प्रश्नानन्तरितं शुभाशुभपर्यालोचनंवा राधेरर्थः । गर्गायशतं धारयतीत्यत्र ऋणत्व निरू- पित मधमर्णत्वं धारयते रर्थः, फलीभूतर्णत्वाश्रयतया शतस्य कर्मत्वं, उत्तमर्णत्वं चतुर्थ्यर्थः । तथा च गर्गवृत्त्युत्तमर्णत्व निरूपितशतवृत्त्यृण त्व प्रतियोगिकाधमर्णत्वाश्रय इत्यन्वयबोधः । उत्तमर्णत्वं स्वामित्व विशेषः । ऋणत्वाधमर्णत्वे स्वत्वस्वामित्ववदतिरिक्तावेव पदार्थौ वनु गतप्रतीतिव्यवहारयो रविशेषात् । स्वत्वाभाव ऋणत्वमिति चेदृणत्वा भावएव स्वत्वमित्यपिस्यात । यदिचोधारताख्य पापविशेषस्य साध

नं विनियोगएव ऋणत्वं ददा पापासाधनविनियोगएव स्वत्वमिति-स्यात् । अविनियोगकालेपि स्वव्यवहारो ऋणव्यवहारेण तुल्ययोग क्षेमः । शास्त्रमपि ऋणत्वे स्वत्वेच तुल्यम् । शास्त्रे ननुगतप्रवृत्ति निमित्तकर्णपदघटितत्वमिव तादृशस्वपदघटितत्वमपि सिद्धान्ततत्वे विस्त रतो व्यवस्थापितमिति नेहतन्यते ।

क्रुधद्रुहेर्ष्यासूयार्थ धातुभिः सव्यपेक्षया ।
चतुर्थ्या विषयीभावः समवायो ऽभिधीयते ॥ ४ ॥

क्रुधिकुपिरुषादयो धातवः केवल द्वेषगुणवाचका अकर्मकाः । शत्रवे क्रुध्यति कुप्यतीत्यादौ द्विष्टतालक्षणविषयता विशेषोर्थः । द्विषिस्तु द्विष्टतोपलक्षितं द्वेष मभिधत्त इति न क्रुधिपर्यायइति शत्रुंद्वेष्टीत्येव प्रमाणम् । द्रुहेर्द्विष्टाचरणमर्थः, शत्रवेद्रुह्यतीत्यत्र चतुर्थ्याद्वेषान्वयी समवायोर्थः, शत्रुसमवेत द्वेषविषयकाचारवा नित्यन्वयबोधः । पर क्रियागोचरो द्वेष ईर्ष्या । सपत्नीभ्य ईर्ष्यतीत्यत्र क्रियान्वयिसमवेतत्वं चतुर्थ्यर्थः । सपत्नी समवेतक्रियां न सहतइत्यन्वयबोधः । परसमवेत क्रियाया मीर्ष्यतिना फलविधया निर्दिष्टायां तद्विषये कर्मणि द्वितीयैव प्रमाणम् । भार्यामीर्ष्यति मैनामन्योद्राक्षीदित्यत्र भार्याविषयकमन्य समवेतदर्शनं न सहत इत्यन्वयः । परगुणेषु दोषत्वारोपणमसूया । वादिने सूयतीत्यादौ वादिसमवेतं ज्ञानं भ्रमत्वेनाख्यापयतीत्यर्थः ।

यत्तु प्रकाशकारचरणैः " भ्रातस्तावदहं शठेनविधिना निद्रा दरिद्री कृत " इत्यत्र विधिं प्रत्यसूया व्यज्यत इत्युक्तम् । तत्रेद मा कूतम् - विधेर्नैसर्गिकोगुणो निद्रादरिद्रीकरणं, तच्च शाठ्यहेतुकत्व स्वरूपेन दोषत्वेन कामिना स्वप्नसमागमविच्छेदविह्वले नारोपित मिति गुणे दोषारोपरूपासूयाभावो भिव्यज्यते । शत्रुमभिक्रुध्यति द्रुह्यति वेत्यादौ कर्मसंज्ञातु "क्रुधद्रुहो रुपसृष्टयोः कर्म "त्यनुशासन सिद्धा ।

प्रतिश्रवाश्रवौ याच्ञा पूर्वस्वीकार वाचिनौ ।
याचनान्वित कर्तृत्वं चतुर्थी तत्र भाषते ॥५॥

प्रतिशृणोते राशृणोतेश्च याचना पूर्वको देयत्वेना भ्युप गमोर्थः । यत्तु "संविदागूः प्रतिज्ञानं नियमाश्रव संश्रवाः । अंगीकाराभ्युपगम प्रतिश्रव समाधय" इति नामलिंगानुशासने आश्रव प्रतिश्रवावपि संश्रव पर्यायत्वेन पपाठ , त दर्थैकदेशाभिप्रायेण । द्विजाय गां प्रतिशृणोतीत्यादौ चतुर्थ्याः कर्तृत्वमर्थः, सचयाचनान्वयी, द्वितीयोपात्त कर्मत्वं याचनांगीकारयो रुभयोस्सम्बध्यते, तथाच द्विज कर्तृक गोकर्मक याचनापूर्वको देयत्वेना भ्युपगमो वाक्यार्थः । एव मनुशृणोतेः प्रतिशृणोतेश्च शंसनपूर्वकं प्रोत्साहनमर्थः । शंसनं कथनं, प्रोत्साहनं हर्षानुकूलो व्यापारः । होत्रे प्रतिशृणोत्य ध्वर्युरनुशृणोति वेत्यत्र चतुर्थ्याः शंसने हर्षे चान्विता वृत्तिरर्थः । तथाच होतृ वृत्ति शंसन पूर्वकस्य होतृ हर्षानुकूलस्य व्यापारस्य कर्ताध्वर्युरि-त्यन्वयबोधः ।

परिक्रयस्य करणे सम्प्रदानत्व मिष्यते ।
नियम्यकाले भृत्या यः स्वीकार स्सपरिक्रयः ॥६॥

भृतिर्वेतनादि, तद्दानपूर्वकोयः स्वत्वानुकूलो व्यापारःसक्रयः, सनियत कालावच्छेदेन एकत्र विद्यमानस्य स्वत्वस्य जनको यदि तदापरिक्रय इत्युच्यते । परिक्रयजन्यं स्वत्वं तत्रैव वस्तुनि मा समात्र मवस्थाय नश्यति, मासा नन्तरंतु स्वत्वांतर मुत्पद्यते । व्यवस्थावशा देकमेव वा स्वत्वं । य घरकालावच्छिन्न वस्तुविषयकं तदा तदा धर्मव्यवहारप्रयोजक मित्यपि लीलावतीप्रकाशे वर्धमानोपाध्यायै रुद्भावितम् । परिक्रयकरणंच भृति स्सम्प्रदानसंज्ञं विभाषया । शतेन शतायवा परिक्रीतो वृष इत्यत्र तृतीया चतुर्थ्योः करणत्वमर्थः, सच स्वत्वेऽन्वेति, शतस्य स्वत्व जनकदान व्यापारवत्तया स्वत्व करणत्वस्याबाधात । तथाच शतकरणक स्वत्वजनकः परिक्रय इत्यन्वय बोधः ।

परंतु भृतिदानजनित नियतकालक स्वत्वजनक परिग्रहः परिक्रय इत्युच्यते । तत्र भृतौ तादात्म्येन शतस्यान्वयः । संसर्ग तया लब्धकरणत्वस्यानुवादिका तृतीया चतुर्थी वा, ज्योतिष्टोमेन यजेतेत्यादिवदित्याहुः ।

ग्रामाय गच्छतीत्यत्र कर्मत्वमपि चतुर्थ्यर्थः, "गत्यर्थ कर्मणि द्वितीया चतुर्थ्यौ चेष्टाया मनध्वनी" त्यनुशासनात्। चेष्टायामिति ज्ञानार्थ कगमेर्व्युदासः। अनध्वनीत्यध्वने गच्छतीति प्रयोगवारणाय। तेन मनसा व्रजति हरि मित्येव प्रमाणं, नतु हरय इति । चेष्टापदं क्रियासा· मान्यपरं, ग्रामाय गच्छति रथ इति प्रयोगात् । अत्र चेष्टाभिन्न गत्यर्थे ऽध्वनि च चतुर्थीनिषेधमात्रे तात्पर्यम् , स्पन्दमात्रवाचिनि गमौ तज्जन्यफलवति सम्प्रदानचतुर्थ्यैव ग्रामाय गच्छतीति प्रयोगस्यो पपन्नतया पृथग्विधे रनवकाशादिति महाभाष्यकृतः।

इति पदवाक्यरत्नाकरे कारकचतुर्थीविवरणम् ॥

---

साहश्य मपकर्षो वा यतो मन्यति कर्मणि ।
अनादृते नञाबोध्य श्चतुर्थी तत इष्यते ॥१॥

नत्वातृणाय तृणं मा मन्य इत्यत्र सादृश्य मपकर्षो वा नञर्थः, "द्रौणि र्मर्यादया हीनो ब्राह्मणो नैष दुर्मति" रित्यादौ व्यस्तनञापि निकर्षबोधनात्। तृणपदसमभिव्याहृतया द्वितीयया चतुर्थ्या वानञर्थान्व यिप्रतियोगित्व मुच्यतेसाधुत्वमात्रार्थावा।तथाच तृणप्रतियोगिकेन सादृश्ये नापकर्षेणवावांजानातीति शाब्दोन्वयः।ततो ऽनादृतत्वमिति वैयंजनिको मन्यतेः कर्मण्यनादरबोधो नतु शाब्दः। यत्तु नानादरो व्यंजनया प्रती यते तत्र वृषलं न द्विजं मन्ये इत्यादौ न चतुर्थीसाधुः । इत्यतेव

वैयंजनिकबोध मपेक्ष्य साधुता पदानाम् । अत एव रूपं वस्त्र मित्यादौ वैयंजनिकप्रयोजनप्रतिपत्त्यभावे रूपपदस्य तद्वृत्त्यसाधुतया नेयार्थता नामदोषः । अत एव “ वदवदजितः स शत्रु नहतो जल्पं स्तव तवास्मी ” त्यादौ हर्षभयादौ द्योत्ये पुन रुक्तं साधु, नेतरथा । नचात्रशब्देन हर्षादिः प्रतीयते । सुन्दर सुन्दर वृथाते सौन्दर्यं, अर्जुन अर्जुन सात्विके सात्विके तव मांवै दिशां बलिं करोमि इत्यादौ आमन्त्रितस्य वाक्यादे द्विभावो ऽसूयाक्रोधादौ द्योत्ये साधु, नापरथा । भवतु वा तृणसदृशतदपकृष्टादौ तृणपदस्य लक्षणा, तस्य त्वत्पदार्थतादात्म्येनान्वयः । नञ्पद मनादृतवाचि । तृणवद् नादृतं त्वां मन्य इत्यन्वयबोधः । यदिच “ मन्यतेः कर्मणो यस्मा दनुक्तस्या पकृष्टता । नञ् बोध्या स्या द्वितीयाव च्चतुर्थी प्राणि वर्जिता ” दिति शाब्दिकस्मृतिविरोधा द्भयम् । अत्र मन्यते रिति श्यन् विकरणकधातुनिर्देशा त्तनादे र्व्युदासः, तेन त्वां तृणं मनुतइत्येव प्रमाणम्, नतु तृणायेति । अनुक्तस्य कर्मण इति तु नत्वंकीटो मम मतइत्यत्र कीटायेति प्रयोगनिवारणाय, तत्र कर्मणः कृत्प्रत्ययाभिहितत्वात् ।

अपरेतु अयुक्तैवापकृष्टतेति पठित्वा वृषलं न द्विजंमन्यइत्यादौ युक्तापकर्षवाचिनञो ऽनेन व्युदासइति व्याकुर्वते । नञ् पदोपा दानात् तृणादपकृष्टंत्वां मन्यइत्यादिव्युदासः । अत्र च चतुर्थीसादृश्य वचना नञ्पद विनिर्मुक्तापिप्रमाणम्, “ सदृशत्वं तृणादीनामनुक्ते मन्युकर्मणि । द्वितीयाव च्चतुर्थ्यापिबोध्यते बाधितं यदि ” इत्यापिशलि स्मरणात् । अतएव “ तृणायमत्वा रघुनन्दनस्तद्रक्षः प्रधानं प्रधना न्निरास्थ ” दिति भट्टिः । “ तृणाभ्याम्मन्यते कामक्रोधौयःपंचका रयन्नि ” ति श्रीहर्षः । तत्र भेदबोधनइव निकर्षसादृश्यादि बोधनेपि प्रति योग्यनुयोगिपदयो स्तुल्यवचनत्वं तन्त्रं, तेन तृणाययुवां मन्यइत्यादिको न प्रसंगः । त्वां ननाव मन्नं काकं सृगालं वा मन्य इत्यत्र चतुर्थी

निषेधाय प्राणिवर्जितादिति । प्राणिनस्तु “ नौ काकान्नशृगालानां प्राणित्वं पारिभाषिक ” मिति स्मृत्या परिभाषिताः, तेन त्वां शुने कीटाय वा मन्य इत्याद्युपपन्न मनुपपन्नं च न त्वामन्नाय मन्य इति ।

अन्येतु न त्वां तृणाय मन्य इत्यादौ तृणपदस्य तृणसदृशोर्थः, तस्य च त्वत्पदार्थे ऽभेदान्वयोपपादकतया कर्मत्ववादिका द्वितीया प्रसक्ता दण्डिनं पुरुषं जानातीतिवत्, तत्र मन्युकर्मविशेषणे सदृश लाक्षणिके पदे द्वितीयेव चतुर्थी अनुशिष्यते, मन्यते मुख्यकर्मणि तु न चतुर्थी, “ मन्यकर्मण्यनादरे विभाषा प्राणिष्वि ” त्यनुशासने नादर इत्य स्यानादरनिमित्तकसादृश्यप्रतियोगिवाचकपदार्थ इत्यर्थकस्य कर्मविशेषण त्वात्; नञ्पदस्य चानादरोर्थः, आदरो नामेष्टानिष्टसाधनत्वेन प्रति सन्धानं तदभेदश्च त्वत्कर्मकमननत्वावच्छेदेनान्वेतीति तस्यापि हितासाधनत्व मर्थतः पर्यवस्यतीत्याहुः ।

नमः स्वस्ति स्वधा स्वाहा ऽलं वषड्भि र्व्यपेक्षिता ।
चतुर्थी सम्प्रदानत्वविषयत्वादि शंसति ॥ २ ॥

पुष्पं शिवाय नम इत्यत्र दानकर्म नमःपदार्थः, चतुर्थीसंप्रदानत्वार्था । तथाच शिवसम्प्रदानकदानकर्म पुष्प मित्यन्वयबोधः । ब्राह्मणायगांनमइति वाक्यमपि प्रमाणमेव, परन्तु नेदं त्यागवाक्यं धर्म्यं, “नामगोत्रे समुच्चार्य सम्यक् श्रद्धान्वितोवदेत् । संकीर्त्य देशकालादि तुभ्यं सम्प्रददे इती ” ति दानवाक्यस्य प्रतिनियमनात् । भवतु वा मन्त्र करणकत्यागकर्मनमःपदार्थः, मन्त्रस्य करणत्वंतु त्यागजन्यं परमापूर्वं प्रधानापूर्वं वा प्रतिकरणत्व मंगापूर्वद्वाराजनकत्वम् । श्रूयतेहि मन्त्राणां करणत्वार्थिका तृतीया । तथा च मन्त्रकरणकोपकारजनक त्यागकर्मणि नमःपदार्थे त्यागेन्वयि तदुद्देश्यकत्वं चतुर्थ्यर्थः । तथाच शिवोद्देश्यकस्य मन्त्रकरणकस्य त्यागस्य कर्म पुष्प मित्यन्वयबोधः । भवति च शिवाय नम इति वाक्यं मन्त्रः, चतुर्थ्यन्तनमोन्तवाक्यस्य

मन्त्रात्वपरिभाषणात् । तादृशमन्त्रस्तु दैवतोद्देश्यकत्यागस्यैवोपकारको नतु ब्राह्मणसम्प्रदानकस्येति ब्राह्मणाय गौ र्नम इति वाक्यं न प्रमाणम् । ब्राह्मणस्यापि देवतात्वविवक्षायान्तु ब्राह्मणाय नमः इति वाक्यं दानांगब्राह्मणपूजादौ दृश्यते । मन्त्रवाक्ये शिवादीनां दैवतात्वं पुन रर्थगम्यं, नतु श्रौतम् । ऐन्द्रं दधीत्यादितद्धितेन हि इन्द्र शब्दस्य स्वरूपपरतायां चतुर्थ्यन्तकरणकत्यागकर्माभिधीयते, तदेक देशे चतुर्थ्यन्ते तादात्म्येनेन्द्रस्यान्वयः । यदि पुन रिन्द्रो नाम स चेतना देवता प्रामाणिकी, तदेन्द्रपदार्थ इन्द्रः प्रतिपाद्यप्रतिपादक भावात्मकेनैव संसर्गेण चतुर्थ्यन्ते पदे ऽन्वेति । भवतु वेन्द्रप्रति पादक मिन्द्रपदार्थः, तादात्म्य मेव चतुर्थ्यन्ते पदे भासते । अत एव शक्राय स्वाहेत्यादिप्रक्षेपवाक्य मश्रौतम् । "यदग्नये च प्रजा पतये च जुहोती" त्यादौ तु अग्निमृत्युद्देश्यताक एव होमः श्रौतः, तत्र चतुर्थ्यन्ताग्निपदकरणकत्वं न्यायगम्यमिति तद्धितापेक्षया दुर्बला चतुर्थी, साक्षा द्देवताश्रुत्यभावात् । यदाहुः - 'तद्धितेन चतुर्थ्या वा मन्त्रलिंगेन वा पुनः । देवतात्वश्रुति स्तत्र दुर्बलन्तु पर म्पर" मिति । तथाच शिवाय नम इति वाक्येपि नमःपदार्थैकदेश त्यागान्वित मुद्देश्यत्वाभिधं सम्प्रदानत्व मेव चतुर्थी प्रतिपादयति । उद्देश्यत्वन्तु तन्निष्ठा प्रीति रेव । तेन शिवप्रीतिजनकत्यागकर्म वाक्यार्थः । परमात्मनि शिवे प्रीते स्तज्जनकत्वस्य बाधितत्वे प्रीत्यु द्देश्यतैव चतुर्थ्यर्थः । तत्रालम्बनत्वेन शिवस्यान्वयः । शिवः प्री- यतामिति बाधितविषयकेच्छासम्भवात् । तादृशेच्छाप्रयोज्यत्वं त्यागे प्रतीयते, फलेच्छाया उपायेच्छाप्रयोजकत्वात् । एवं शिवाय नम इत्यत्र नतिरपि नमसोर्थः, तदन्वयिविषयत्वं च चतुर्थ्यर्थः, शिवविष यिणी नतिरित्यन्वयः । प्रजाभ्यः स्वस्तीत्यत्र सम्बन्ध एव चतुर्थ्यर्थः, प्रजा सम्बन्धिकुशलमित्यन्वयबोधः । आशंसायांतु प्रजाभ्यः प्रजानां वास्वस्ति स्यादित्युभयमपि प्रमाणम्, "चतुर्थीचाशिष्यायुष्य मद्र भद्रकुशलसुखार्थ

हिते " रित्यनुशासने पर्यायेषु मद्रभद्रयो ग्रहणादायुष्यकुशलादीना मपि पर्यायग्रहणावगमात् । अतएव " आशास्यैर्हितकुशलाद्यर्थैं योगे चतुर्थीवे " ति भागुरिः । अनुशासने च आयुष्यं चिरञ्जीवितं, मद्रं भद्रं च मंगलं, साक्षात्सुखसाधनं पुत्रजन्मादिकुशलं, अनामयं दुःख साधनाभावः, सुखमात्मविशेषगुणः स्वतः कामनीयः, अर्थः प्रयोजनं इच्छाविषयः, हितं कालान्तरभावीष्टसाधनं यागभैषज्यादि । आशिषीति मार्कण्डेयस्यायुष्यमस्तीत्यादौ चतुर्थ्युदासाय । अनाशिष्यपि स्वस्ति-योगे चतुर्थीप्राप्तये षष्ठीनिषेधायच " नमः स्वस्ति स्वाहा स्वधालंव षड् योगाच्चे " ति सूत्रेकुशलपर्यायस्य स्वस्तेः पृथग्ग्रहणम् । स्वाहा पदस्यापि होमकर्माथः, तत्र होमान्वय्युद्देश्यत्वं चतुर्थ्यर्थः । हविरग्नये स्वाहेत्यत्राग्न्युद्देश्यक होमकर्महवि रित्यन्वय बोधः । वह्नि संयोगजनक प्रक्षेपोत्तरांगक स्त्यागो जुहोतेर्मुख्योर्थः । ब्राह्मणपाण्या द्याधिकरणक प्रक्षेपांगकत्यागे होमादौ तु जुहोतिर्गौणः । तत्राग्नये कव्यवाहनायस्वाहा इत्यत्र स्वाहापदमपि । तथा पितृभ्यः स्वधेत्यत्र पितृद्देश्यकस्त्यागः स्वधापदार्थः, तत्र पितृत्वं त्रैवर्णिक सपिण्डितत्वम् । पाराशरस्य पिता न त्रैवर्णिक सपिण्डितः किन्तु देवतामात्रमिति तत्र न स्वधाशब्दप्रयोगः । त्रैवर्णि-कनासपिण्डितस्य पाराशरेण क्रियमाणे प्रत्याब्दिकादौ न स्वधा शब्दप्रयोगः, तस्य स्वधाशब्द प्रयोगनिषेधात् । प्रत्यवायावहस्तेन पाराशरेण प्रयुक्तस्तथाविधशब्दः शाब्दबुद्धिजनयत्येव बाधकाभा-वात । भवतु वा स्वधाकरणक त्यागकर्मैव स्वधापदार्थः, शूद्रकर्तृ-कत्यागस्तु न स्वधाकरणकः । अलमिति पर्याप्त्यर्थकानां ग्रहणम् । पर्याप्तिरपिस्वाम्यं, निग्राहकत्वं च । अलं जगते प्रभुः समर्थः शक्तो भगवानित्यादौ जगन्निरूपितस्य स्वाम्यस्य निग्राहकत्वस्यवाधिकरणं भगवानित्यन्वयबोधः । प्रभ्वादि योगेषष्ठ्यपिसाधुः, " प्रभुर्बुभूषर्भुवन

न्वयस्य " इति माघः । देवतासम्प्रदानकदानकर्म वषट्पदार्थः । वषडिन्द्रायेत्यादा विन्द्रोद्देश्यकस्य देवतासम्प्रदानकस्य दानस्य कर्म न्यन्वयः । उपलक्षणमिदं , सनकादिमनुष्येभ्यो हन्त इत्यत्र हन्तयोगे चतुर्थीदर्शनात् । मनुष्येभ्योदानं तत्कर्मवा हन्तपदार्थः ।

ननु नमस्यति नमस्करोतिवा देवानित्यत्र नमस्यते र्नमस्करो तेश्च नत्यनुकूलोव्यापारोर्थः, " नमोवरिवश्चित्रङः क्यजि " ति सूत्रेण क्यज् विधानात् । " शब्दवैरकलहा भ्रकण्वमेघेभ्यः करण " इति सूत्रस्यानुवृत्तेः । तथा च शब्दायतिवन्नमस्यति रकर्मकएवस्यात् , धात्वर्थान्तर्भूतकर्मकत्वात् । एवं नमस्करोतिरपि । यदि च नमस्यति नमस्करोतिधातू नतावेवरूढौ, नतु यौगिकौ, व्याकरणव्युत्पादनं पुन रुणादिव्युत्पादनवत् बालोपलालनं, तथा च देवान्नमतीतिव देवान्नम स्करोतीत्यपि विषयत्वस्वरूप गौणकर्मत्वार्थकद्वितीयायोगा दुपपद्यत इत्युच्यते, यदि सकर्मकलक्षणोक्तरीत्या मुण्डयते रिव नमस्यतेरपि सकर्मकत्व मित्यभिधीयते, तदा स्वयम्भुवे नमस्कृत्येत्यादिप्रयोगोनुप पन्नः, " उपपदविभक्तेः कारकविभक्ति र्बलीयसी " ति न्यायात् । उच्यते -

अध्याहृततुमन्तस्य धातोः कर्मानुशंसति ।
फलेभ्यो गच्छतीत्यादौ चतुर्थी व्याक्रियोदिता ॥ ३ ॥

विद्यते तावत् " क्रियार्थोपपदस्य च कर्मणि स्थानिन " इति क्रियान्तरगुणीभूतक्रियावाचकधातुप्रकृतिकस्य तुमुनः स्थानिनो नित्य मप्रयुज्यमानस्य कर्मणि चतुर्थी स्यात् इत्यर्थिका व्याक्रिया । फलेभ्यो गच्छतीत्यत्र आहर्तु मित्यध्याहृतम् , तत्कर्माभिधायिनी चतुर्थी , तथा च फलकर्मकाहरणार्थकं गमनं वाक्यार्थः । एवं स्वयम्भुवे नमस्कृत्येत्यादेरपि प्रीणयितु मित्यध्याहारेण स्वयम्भुवं प्रीणयितुं नम स्कृत्येत्यन्वयबोधः ।

उपकारकतानाम तादर्थ्यं तस्य भूयसी ।
विधा तादर्थ्यविहितचतुर्थ्या प्रतिपाद्यते ॥४॥

तादर्थ्ये अनुशिष्टा चतुर्थी, तादर्थ्यं चोपकारकत्वं, सोर्थो यस्येति बहुव्रीहिः अनन्तरो भावप्रत्ययो ऽर्थार्थवतोः सम्बन्ध मभिधत्ते, "कृत्तद्धितसमासेभ्यः सम्बन्धाभिधानं भावप्रत्ययेने" ति हरेरनु शासनात् । अर्थार्थवतो श्चोपकार्योपकारकभाव एव सम्बन्धः । उपकारकताच बहुविधा । क्वचित् कार्यकारणभावः, पटाय तन्तवो घटाय दण्ड इत्यादौ । क्वचि त्तन्निष्ठोपकारजनकत्वं, यथा ऽश्वाय घासो ब्राह्मणाय दधीत्यादौ । क्वचि त्तदपकारकत्वं, यथा मशकेभ्यो धूमो हरिणेभ्यो वागुरेत्यादौ । तादर्थ्यप्रकाराः सर्वे कारणत्वोप कारकत्वापकारकत्वानि यथा यथं चतुर्थ्यर्थाः ।

" तु मर्था च्चावबचना " दिति सूत्रेण साधिता ।
चतुर्थी तुल्यकर्तृत्व मुद्देश्यत्वं च शंसति ॥५॥

" तु मर्थाच्च भाववचना " दिति सूत्रेणविहिता चतुर्थी तुमर्था वभिधत्ते । तुमर्थस्तु तुल्यकर्तृकत्वं तदुद्देश्यत्वंच । पक्तुं गच्छतीत्यत्र पाक तुल्यकर्तृका पाकोद्देश्यकागमनक्रिया वाक्यार्थः। शाब्दिकास्तु "भाववचना श्चे"ति सूत्रेणभावे विहिताघञादयः क्रियार्थायां क्रियायां विधीयन्ते, ततश्च तादर्थ्यस्य घञाप्राप्तत्वात् प्रातिपदिकार्थमात्रे प्रथमाप्रसक्ता, तदपवादाय " तु मर्थाच्च भाववचनादि " त्यनेन चतुर्थ्यनुशिष्यते । एतेन भावघञन्तात् पाकादिशब्दा त्तादर्थ्यचतुर्थ्यापाकाय गच्छतीत्यादि प्रयोगोपपत्ता विद न्तुमर्थादित्यनुशासन मनर्थकमिति न समर्थम् । नन्वेवमपि भाववचनानां तादर्थ्यार्थकत्वविधायकमनुशासनमेव व्यर्थं, भावघञन्तात् तादर्थ्यचतुर्थ्यैव पाकायजजतीत्यादि प्रयोगोपपत्तेरिति चेन्न ;- क्रियायाः क्रियान्तरतादर्थ्यविवक्षायां विशेषविहितेन तुमुना

यज्ञोपवादात् पाकायेत्यस्यानुपपत्त्या यज्ञोविशेषविध्यन्तरावश्यकत्वा दित्याहुः ।

चतुर्थ्यर्थो ज्ञापकत्व मुत्पातत्वोपलक्षिते ।
गुणीभूतं भाति यथा वातायकपिलातडित् ॥६॥

वातायकपिलातडिदित्यत्र वस्तुत उत्पातभूतायां कपिलायां तडि ति वातविशेषितं ज्ञापकत्वं चतुर्थ्याप्रतिपाद्यते । उत्पातास्तु ज्योतिः संहिताया मुपलक्षिता दिव्यभौमान्तरिक्षा बहुविधाः । उत्पातत्वमपि वाक्यार्थबुद्धौ विषयइति पुनरप्रमाणिकम्, धातुयोगे कारकविभक्ती नामिव उत्पातवाचिपदयोगे ज्ञापकत्वार्थासाधुरिति सूचयितु मुत्पातेन ज्ञापितेचेत्यनुशासने उत्पातग्रहणात् ।

इति पदवाक्यरत्नाकरे चतुर्थी विवरणम् ।

---

ङसिभ्यां भ्यस इत्येषा विभक्तिः पंचमी तथा ।
अपायत्वं ध्रुवत्वंचे त्यपादानत्वमुच्यते ॥ १ ॥

"ङसिभ्यां भ्यसि" ति पंचमी । तत्र ङकारोनुबन्धः । सरोः पत्रं पतति इत्यत्रापादानत्वं पंचम्यर्थः । तच्च ध्रुवत्वे सति त त्क्रियाजन्यविभागाश्रयत्वं, "ध्रुवमपाये ऽपादान" मित्यनुशासनात् । ध्रुवत्वं तत्क्रियानाविष्टत्वम् । तथा च तत्क्रियानधिकरणत्वेसति त त्क्रियाजन्यविभागाश्रयत्वम् । अत एव न पत्रस्य स्वनिष्ठाक्रियापादानत्वं, नवा कुड्यात् पततो ऽश्वात् पतति इत्यादौ पतनान्तरवत्यश्वे तदितर कर्तृक पतनापादानत्वहानिः ।

यत्तु – हरिणा "अपाये यदुदासीनं चलं वा यदि वा चलम् । ध्रुवमेवा तदावेशा त्तदपादान मुच्यते ।

पततो ध्रुवएवाश्वो यस्मादश्वात्पतत्यसौ । तस्याप्यश्वस्य पतने कुडयादि ध्रुवमुच्यते । उभावप्य ध्रुवौ मेषौ यद्यप्युभयकर्मजे । विभागेप्रविभक्ते तु क्रिये तत्र विवक्षिते । मेषान्तरक्रियापेक्षमवधित्वं पृथक् पृथक् । मेषयोः स्वक्रियापेक्षं कर्तृत्वं च पृथक् पृथक् " इत्युक्तम् । तत्रापाये विभागेसतीतिशेषः । उदासीनं - विभागजनकक्रिया नधिकरणम् । अतदावेशात्- विभागजनकक्रिया नधिकरणत्वात । ननु परस्परान्मेषावपसरतइत्यादा वुभयकर्मजन्ये विभागे विभागजनकक्रियानधिकरणत्वं न कस्यापि मेषस्येत्याशंकते- " उभावपी " त्यादिना । न विभागजनकत्वेन क्रियाप्रकृते प्रवेशनीया, किन्तु ताद्रूप्येणेति,- ना नुपपत्तिरिति समाधत्ते " प्रविभक्ते " इत्यादिना । तु स्तथापि पर्यायः । नन्वपादनसंज्ञावरुद्धे कथं कर्तृसंज्ञामेषयोः, आकडारादेकसंज्ञा प्रतिज्ञानादित्याशंक्य, भिन्न भिन्न क्रियानिरूपितकारकान्तर समावेशो न विरुद्ध इत्यभिप्रायेनाह " मेषान्तरे " त्यादि । विवरणवशात कथित एवार्थे पर्यवसानम् ।

तत्र क्रियादे रन्यलभ्यत्वा द्विभागजनकत्वं भेद प्रतियोगितावच्छेदकत्वं च पंचम्यर्थः । तथा च तरोः पत्रं पततीत्यत्र तरुसमवेतविभागजनिका तरुनिष्ठभेदप्रतियोगितावच्छेदिका च पतन क्रिया वाक्यार्थः । पंचम्यर्थे विभागे तदर्थैकदेशे भेदे च तरुत्वादिना एकएव प्रकृत्यर्थो यौगपद्येनान्वेति । तेन पत्रान्तरनिष्ठान्योन्याभाव प्रतियोगितावच्छेदिका मेतत्पत्रस्य तर्वादिविभागजनिका मेतत्क्रिया मादाय पत्रात्पत्रं पततीति न प्रयोगः ।

यत्तु विभाग एव पंचम्यर्थः; नचैवं पत्रात् पत्रं पततीति प्रयोगप्रसंगः, पत्रस्य परया कर्तृसंज्ञया ऽपादानसंज्ञायाबाधात, संज्ञाया एव विभक्ति निष्पादकत्वादिति । तत्र एवमपि तरोः पत्रं पतति न पत्रादित्यत्र पत्रसमवेतविभागजनकत्वाभावबोधने बाधप्रसंगः ।

अत्र हि न गुणात्पततीतिव द्विभागे न प्रकृत्यर्थसमवेतत्वस्य नवापतने तत्समवेत विभागजनकत्वस्याभावः प्रत्येतुंशक्यते , अयोग्यत्वात् ।

ननु सिद्धान्तेपि पत्रसमवेतक्रियायां पत्रनिष्ठविभागजनकत्व पत्रान्तरनिष्ठान्योन्याभाव प्रतियोगितावच्छेदकत्वोभयसत्वात् निषेधानुपपत्तिः, नच तत्तत्पत्रापादानकत्व समुदायो निषिध्यतइति पूर्वोक्तप्रायं साम्प्रतं, युगसहस्रेणापि गृहीतुमशक्यत्वात; नच स्ववृत्तिविभागजनकत्व स्ववृत्ति भेदप्रतियोगितावच्छेदकत्वोभय संसर्गावच्छिन्नप्रतियोगिताकः पत्रसामान्याभाव एव क्रियायां भासते, पंचमीतु प्रतियोगिता संसर्गानुवादिका इत्यपि युज्यते, वृत्त्यनियामकसंसर्गे प्रतियोगितावच्छेदकत्वस्याभावात, भावेवाविभागप्रतियोगिकत्व विशिष्टजनकत्वस्वरूप साक्षात्संसर्गावच्छिन्न प्रतियोगिताकाभावस्य पत्रापादानकक्रियायामपि निराबाधतया पत्रात पततिपतंगे नपत्रात् पततीति प्रयोगप्रसंगात; नच परम्परामुद्रया तादृशसंसर्गावच्छिन्न प्रतियोगिताकाभावएव पंचम्यन्त पत्रपदसमभिव्याहृतनञा बोध्यते, परम्पराहि विभागनिरूपकत्व जनकत्वान्येव परस्परविशृंखलितानि संसर्गः, तत्र पत्रत्वा वच्छिन्नप्रतियोगिता निरूपिता विभाग संसर्गता, तया निरूपिता निरूपकत्वे, तया जनकत्वे संसर्गता, तन्निरूपिता चा नुयोगिता नञर्थाभावे भासते, विभागीयत्व विशिष्टजनकता स्वरूपसाक्षा त्संसर्गे विशिष्टधर्मा वच्छिन्ना संसर्गता जनकता प्रतियोगितानुयोगिताभ्यां निरूप्यत इति विवेकइति वाच्यं, परंपरा संसर्गतासु प्रथमा प्रतियोगितया चरमा पुन रनुयोगितया प्रथमैवा नुयोगितया चरमैव प्रतियोगितयानिरूप्यत इत्यत्र विनिगमकाभावात्; दृश्यन्ते च प्राचां निबन्धेषु प्रतियोगि विश्रान्ता स्संसर्ग रचनाः; नचोभय प्रतियोगितानुयोगिताभ्यां प्रथमचरमसंसर्गतयो निरूपणेपि विशिष्ट संसर्गतातो विवेक उपपद्यतइति वाच्यं, विलोमानुलोम परम्परासंसर्गावच्छिन्न प्रतियोगिताकाभावयो रविशेषप्रसंगात; विस्तरतोव्युत्पा

दितं च सिद्धान्तत्वे परम्परायाः संसर्गत्वस्यैव नितरां प्रतियोगिताव च्छेदकत्वस्य निराकरणमिति चेत्; उच्यते -

निष्पुष्पवन्तमितिव दुभयप्रतियोगिकः ।
पंचम्यर्थस्याप्यभावो विविधाः प्रतियोगिताः ॥ २ ॥

पुष्पवन्तौनेत्यादौ द्वित्वोपस्थापकस्य द्विवचनस्य सत्त्वेपि निष्पुष्पवन्तमित्यव्ययीभावे सूर्याचन्द्रमसो रत्यन्ताभावो न्यूनवृत्तिभ्यामपि सूर्यत्वचन्द्रत्वाभ्या मवच्छिन्नव्यासक्तप्रतियोगिताकः प्रतीयत इति न पत्रा दित्यादौ विभागजनकत्वभेदप्रतियोगितावच्छेदकत्वपर्याप्तप्रतियोगिताको प्यभावोभासत इत्यभ्युपेयम्। यदिच पुष्पवन्तपदादेः सूर्यचन्द्रोभयाद्यर्थः, तदाभवतु पंचम्या अपि निरुक्तोभयं तथा । साचोभयत्वावच्छिन्ना प्रतियोगिताजनकतात्वनिष्ठया ऽवच्छेदकतात्वनिष्ठया चावच्छेदकतया निरूप्यते । उभयत्वनिष्ठावच्छेदकतैववा सामानाधिकरण्येन जनकतात्वा वच्छेदकतात्वाभ्या मवच्छिद्यते । जनकतात्वनिष्ठावच्छेदकता निरू पकत्ववृत्त्या, साच विभागवृत्त्या, अवच्छेदकतात्व निष्ठातु प्रतियोगि तावृत्त्या , साच भेदनिष्ठया ऽ वच्छेदकतया निरूप्यते। स्रोतो द्वयमुखभूतन्तु भेदविभागयो रवच्छेदकताद्वय मेकयैव पत्रत्वावच्छि न्नया वच्छेदकतया निरूपितम् । एतमेवाभावं, यत्र पत्रे विभा गजनकत्वं तत्र भेदप्रतियोगितावच्छेदकत्वं क्रियायां नास्तीति वाक्येन प्रामाणिका व्यवहरन्ति । नह्यस्मा द्वाक्या दनुगतार्था विशिष्ट बुद्धि र्न जायत इत्यानुभाविकम्। एतादृशाभावावगाहिनः पत्रत्वा वच्छिन्नैकप्रकारतानिरूपितविभागभेदोभयविशेष्यताकस्य प्रकारता द्वयनिरूपितैकविशेष्यताकस्य संशयादे रिव विशेष्यता द्वयनिरूपितैक प्रकारताकस्यापि बोधस्याभ्युपेयत्वात् । अत एव संश- याव्यवहितोत्तरं प्रत्यक्षमिति वाक्येन मानान्तरेण वा यस्मा त्संशया दव्यवहितं तस्मा दुत्तरं प्रत्यक्षं प्रत्याय्यते, संशयत्वावच्छिन्नप्रकार

तया ऽव्यवधानोत्तरविषयतयो स्ताभ्यां च प्रत्यक्षविशेष्यताया निरूपणे फलत एकतमसंशयाव्यवहितपूर्वस्य चिरातीतसंशयानन्तरस्य प्रत्यक्षस्यानवगाहनात् । येप्यव्यवधानोत्तरत्वाभ्यां संसर्गाभ्यां संशयवत्प्रत्यक्षमेव प्रकृतवाक्यादिना प्रतिपाद्यत इति गौडा व्यपादिशन्ति, ते किल संसर्गताद्वयनिरूपिता पूर्वप्रकारताभ्युपगमेन किमपि फलमुपलभन्त इति त एव जानन्ति । संशयीयं नाव्यवधान मव्यवधानघटकाश्च न परस्परसंसृष्टा इत्यादि विपरीतदर्शने तादृशबुद्ध्यनुदयेना व्यवधानघटकपदार्थोपस्थित्यपेक्षाया वा व्यवधानादौ विशेष्यत्वाभ्युपगमावश्यकत्वे संसर्गत्वे प्रमाणाभावः पर मधिकः । एव मेव धूमत्वादिसामान्यधर्म मन्तर्भाव्यवह्न्यादेः कारणत्वमपि सुग्रहम् । तद्धूमाव्यवहितपूर्वक्षणावच्छेदेन तद्धूमाधिकरणे विद्यमानस्याभावस्य प्रतियोगितासामान्याभावो वह्नौ धूमकारणता । सचैक एव, ननु धूमव्यक्तिघटितकूटात्मकः, युगसहस्रेणापि दुर्ग्रहत्वात् । सम्भवति चैकयैव धूमत्वावाच्छिन्ना वच्छेदकतया निरूपित मव्यवहितपूर्वक्षणावच्छिन्नत्वे विकरणत्वे चावच्छेदकताद्वयं, ताभ्यां निरूपितं विद्यमानत्वे, तेन चाभावे एकैक मवच्छेदकत्वं, तन्निरूपिता प्रतियोगितात्वावच्छिन्ना प्रतियोगितेति तन्निरूपकोनुगतः सामान्याभावः । तद्बुद्धिं प्रति च धूमत्वावच्छिन्नप्रकारतानिरूपिताव्यवहितपूर्वक्षणावच्छिन्नत्वा धिकरणवृत्तिविशेष्यताद्वयनिरूपित विद्यमानत्वाद्येकविषयताको व्यभिचारग्रह एव विरोधी । ननु धूमान्तराव्यवहितप्राक्क्षणावच्छेदेन धूमान्तराधिकरणविद्यमानवह्न्यभावावगाहीत्यधिकं बौद्धाधिकारविवरणे विवृत मासीत ।

नन्वेवमपि वृक्षाद्वेपते कंपत इत्यादि प्रयोगो दुर्वारः, आसनाच्चलित इत्यादेरिव तस्येष्टत्वेपि तरोस्त्यजतीति स्यादिति चेत् ?

त्रतेत्यजिजहीत्यादि विभागफलिकां क्रियाम् ।
उक्तार्थाना मप्रयोगा न्नचापादानपंचमी ॥३॥

त्यजत्यादिना विभागजनक क्रियावाचिना पंचम्यर्थस्य क्रोडीकृतत्वा दुक्तार्थाना मप्रयोग इति तर्वादिशब्दा न्न पंचमी, किन्तु विभागान्विताधेयतार्थिका द्वितीयैव । परया कर्मसंज्ञया ऽपादानं बाध्यत इति वैयाकरणाः ।

नन्वेव मपसरत्यादे र्विभागफलकक्रियावाचितया सभातोपसरतीत्यादौ पंचम्यनुपपत्तिः, नहि स्पन्दत्यपसरत्यो रेकार्थकत्वम्, अनुभवविरोधादिति चेदुच्यते -

येदेशान्तरसंयोगफलक स्पन्दवाचिनः ।
अकर्मका निरेत्याद्याः पंचमी तान् व्यपेक्षते ॥४॥

निर्गम्यपसरत्यादि धातु र्बहिरादिसंयोगफलकक्रियावाची धात्वर्थान्तर्भूत कर्मकत्वा दकर्मकः, तेन विभागस्य फलविधयानुपादानात् पूर्वदेशस्यापादानत्वं निराबाध मित्यनभिहितविभागाभिधानाय गृहा न्निर्गच्छते सदसोपसरतीत्यादौ निरेत्यादि पंचम्यापेक्षते । एव मूर्ध्वसंयोगफलकक्रियावाचिनः उद्धरते योगेपि स्थालयाः पुलाक मुद्धरतीत्यादौ पंचम्यवसेया । कुतो भवान् प्रतिष्ठानात्, घना द्विद्योतते विधु रित्यादौ कुत इति प्रश्ने प्रतिष्ठानादित्युत्तरे चागत इति, घना द्विद्योतते विधु रित्यत्र निस्सृत्येत्यध्याहृत्य पंचमी चोपपादनीया ।

तरो र्विभजते पत्र मस्थ्नो विभजते त्वचम् ।
इत्यादावत्रधित्वार्थो ङसि धांतु मपेक्षते ॥५॥

विभजि र्द्विधा - केवलविभागवाची फलावाचकत्वा दकर्मकः, विभागजनकविभागव्यधिकरण विदलनादिक्रियावाची सकर्मकः ।

तत्रोभयत्र पंचम्या विभागान्वित मवधित्व मवधिमत्त्वं वार्थः । तच्च स्वरूपसम्बन्धो तिरिक्तो वा पदार्थ इत्यन्य देतत् । तथाच तरोः पत्रं विभजत इत्यत्र तर्वव्वधिकविभागाश्रयत्वं पत्रे, अस्थ्नो मांसं विभजते कौणप इत्यत्रास्थ्यवधिकमांससमवेत विभागानुकूलोत्कर्तनादिक्रियासमवायित्वं कौणपे वाक्यार्थः । "ध्रुव मपाये ऽपादान" मिति सूत्र मपाये विभागे ध्रुव मवधिभूत मपादानसंज्ञमिति व्याख्येयं; योगविभागादिति वाक्यपदीये हरिचरणः ।

पापा द्विरमतीत्यादौ विषयत्वाभिधायिनी ।
व्याघ्रा द्विभेतीत्यादौ तु हेतुता माह पंचमी ॥६॥

पापा द्विरमति जुगुप्सति धर्मात प्रमाद्यति इत्यत्र विरमे र्निवृत्तिः, गुपे र्गर्हानाम द्वेषविशेषः, प्रमाद्यते रनुद्बुद्धसंस्कारोर्थः, पंचम्यर्थो विषयत्वं, तथाच पापविषयकनिवृत्तिमानित्यादि वाक्यार्थबोधः । परेतु करणानन्तर मकरणं विरमतेः, गर्हाप्रयुक्त प्रवृत्त्यभावो गुपेः, कर्तव्यतास्मरणाभाव प्रयुक्तप्रवृत्त्यभावः प्रमाद्यतेरर्थः, पंचम्यर्थविषयत्वं च व्युत्पत्तिवैचित्र्यात् करणगर्हयो रभावप्रतियोगिष्वन्वेति । तेन पापविषयक करणान्तरितस्तदभावः, पापविषयकगर्हाप्रयुक्तः पापविषयकप्रवृत्त्यभावः, धर्मविषयकर्तव्यता स्मरणाभाव प्रयुक्तो धर्मविषयकप्रवृत्त्यभावश्च वाक्यार्थइत्याहुः ।

चोराद्बिभेति त्रायत इत्यादौ अनिष्टस्यभावित्वेन चिन्तनंभयं, अनिष्टानुत्पत्त्यनुकूलो व्यापारस्त्राणम् । पंचम्यर्थो हेतुता हेतुमत्तावा निष्टेन्वेति । तथा च चोरहेतुक मनिष्टम्भावित्वेन चिन्तयति चौरहेतुकानिष्टानुत्पत्त्यनुकूल व्यापारवानिति बोधः ।

यत्रच भयापादानस्यापि न हेतुत्वविवक्षा, तत्र सम्बन्धसामान्यार्थिका शेषषष्ठ्येवप्रमाणम् । अत एव "कस्यबिभ्यतिदेवाश्च जातरोषस्यसंयुगे" इति रामायणम् । कस्य संयुगइति सम्बन्धइति प्रा

श्चः ; तच्चिन्त्यं, नरकाद्बिभेति नरकात्त्रायत इत्यादौ नरकजन्यानिष्टान्तराभावात् ।

वस्तुतोभयत्वं द्वेषत्वावान्तरजातिः, सैवाबिभेतेः प्रवृत्तिनिमित्तम्। फलावाचकत्वादेवचासौ यातिवदकर्मकः । तत्र दुःखगोचरे भये स्वस्मिन् भावित्व प्रतिसन्धानमेवकारणम् । तेन रागान्धानांनास्तिकानान्नरकात् वक्ष्यमाणानां यागश्रमान्मुमुक्षूणां कुतोपि क्लेशाद्वानभयम् । उपायविषयेभये च भयापादनसाधनत्व मासन्नत्वं च ज्ञायमानं जनकम् । चोरेभ्यो हि भयोत्पत्त्यासन्न तया प्रतिसंहितेभ्य एव भयं । आसत्तिप्रकर्षाच्च भयप्रकर्षः । आसत्तिरपि कालिकीदैशिकी वा यथानुभव मूहनीया । एवं च विषय विषयिभावलक्षणा हेतुतैव पंचम्यर्थः । तथा च चोराद्बिभेतीत्यत्र चोरगोचरभयवानिति वाक्यार्थः । त्राणमपि भयाभावानुकूलो व्यापारः । तस्य च भयाभावरूप धात्वर्थतावच्छेदक फलवान् त्रातव्यः कर्म । भयाभावश्च भयकारणविघटनद्वारा त्रातृव्यापारप्रयोज्यः । "स्वल्पमप्यस्य धर्मस्य त्रायते महतोभयात्" इत्यत्रापि भयहेतुकानिष्टानुत्पत्तेः प्रयोजको व्यापारो न प्रतीयते, परन्तु भाविनोभयादपि दुःखविशेषसाधना द्भयान्तरसम्भवा द्भयगोचरभयाभावस्यैव । अत एव 'द्वितीयाद्भयं भवती'ति श्रुत्यास्वस्मान्नभयमिति परिसंख्यायते, द्वेषविषयस्वाभाव्येन स्वभिन्नज्ञानस्यापिं द्वेषकारणतया स्वगोचरभयोत्पत्त्यसंभवात् । भयस्य स्वहेतुकानिष्ट चिन्तनस्वरूपतातु श्रुतिशतेनापि नापलापितुं शक्यत इति दिक् ।

एवं रणात्पराजयत इत्यत्र द्वेषाधीनानिवृत्तिः पराजेरर्थः । पंचम्यर्थविषयता तु द्वेषनिवृत्त्यो रुभयो रन्वेति । तथा च रणद्वेषायत्त रणनिवृत्तिमा नित्यन्वयबोधः । अत एव 'पराजेरसोढ' इत्यनुशासने पराजेर्योगे ऽसहनस्य द्वेषस्य विषयोपादानत्वेन संज्ञायते । शत्रून् पराजयतइत्यत्रा भिभवानुकूलोव्यापारोर्थः पराजेरिति शत्रुरभाव्यतया कर्मैव ।

क्रियानिवृत्तिजनक व्यापारान्तरवाचिनः ।
धातवोवारयत्याद्याः प्रत्याकांक्षन्ति पंचमीम् ॥७॥

वारयत्यादिधातुः धातु प्रवृत्तिनिमित्तत्वोपलक्षित पतनत्वाद्यव च्छिन्न प्रतियोगिताकमभावं फलविधयाभिधत्ते तत्प्रयोजकमिति माप तेति वाक्यादिव्यापारं प्रधानतया तज्जनितपदार्थोपस्थिति रुपलक्षण धर्ममोषेण पतना भावत्वादिना फलमवगाहते । तत्राभावस्वरूप फलाधिकरणतया निवक्षिते कर्मसंज्ञाबलीयसीति ततो द्वितीया, फल भूताभावप्रतियोगि क्रियाकारकाणि पुनरपादानसंज्ञकानीति तत्रत्या पंचमी तानि कारकाण्यभिधत्ते । कूपादन्धं वारयतीत्यत्र कूपाधिक रणक पतनप्रतियोगिकस्यांधवृत्तेः, यवेभ्योगां वारयतीत्यत्र यवकर्मक भक्षणप्रतियोगिकस्य गोवृत्तेः, परस्वेभ्यः पाणिवारयति इत्यत्र पर-स्वकर्मकोपादान प्रतियोगिकस्य पाणिवृत्तेः, शरेभ्यः शरीरंवारयतीत्यत्र शरकरणक व्याधप्रतियोगिकस्य शरीरवृत्तेः, पुष्पेभ्य आतपंवारयती त्यत्र पुष्पकर्मकशोषण प्रतियोगिकस्यातपवृत्तेः, श्वपचेभ्योदातारंवार यतीत्यत्र श्वपचसम्प्रदानकप्रतियोगिकस्य दातृवृत्ते, रभावस्यानुकूलो व्यापारो वाक्यार्थः ।

यत्तु क्रियाविषयक निवृत्त्यनुकूलो व्यापारोवारयतेरर्थः, तत्र निवृत्त्यन्वितमाधेयत्वं द्वितीयायाः प्रकारित्वं पंचम्याः शक्यम् , तथा च कूपप्रकारिकाया अन्धवृत्तेः पतननिवृत्ते रनुकूलोव्यापारोभवति कूपादंधं वारयतीति वाक्यार्थः, कूपेमापतेयमिति निवृत्तौ कूपेप्रकार ताया निराबाधत्वादिति । तन्न तथा सति अचेतनकर्मके पुष्पेभ्य आतपंवारयतीत्यादौ कूपादंधं वारयति न पुनरन्धो निवर्तते इत्यादौ च गतिश्चिन्तनीया ।

लीयति दर्शनाभावजनिकां वदति क्रियाम् ।
मातुर्न्यलीयतेत्यादौ पंचमीचेष्यमाणताम् ॥८॥

मातुर्निलीयतेबालइत्यादौ स्वकर्मकदर्शनाभावानुकूलो व्यापारोलीयतेरर्थः, पंचमीतु वृत्तिमत्त्वेनेच्छाविषयत्व मभिधत्ते । तेन मातृवृतित्वेनेष्यमाणः स्वकर्मकदर्शनाभावो वाक्यार्थः। अत एव बालो मातुर्निलीयते, मातापुनरेनं पश्यत्येवेत्यादयः प्रयोगाः सूपपादाः । तदर्थमेव "अन्तर्धौ येनादर्शनमिच्छती"त्यत्र इच्छाति ग्रहणमिति व्यक्तं तद्विदाम् ।

प्रकाशनाधिकरणे धीयमानस्यवक्तरि ।
प्रकृतौ च जनेः कर्तु रपादानत्व मिष्यते ॥९॥

हिमवतो गंगा प्रभवतीत्यत्र प्रभवतिः प्रकाशपर्यायः । प्रकाशस्तु दर्शनयोग्यत्वाभावावच्छेदक देशाव्यवहित देशावच्छेदेन दर्शनयोग्यत्वम् । द्वितीयदेशान्वयितादात्म्यं पंचम्यर्थः । तथा च हिमवदभिन्नोयो दर्शनयोग्यत्वाभावावच्छेदक देशाव्यवहितदेशः तद्दर्शन योग्यतावती गंगेतिवाक्यार्थः। उच्चारणानन्तरित मुच्चारणमधीङोर्थः । प्रथमोच्चारणान्वितं कर्तृत्वं पंचम्याः । तथाचो पाध्यायकर्तृकोच्चारणानन्तरितोच्चारणकर्तृत्वमर्थः । ब्रह्मणः प्रजाः प्रजायन्तइत्यत्र जनेरुत्पत्तेः कर्त्रीणां प्रजानां प्रकृतित्व मुपादानत्वं वा ब्रह्मणः प्रतीयते । धात्वंतरोपात्ताया मप्युत्पत्तावेवम् । अत एव " अंगादंगात्सम्भवसि हृदयादभिजायसे । आत्मावैपुत्रनामासि त्वं जीव शरदः शत " मिति श्रुतिः । हेतुपंचम्या गतार्थ मेतदिति केचित ।

अध्याहृतल्यबन्तस्य कर्माधिकरणंतथा ।
प्रासादात्पश्यतीत्यादौ विभक्तिर्वक्तिपंचमी ॥१०॥

प्रासादात्पश्यति आसनात्प्रेक्षते इत्यादा वारुह्योपविश्येत्यध्याहार्यम् । कर्मण्यधिकरणे च पंचमी । प्रासादमारुह्यासने उपविश्य इति पर्यवसित वाक्यशरीरम् ।

इति पदवाक्यरत्नाकरे कारकपंचमी विवरणम् ॥ ९ ॥

यतोऽध्वकालनिर्माणं ततोभवति पंचमी ।
सप्तमी केवलंकाला दध्वनः प्रथमापिच ॥१॥

योजनादिशब्दा मुख्यया वृत्त्या परत्वविशेष मभिदधति । गौण्या तु तदभिव्यंजकान् संयुक्तसंयोगघटकान् परत्वप्रतियोगिकापरत्वाधिकरण देशान् । मासादिपदमपि तावदादित्यपरिस्पन्दान्तरितजन्मनो वस्तुनः सामयिकमपरत्व विशेष मभिदधत् संसर्गगुणेन तदन्तरालकालावयवानभिधत्ते । स्वीक्रियते संख्यायाइव परत्वादेरपि समवायान्येन केनापि संसर्गेण गुणकर्मणोरपि व्यवहारवशाद्वैशिष्ट्यम् । तथा च ग्रामा द्योजनेयोजनेवावनमित्यादौ पंचम्या अवधिमत्त्वं प्रथमायाः सप्तम्यावा अधिकरणत्वमर्थ इति ग्रामावधिकयोजनात्मक परत्वाधिकरणं वनमि त्यन्वयबोधः । कार्तिक्या आग्रहायणीमासइत्यत्र कार्तिक्यादिपदं त दुत्पन्नस्थिरद्रव्येलाक्षणिकम्, तथा च कार्तिक्युत्पन्ना वधिकमासस्वरूपा परत्वाधिकरणमाग्रहाय ण्युत्पन्नवास्त्वित्यन्वयबोधः ।

दिक्शब्दांचूत्तरपदा जाद्यन्यैरितरेण च ।
आराहतेभ्यां च योगे नाम्नो भवति पंचमी ॥२॥

उदयाचलावधिकमपरत्वं तद्विशिष्टं च देशमभिदधतः पूर्वादयो दिक्शब्दा, स्तथाविधाः प्रागादयोंचूत्तरपदा, आजन्तादक्षिणा प्रभृतयः आद्यन्तादक्षिणाहि प्रभृतयः । अन्येतरशब्दौ पृथक्त्व विशिष्टवाचिनौ । प्रपंचार्थमितरग्रहणं, तेन पृथक्त्वार्थकानामितरेषामपि लाभाच्चैत्राद्भिन्नः पृथगित्यादिकमुपपद्यते । इतरस्त्वन्यनीचयोरिति कोशसिद्धनीचवाचकताक स्त्वितरशब्दोनेहगृह्यते, अयमस्मात्तारोमन्द्रो ह्रस्व इत्यादाविवाय मस्मान्नीच इतरइत्यादावपि विभक्तपंचम्यैवार्थ सिद्धेः । ऋतेयोगे द्वितीयापि "ततोन्यत्रापि दृश्यते" इत्यनुशासने न "ऋतेहि द्वितीयाचे" ति चान्द्रसूत्रेण चानुशिष्यते, तेन पुरुषाराधनमृते इति प्रयोगोपि प्रमाणम् । आरादिति दूरसमीपयोर्वर्तते ।

पूर्वोंग्रामात्तडागइत्यादौ पंचम्याः परत्वनिरूपकत्वमर्थः । तथा च ग्रामवृत्तिपरत्व निरूपक मुदयाचलावधिकं यदपरत्वं तदाश्रयस्तडा-गइति, माधवात्पूर्वो मधुरित्यत्र पूर्वपदेन प्रागभावाधिकरणस्य पंचम्याप्रतियोगित्वस्याभिधानात माधवप्रतियोगिक प्रागभावस्याधिकरणं मधुरित्यन्वयबोधः । प्रागादिशब्दानां दिक् शब्दत्वेपि ग्रामस्य दक्षिण इत्यादाविव प्राप्तामतसर्थषष्ठीं बाधितुं पृथग्ग्रहणं, अतो ग्रामात् प्राक् तडागइत्यादौ ग्रामवृत्तिपरत्व निरूपकोदया चलावधिकापरत्ववति देशे तडागइत्यवगम्यते । एवं ग्रामाद्दक्षिणा दक्षिणाहि वेत्यादौ बाड बानलावधिकापरत्ववत् देशोदक्षिणापदस्य पंचम्याः परत्वनिरूपकत्वं, आजादे दैशिकमधिकरणत्वमर्थः । तेन ग्रामवृत्तिपरत्व निरूपकबड-बानलावधिकापरत्ववति देशेतडाग इति वाक्यार्थः । अवयववाचि पूर्वादिपदयोगे षष्ठ्येवप्रमाणं, तेन पूर्वः कायस्य नतु कायात शरीरस्य दक्षिणाहीतिलः नतु शरीरादिति । चैत्रादन्यइतरइत्यादौ चैत्रावधिक पृथक्त्ववानित्यन्वबोधः । अत्रान्योन्याभाववा नेवान्यादिपदार्थः, अर्थपरमन्यपदं नतु स्वरूपार्थमिति प्रपंचनाय पृथगितरपदोपादानम् । नच घटान्नेति प्रसज्येत, नञोभाव सामान्यार्थकत्वात् ; संसर्गमर्यादया तादात्म्यसंसर्गावच्छिन्न प्रतियोगिताभानेन घटोनेत्यादौ घटान्योन्याभावस्यार्थतो लाभादन्योन्याभावत्वस्य प्रवृत्तिनिमित्तत्वाभावात् । भवतु वा न्योन्याभावो नञर्थः , निपातानामभेदान्वयं प्रतीवविभक्तिविशेषार्थान्वयं प्रत्ययोग्यत्वमेवकल्प्यत इत्येकदेशिनः । वनाद्दारादित्यत्र वनावधिकंपरत्व मपरत्वंवार्थः , ऋते शब्दस्यान्योन्याभाव स्तद्वानत्यन्ताभावः तद्वांश्चार्थः । स्तोकाद्दतेपचति जलाद्दते गन्धः, गन्धाद्दते पाषाणोधूमाद्दते वह्निरिति चतुर्णां निदर्शनम् ।

अपाङ्परिप्रातिप्राप्तं कर्मप्रवचनीयताम् ।
बहिश्चस्वस्ययोगेन पंचम्या यान्ति हेतुताम् ॥३॥

अपपरीवर्जनार्थौ, मर्यादाया मभिविधौचाङ्, प्रतिनिधि प्रति दानयोः प्रतिश्च, कर्मप्रवचनीयसंज्ञां भजमानोऽव्यपेक्षमाणस्य प्रातिप दिकस्य पंचम्यानिमित्तम् । बहिः शब्दोपितथा । अपहरेः परिहरेर्वा संसारइत्यादौ अत्यन्ताभावः कर्मप्रवचनीययोः, पंचम्या आधेयत्वमर्थः, हरिवृत्त्यत्यन्ताभावप्रतियोगी संसारइतिवाक्यार्थः । मर्यादायां वर्तमान स्याङो व्यवधानस्य संसर्गस्याभावोर्थः, अव्यवधानं क्वचित्कालिकं क्वचिद्दैशिकं क्वचित्पाठिकं क्वचिदन्यथापि, संसर्गस्य तादात्म्यसंयोग सादृश्यसमानकालीनत्वादेरभावोपि यथायथं तात्पर्यवशादुपतिष्ठते । आ मुक्तेः संसारइत्यत्र संसारेमुक्तिनिरूपितं कालिकमव्यवधानं मुक्ति-समानकालिकत्वाभावः, आसमुद्रान्मृद इत्यत्र मृदां समुद्रनिरूपितं दैशिकमव्यवधानं तादात्म्यस्य सादृश्यस्यसंयोगस्य वा भावश्च भासते। " आकडारादेका संज्ञे " त्यत्र एकसंज्ञाक शब्दविधीनां कडारसूत्र निरूपितं पाठिकमव्यवधानं पठितत्वाभावश्चावगम्यत इति । अभि विधौ वर्तमानस्याङो व्यापकत्वमितरसम्बन्धश्चार्थः, तत्र व्यापकता घटक इतरनिरूपितश्चैकएव संसर्गः प्रतीयते । अपरमाणोः पृथिवी त्यादौ पृथिवीत्वसामानाधिकरण्येन तादात्म्यसंसर्गावच्छिन्ना परमाणु व्यापकता तदितरतादात्म्यं च भासते । आसमुद्राद्यशइत्यादौ यशसि समुद्राभिव्यापकत्वं समुद्रेतरसम्बन्धश्च भासते, इत्येषादिक् । तत्सम्बन्ध तदितरसम्बन्धावेवाभिविधिः , नतु व्यापकतापि, आपरमाणोरिति यथाश्रुतदर्शनादित्यपि । प्रतिनिधौ वर्तमानस्य प्रतेर्भेद स्तत्कार्यका-रित्वं चार्थः, प्रद्युम्नः कृष्णात् प्रतीत्यादौ कृष्णभिन्नः कृष्णकार्यकारी प्रद्युम्नइति बोधः । प्रादिदाने वर्तमानस्यप्रतेः ऋणत्व ध्वंसजनकत्व मर्थः, पंचम्यास्तु ऋणत्वान्वयि आदानजन्यत्वं, ऋणत्वन्तु स्वत्वमिव पदार्थान्तरं पापविशेषोवा । तिलेभ्यः प्रतियच्छति माषान् इत्यत्र तिलादानजन्यर्णत्व ध्वंसजनकमाषदानकर्तेत्यन्वयबोधः ; बहिर्ग्रामा-दित्यत्र तदनधिकरणोदेशो बहिः पदार्थः, ग्रामानधिकरणं च परिसरा दिरेव देशोनान्तर्ग्रामीणः ।

अकर्तरिऋणेहेतौ पंचमीचास्त्रियांगुणे ।
प्रायेणज्ञापकेहेतौ स्त्रियामप्यगुणेष्वपि ॥४॥

शताद्बद्धइत्यादौ ऋणत्वं ऋणंवा हेतुता हेतुमत्तावा खण्डशः पंचम्यर्थः । ऋणाभिन्नशत हेतुकबन्धनकर्मेत्यादि रन्वय बोधः । ऋणकर्तृकबन्धनविवक्षायां ऋणेनबद्धइत्येव प्रमाणम् । जाड्येन जाड्या द्बा बद्धइत्यादौ गुणस्यहेतुतायां पंचमी तृतीया च युज्यते । बुद्ध्या मुक्तइत्यादौ तु तृतीयैव नतु पंचमी, बुद्धिशब्दस्य स्त्रीत्वात् । स्त्रियामपि गुणे ऽगुणे च ज्ञापकेहेतौ पंचमीसाधुः । नास्तिघटोनुपलब्धेरित्यत्रा नुपलब्धिज्ञाप्यत्वस्य घटनास्तितायां मन्वयस्यानुभवात् । अत्राज्ञात ज्ञापकमनुलब्ध्यादेव पंचम्यासम्बद्धयते, नतु चक्षुरादि, तेनेन्द्रियात घट इति न प्रयोगः ।

ज्ञातज्ञापके सर्वत्र पंचमी, धूमादग्निमान् पर्वतइति, जीवः कर्ताबुद्धेरिति चप्रयोगात् । धूमादग्निमानित्यादौ धूमपदं धूमज्ञाने ग्नि पदं अग्निज्ञाने ज्ञायमानाग्नौ वा लाक्षणिकं हेतुता हेतुमत्तावा पंचम्यर्थौ धूमज्ञानविशेषितो परज्ञानेन्वेतीति प्रांचः । ज्ञानजन्यत्वं पंचम्यर्थः, असौ धूमविशेषितोग्निपदार्थे तदेकदेशेवा ऽग्निज्ञानेन्वेति इत्यपरे । वह्निरेवाजि ज्ञापितोनतु वह्निज्ञानं ज्ञायमानोवह्निर्वेति पर्वतोवह्निमानिति प्रतिज्ञा वाक्य घटकानिपदानि मुख्यवृत्त्यैव प्रवर्तते हेताव पिधूमादिपदंतथा, धूममधिकृत्यैवो दाहरणादिवाक्येन व्याप्त्यादेर्ज्ञापकता प्रयोजक धर्म स्योपपादनात् । धूमपदेन धूमज्ञानलक्षणे तु धूमज्ञानस्यैव वह्निज्ञान जनकता प्रयोजकं रूपमुदाहृतं स्यात् । अतो ज्ञानजन्यज्ञानविषयत्वं पंचम्यर्थो धूमादिविशेषितैकदेशो वह्नावन्वेतीति तु नवीनाः ।

धूमवह्निपदाभ्यां भक्त्याज्ञानमुपस्थाप्यते,शक्त्याच स्वार्थः, पंचमी तु जाड्या द्बद्धइत्यादाविव जनकतां जन्यतां वाभिधत्ते । स्वीक्रियते

चैकप्रातिपदिक शक्यलक्ष्यार्थयो र्भेदेनान्वयः । तथाच धूमोज्ञाने, त द्धेतुतायां, साज्ञाने तद्वह्विवन्वेतीति धूमविषयक ज्ञानहेतुक ज्ञानवि षय बह्रिमानयं पर्वत इति बोधः प्रतिज्ञाहेतुभ्यां संभूय जन्यते । केवलया प्रतिज्ञया पर्वतो वह्निमानित्येवबोध्यते, नतुज्ञेयवह्निमानिति, हेतु समभिव्याहार ज्ञानान्तरितो हि वह्न्यादिपदस्य ज्ञाने लक्षणाग्रहो हेतु पञ्चम्यर्थान्वय बाधादितितु वस्तुगतिः ।

ननु घटः पृथीवीगंधा न्नरूपान्नपटत्वान्नापि स्नेहादित्यादौ घटे रूपादिज्ञानज्ञाप्य पृथिवीत्वस्या त्यंताभाव स्तद्भदन्योन्याभावो वा पृथि वीत्वे, पृथिव्यां रूपादिज्ञानज्ञाप्यत्वस्य, पृथिवीज्ञान सामान्ये रूपादि ज्ञानजन्यत्वस्य पृथिवीज्ञान हेतुतामात्रे रूपादिज्ञानसंबन्धस्य, पृथिवी ज्ञान जनकेषु ज्ञानेषु रूपादिविषयकत्वस्य वा ऽभावोनबोधयितुंशक्यते, बाधात्, पृथिवीत्व व्याप्यरूपवान् घट इत्यादिना भ्रांतपरामर्शेन घटो गंधवानित्याद्यनुमिति जननादितिचेत ? अत्र प्रतिज्ञासमभिव्या हृत हेतुपंचम्या हेतौ पक्षसंबंधोऽपि प्रतिपाद्यते, अतएव हेत्ववयवेन गतार्थत्वात् उपनयादि प्रयोगाभावात् उदाहरणान्त एवन्यायः, एवंच घटः पृथिवीगंधात्र पटत्वादित्यादौ पटत्वे घट संबंधाभाव एव प्रती यत इति गुरुमतानुसारिणः ।

वस्तुतो भ्रम सामान्य भिन्नत्व विशिष्ट केवल विषयता संबंधेन लिंगबोधक पद वाच्यस्य तल्लक्ष्यार्थे ज्ञाने, पंचम्यर्थ हेतु तावास्तु प्रकृतपक्षक प्रकृतसाध्यकानु मितित्वावच्छिन्न निरूपकता संसर्गेण साध्यवाचि पदलक्ष्यार्थे साध्य ज्ञानन्वय इति व्युत्पत्त्या घटः पृथिवी गंधात्र पटत्वादित्यादौ केवल गंधविषयक भ्रमसामान्य भिन्नज्ञानवृत्ति हेतुतायां घटपृथिवीतादात्म्य साध्यकानु मितित्वा वच्छिन्ननिरूपकता स्वरूपसंसर्गः पृथिवीज्ञाने तत्संसर्गावच्छिन्न प्रति योगिताकः पटत्वविषयक भ्रम सामान्यभिन्न ज्ञान हेतुत्वाभावश्च भासते । विषयतायां केवलत्वंतु विशेष्यताद्वया संवलनं, तेनपटो गंध

व्याप्य पटत्वान् घटो गंधव्याप्य घटत्वान् इति समूहालंबन हेतु कत्वस्य घटो गंधवानित्यनु मितौ सत्त्वेपि न प्रकृतवाक्यार्थे बाधः, समूहालंबने विशेष्यताद्वय सत्वेन तद्विषयतायां कैवल्याभावादिति संक्षेपः ।

नानापृथ ग्विनायुक्ता द्विदूरांतिक वाचकात् ।
पंचमीचतृतीयाच द्वितीयाचापिसप्तमी ॥ ५ ॥

नानादिशब्दयोगे पंचमीतृतीया द्वितीयाः, दूरार्थकात् पंचमी द्वितीयातृतीया सप्तम्य इति व्यवस्थितो विधिः। विनादिशब्दाना मत्यन्ता भाव स्तद्वानन्योन्याभाव स्तद्वांश्च यथायथमर्थः । गंधंविनावायु धूमं विना वह्निर्जलंविनानिःस्नेहो गंधो वेत्यादिव न्नानापृथक् पदयो रप्युदाहरणानि । ग्रामस्य दूरंदूरात् दूरेणांतिक मंतिकादंतिकेनेत्यादौ दूरार्थकपदाना मितरा समानाधि करणत्वे प्रातिपदिकार्थ मात्रे मथ मावच्चतस्रो विभक्तयः । समानाधिकरणत्वेतु दूरः पंथाइत्यादौ विशेष्य परतन्त्रैव विभक्तिः । दूरादावसथान्मूत्र मित्यादावधिकरणे पंचम्यादयो दृश्यन्ते ।

अल्पकृच्छ्रौ कतिपयस्तोका चद्रव्यगाइमे ।
व्यपेक्षंते पंचमींच तृतीयां करणार्थिकाम् ॥६॥

अल्पादयश्शब्दाः सामानाधिकरण्येन द्रव्यमविशेषयंतः करण वाचिनीं पंचमीं तृतीयांच व्यपेक्षंते । यथाल्पे नाल्पा द्वामुक्त इत्यादि । द्रव्यसमानाधिकरणे स्तोकेन विषेण हत इत्यादौ तृतीयैव । क्रिया समानाधिकरणे स्तोकंपचतीत्यादौ कर्मणि द्वितीयैव । वाजपेयेन यजे तेत्यादौ करणानुवादे तृतीयैव प्रमाणं ।

इति पदवाक्यरत्नाकरे उपपद पंचमी विवरणम् ॥

विभक्त्यंतरबोध्येभ्यो भिन्नः शेषोऽभिधीयते ।
संबंधत्वनिमित्तेन षष्ठी तत्र प्रवर्तते ॥१॥

प्रथमादीनां यानि प्रवृत्तिनिमित्तानि संबुद्धित्वादीनि तदितर धर्मविशेषः शेषः, तच्च षष्ठी संबंधत्वेन प्रवृत्तिनिमित्तेनाभिधत्ते । अस्तिहि संयोगसमवाय स्वस्वामिभाववैशिष्ट्यकरणकर्मत्वादि ष्वनुयुक्तत्व प्रतियुक्तत्वादि । यतः समवाये वाय्वाद्यनुयोगिकत्वावच्छिन्न रूपप्रतियोगिकत्व विरहा न्नवायौरूपमिति प्रतीतिव्यवहारौ । सएवचानुयुक्तत्व धर्मः संबंधत्वम् । एकशतं षष्ठ्यर्था इति महाभाष्य परिभाषण मपि नप्रवृत्तिनिमित्ताना मपरिमितत्वं ग्राहयति, किन्तुविशेष्य व्यक्तीनाम् । राज्ञः पुरुषो घटस्य रूपमित्यादौ राजप्रतियोगिकत्व घटानु योगिकत्वादिना स्वत्वसमवायादिः पुरुषरूपादौ भासते। स्वत्वत्वसमवायत्वादिना तथात्वोपगमे मातुः स्मरतीत्यादौ कर्मतायां ताद्रूप्येण षष्ठी न प्रवर्तेत, द्वितीया प्रवृत्तिनिमित्तत्वविशिष्टस्य तस्य शेषत्वाभावात् । नचेयं "अधीगर्थदयेशांकर्मणि" इत्यनुशासनसिद्धा, स्मरते रधिपूर्वधातुतुल्यार्थकस्य योगे कारकषष्ठी, तत्रापि सूत्रे शेषइत्यनुवृत्तेः । अतएव शेषषष्ठ्यैवसिद्धेर्थे "ज्ञोविदर्थस्य करणे" इत्याद्यष्टसूत्रीविधानं सर्पिषोज्ञानं मातुः स्मरणमित्यादौ शेषषष्ठी प्रयोगनियम प्रतिपत्तिद्वारा लुक्प्रयोजक समासनिषेध प्रतिपत्त्यर्थ मित्यभियुक्ताः । यदाह हरिः – "कारके व्यपदिष्टेच श्रूयमाणक्रियेपुनः । प्रोक्ता प्रतिपदंषष्ठी समासस्य निवृत्तये" ॥ इति । ज्ञोविदर्थस्येत्यादि सूत्राष्टके पदमुपलक्ष्यविहिता षष्ठीसमासनिषेधार्थेति तदर्थः । हरिस्मरणमित्यादौ कृद्योगलक्षण कारकषष्ठ्याः समासः । शेषषष्ठी समासस्त्वष्टसूत्रीज्ञाप्यस्य निषेधस्यविषयः । हरिसम्बन्धिस्मरण हरिकर्मकस्मरणयोः समानार्थयोश्चरमे प्रतिपाद्येसमासः साधुः न प्रथमेइति, उत्तरपदप्रकृति स्वर-एवास्यसमासस्य नान्तोदात्तइति वा नियम्यते । कारकपूर्वके समासे भवतूत्तरप्रकृतिस्वरः, शेषषष्ठीसमासेत्वन्तोदात्तः ।

हरिस्तु अष्टसूत्र्यामातुः स्मृतमित्यादौ समासनिषेधएव प्रयोजनं, नहि कृद्योगषष्ठीसम्भवति, कृत्सुनिष्ठायाः पर्युदासात्, इत्यभिप्रायेण "निष्ठायांकर्मविषया षष्ठीच प्रतिषिध्यते । शेषलक्षणयाषष्ठ्या समासस्तत्र नेष्यते" इत्यनुशशास ।

यत्तु "ज्ञोविदर्थस्यकरणे" इति सूत्रे प्रवृत्त्यर्थके जानातौ सर्पिषोज्ञानकरणत्व विवक्षायां सर्पिषाजानीत इति, "अधीगर्थदयेशांकर्मणी" ति सूत्रे मातुः स्मरति दीनस्यदयते जनस्य ईष्टइति, "रुजार्थानां भाववचनानामज्वरेः" इति सूत्रेज्वरसंतापिवर्जितानां रोगार्थानां भावकर्तृकाणां धातूनां कर्मणि षष्ठीस्यादित्यर्थके रोगश्चौरस्य रुजति, ज्वरिसन्ताप्योः रोगश्चोरं ज्वरयति वा, भावान्यकर्तृके नदीकूलं रुजतीति, "आशिषिनाथ" इतिसूत्रे सर्पिषोनाथते - आशीभिन्नार्थकेतु माणवकंनाथतीति, "जासिनिप्रहण नाटक्राथपिषां हिंसाया" मितिसूत्रे च्चोरस्योज्जासयति निहंति उन्नाटयति क्राथयति पिनष्टीति, अहिंसायांधानाः पिनष्टीति, "व्यवहृपणोस्समर्थयोः" "दिवस्तदर्थस्ये" ति सूत्रयोः क्रयव्यवहारार्थकानां व्यवहृपणिदिवां कर्मणि षष्ठीत्यर्थकयोः शतस्यव्यहरति पणति दीव्यतीति, गणनार्थकेव्यवहृतौ शलाकांव्यवहरति, स्तुत्यर्थकेपणो दीव्यतौच ब्राह्मणं पणायति दीव्यतीति, "कृञः प्रतियत्ने" इति सूत्रे प्रतियत्नो गुणाधानं तत्र वर्तमानस्य कृञः कर्मणि षष्ठी स्यादित्यर्थके एधोदकस्योप स्कुरुते इति वृत्ता वाख्यातांत रुदाहरणं प्रत्युदाहरणंच; तत्सर्वं कृदंतोपलक्षणतया नेयमिति हरदत्तः । एवं "कृत्वोर्थप्रयोगे कालेधिकरणे" इति सूत्रेण विहिता द्विरह्नोभुङ्क्ते द्विरह्नो भोजनमित्यादौ शेषषष्ठ्यपि समासप्रतिषेधार्थैव, ताद्रूप्येणाधिकरणता विवक्षायांतु द्विरहनिभोजनमित्येव विग्रहोद्विरहभोजनमिति समासश्चोत्तरप्रकृतिस्वरोपेतः प्रमाणम् ।

सर्वनाम समानाधिकरणे प्रथमादयः ।
अन्यत्रहेतुपर्याये तृतीयाद्याविभक्तयः ॥२॥

हेतुकारणनिमित्त प्रयोजनार्थादिशब्दो यदि सर्वनामसमानाधिकरण स्तत्रको हेतु र्वसतिकं हेतुंवसतीत्यादिक्रमेण सर्वाविभक्तयः । अनेन निमित्तेन वसतीत्यादौ तृतीयाद्याएव साधवो न प्रथमाद्वितीये । अतएव यथायथं हेत्वादिशब्दोजनकं प्रयोजनंचाभिधत्ते इत्यभिहितं प्राक् । विभक्तीनां तद्धेतुकत्वमर्थः शेषोवा ।

अतसर्थयुतात् षष्ठी द्वितीयाप्येनपायुतात् ।
दूरान्तिकार्थयुक्तातु षष्ठीपक्षेतु पंचमी ॥ ३॥

ग्रामस्यदक्षिणतः पुरापुरस्तात् उपर्युपरिष्टादित्यादौ षष्ठ्येव । विन्ध्याद्दक्षिणतइत्यादौ विन्ध्यमारभ्यदक्षिणतइति ल्यबन्ताध्याहारेकर्मणि पंचमी । एवं दक्षिणेनग्रामं ग्रामस्यवेत्यनेन एनबन्तेनयोगेषष्ठी द्वितीयाच प्रमाणं, नतु पंचमी, प्रकृतायाः पंचम्याः षष्ठीद्वितीयेचाधिके भविष्यतइति महाभाष्यात् । तथा धनपतिगृहादुत्तरेण तोरणेनास्मदीयमित्यादावुत्तरेणेतिपदं तृतीयान्तं, तदपि तोरणेनेत्यस्य समानाधिकरणं, अतोदिक् शब्दयोगेपंचमी । ततः पश्चात् स्रंस्यन्त इति भाष्यप्रयोगादतसर्थं प्रत्ययान्तोपि पश्चाच्छब्दः पंचम्यां निमित्तम् । लुप्तोप्यतसर्थप्रत्ययः षष्ठीनिमित्तमिति प्राक् ग्रामादित्यादौ प्राप्तांषष्ठी अपवदति । अञ्चूत्तरपदयोगे पंचम्याः प्रतिप्रसवइत्यभिहित मधस्तात् । दूरमन्तिकं ग्रामस्यग्रामादित्युभयमपि प्रमाणम् ।

कृदन्तधातुयोगेन भवेत्कर्तरिकर्मणि ।
प्रधानेनियताषष्ठी गुणेतूभयथामता ॥ ४ ॥

ओदनस्यपाकः कृष्णस्य कृतिरित्यादौ द्वितीयावत् कर्मत्वं कर्तृत्वं च षष्ठ्यर्थः । द्विकर्मकधातुयोगे प्रधानकर्मणि षष्ठ्येव, गुणकर्मणि द्वितीयाप्रमाणम् । नेताश्वस्य ग्रामस्य ग्रामंवा । एतेन "कर्तृकर्मणोः कृती" त्यनुशासनंव्याख्यातम् । नन्वत्र सूत्रेकृतीति व्यर्थं,

" नलोकाव्ययनिष्ठाखलर्थतृणा " मित्यनेन लादेश पर्युदासे ऽर्थादेव कृदन्तधातुयोगे कर्तृकर्मणोर्लाभादिति चेन्न; कृतपूर्वीकटमित्यादौ तद्धितयोगे कर्मषष्ठ्यपवादाय तदुपादानात् ! अथ पूर्वं कृतमनेनेति विग्रहे सपूर्वाच्चेति सूत्रेणसोपपदात् पूर्वपदादिनिः कर्तरिविधीयते, तत्र कृतपदस्य कटसमानाधिकरणत्वे वृत्तिरेवानुपपन्ना, ऋद्धस्यराज्ञः पुरुषइत्यादाविव सविशेषणानां वृत्तिर्नेति वार्तिकेन तन्निषेधात् । सूत्रे कृतीत्यस्यापि वैयर्थ्यं, निष्ठाभिहितेकर्मणि अनभिहिताधिकारीय षष्ठ्य प्रसक्तेः,कटमिति तदपवादेन द्वितीयानुपपन्ना, तस्याअप्यनभिहिताधिकारीयत्वात्,अत्रकृतमितिभावक्तान्तमविवक्षितकर्मकमेवपूर्वेणसमास मासाद्य कर्तरि तद्धितं जनयित्वा कृतपूर्वीति शब्दं साधयति,सच प्राक्कालिककरण कर्तेतिबोधसमर्थो वर्तिष्ठते, भावक्तान्तकृञर्थेच कटकर्मत्वान्वयं भाषमाणो भट्टोजि र्बभ्राम, कर्मान्वयिनः कृञो भावप्रत्ययस्यौर्लभ्यात् । अन्यथा भावप्रत्ययान्तगम्यर्थे ग्रामकर्मत्वस्यान्वयसम्भवेन गतं ग्रामं गम्यते वा ग्राममिति प्रयोगापत्तेः, अविवक्षितकर्मकत्वे कदापि कर्मान्वयस्य विवक्षितकर्मके भावप्रत्ययस्य चानुपपत्ते रवश्याभ्युपेयत्वात् । कर्म प्रत्ययान्तकृतपदस्य वृत्त्यभ्युपगमेतु कर्मणि षष्ठीप्रसक्तेः द्वितीयोत्पत्ते रप्यसम्भव एव वर्तते । किंच कृञोर्थे कर्मान्वयोपगमे कथं च कृतीत्यनेन तद्वारणं, निष्ठापर्युदासानुसरणैकशरणत्वे तु किं कृती त्युपादानेन ।

यदपि कारकाणां सर्वत्र प्रत्ययार्थभावनाया मेवान्वयो नतु धात्वर्थे, " गुणानां च परार्थत्वा दसम्बन्धः समत्वा त्स्या " दिति न्यायात्, कर्मभावप्रत्ययाव्ययकृत श्च भावना मभिदधति, अन्यथा कारकान्वयानुपपत्तेः; कर्मकर्तृकृतां तु शक्त्या भक्त्या वा भावना बोधकत्वमिति ग्रामं गतवा नित्यादौ कृदर्थभावनायां ग्रामकर्मकत्व स्यैव कृतपूर्वीकर्तृवाचकतद्धितोपात्तभावनायां कटकर्मत्वस्यान्वयः ; कृदर्थभावनाकर्मणो निष्ठयाभिधानेपि तद्धितार्थकर्मणा मनभिधाना न्न

द्वितीयानुपपत्तिः, तथा च कृदुपात्ताया भावनायाः कर्मण्येव षष्ठी, नतु तद्धितोपात्ताया इत्यावेदयितुं कृतीतिसूत्रे निर्दिष्टमिति । यदाह हरिः "ततः क्रियावता कर्त्रा योगो भवति कर्मणाम् । अविग्रहा गतादिस्था यथा ग्रामादिकर्मभिः । क्रिया सम्बध्यते तद्वत् कृतपूर्व्यादिसंस्थिता" इति । क्रिया – भावना, कर्त्रा योगः कर्त्रैकदेशे क्रियाया मन्वयः, अविग्रहा प्रधानमिति तदर्थ इति भाष्ट्ये रुक्तम् । तच्चिन्त्यम्. भाव कृतां भावनाबोधकत्वस्यानुभवविरुद्धत्वात् । भवतु तदौदनस्य पाक इत्यादौ शेषे षष्ठ्येव, कृद्योगषष्ठीतु कर्तृकर्मकृत्सु एवोपपत्स्यत इति चेन्न,– उभयप्राप्तौ कर्मणीत्यस्य निर्विषयकत्वापत्तेः । ननु करणादिवत् तद्विषयः , वस्तुतो गुणानां चेति न्यायेन भावनायां कारकत्वेनान्विते धात्वर्थे कारकानन्वयो निर्णीयते, नतु घञन्तेन प्रधानवदुपस्थापिते तस्मिन्निति चेन्न,– तथापि कृतपूर्वीकटमित्यादौ कृतपदार्थस्य तद्धितार्थभावनायामनन्वये ऽसामर्थ्यमन्वयेतु तेनैवाकांक्षा विच्छित्तेःनव.टादेःकर्मत्वेनतत्रान्वयःसम्भवति।अन्यथा धात्वर्थान्तर्भूतकर्म कपतत्यर्थभावनायामपि कर्मान्वयप्रसंगात । अथ कृतादिपदार्थपरित्यागेन कृत पूर्वीत्यस्य प्राक्कालीन भावनावानर्थः, तदापक्व पूर्वीसुपानधीत पूर्वी वेदानित्यादेः पर्यायताप्रसंगः । पक्वादिपद समभिव्याहृतेन तद्धितेन पाकादि भावनैव प्रतिपाद्यत इति नतद्धितानांपर्यायत्वमिति चेत्? एवंसति विग्रहावस्थायां समासावस्थायां च विवक्षितस्यापि निष्ठार्थस्य केवलं निरर्थकत्वं युज्यते, नतु धातोः।अतो धातोरर्थे धात्वर्थोपहित तद्धितार्थभावनायां वा कर्मान्वयः सम्भवतीति किन्तद्धितानां पाकादि भावनावाचकतया नानार्थताभ्युपगमेनेति चेत् ? उच्यते-

क्रियाक्तायां भावनाया मिनिः क्तान्तो निरर्थकः ।
सूत्रे कृतीत्युपादानसामर्थ्या दवसीयते ॥९॥

पक्वपूर्वीसुपानित्यादौ पाकाद्यनुकूलभावनावानिनि प्रत्ययस्यै-वार्थो नतु पाककर्मपाकोवा क्तान्तस्य, पच्यादिपदजन्य पाकाद्युप-

स्थितेः पाकानुकूलभावनावति तद्धितवृत्ति ग्राहकतयैवोपयोगात् । त-द्धितान्तजन्यवाक्यार्थबोधे साक्षादजनकत्वादि दमादिपदजन्यबोधे प्रत्य-क्षोपस्थितवत् । यदि च तत्र पच्यर्थैकारकान्वयः स्यात्तदास्यपचेः कृदन्तत्वेन शेषषष्ठ्येव प्रवर्तेत । निष्ठापर्युदासेन षष्ठीवारणेकृतीत्यु पादान मनर्थकमापद्यते । तदुपादानसामर्थ्यमेव पक्वपूर्वीत्यादौ पूर्व-पदोपपद वैयर्थ्यमर्थापयतीति दिक् । कृद्योगषष्ठीविधिरनित्यः, अध येरामोदमुत्तममिति भट्टिप्रयोगात् तदर्हमिति निर्देशात ।

कर्मण्येवोभयप्राप्तौ तृतीयाकर्तरीदृशी ।
व्यवस्थाप्रायिकी तेन क्वचित्षष्ठ्यपि कर्तरि ॥६॥

आश्चर्यगवान्दोहोगोपेनेत्यादौ कर्तरितृतीयावत् षष्ठ्यपिप्रमाणम् । शब्दानामनुशासनमाचार्यस्येति दर्शनात् । यत्र पुनरकाकारकस्य भाववाची स्त्रीप्रत्ययान्तः तत्र कर्तृकर्मणोरुभयोः षष्ठ्येवसाधुः । भेदिकारुद्रस्य जगतोबिभत्सावेत्यत्र रुद्रकर्तृका जगत्कर्मका भेदाभेदाभि लाषश्च वाक्यार्थः ।

उकारान्तालडादेशा उकाव्ययखलर्थकाः ।
षष्ठीविधौपर्युदस्ताः क्त्सुनिष्ठातृणौ तथा ॥७॥

हरिं दिदृक्षु रलंकरिष्णु रित्यादा वुकारान्ताः, सृष्टिं कुर्वन् कुर्वाणइत्यादौ लादेशाः, शत्रूनूघातुक इत्यादावुकः, पाकंकर्तुमित्यादा-वव्ययाः ईषत्करो दुष्करोवा प्रयासो लोकेनेत्यादौ खलर्थाः, ग्रामंगतो घटंकृतवान् इत्यादौक्तक्तवतू स्वरूपानिष्ठा, वेदमधीयन् सोमंपवमानः आत्मानंमण्डयमानः कर्तालोका नित्यादौ शतृशानन्चानशतृन्प्रत्ययाः तृन्प्रत्याहारवाच्याः, एतेषा मन्योन्याभावः षष्ठीप्रयोजककृतिविशेषण तयोपतिष्ठते । लक्ष्म्याः कामुक इत्यादौकमिप्रकृतिकस्योकस्य

नित्यं मुरं मुरस्य वा द्विषन् इत्यादौ द्विषि प्रकृतिकस्य शतु विभाषा षष्ठीनिमित्तता प्रतिप्रसूयते । "इक्ष्वाकूणां दुरापेर्थे त्वदधीनाहि सिद्धय " इत्यत्र इक्ष्वाकूणां सिद्धय इति, "अपि वागधिपस्य दुर्वचं वचने तद्विदधीत विस्मय " मित्यत्र वागधिपस्य विस्मयमिति च योजना; तेनैक्ष्वाकुभि र्दुरापे वागधिपेन दुर्वच मित्यादिप्रयोगापादनं समाहितम् ।

भविष्यत्त्वाधमर्ण्येच नेनः षष्ठीनिमित्तता ।
भविष्यति नचाकस्य कृत्यानां वा तु कर्तरि ॥८॥

सज्जनं पालको वतरिष्यती त्यर्थात् पालनेपि भविष्यत्त्वाधमर्ण्या दक प्रत्ययस्य न षष्ठीनिमित्तत्वम् । व्रजं गामीत्यत्र भविष्यद्व्रजगमनकर्तरि शतंदायीत्यत्र शताधमर्ण्यप्रयुक्तदानकर्तरि च विवक्षिते नेन्प्रत्ययस्य तथात्वम् । कृत्यानां तव्यादीनां प्रत्ययानां योगे द्विकर्मकधातावनभिहिते कर्तरि गौणकर्मणि च यथायथं तृतीया द्वितीये, नतु षष्ठी, गोविन्देन नेतव्या व्रजं गावो नतु गोविन्दस्य व्रजस्येति । "गेयो माणवक स्साम्ना" मित्यादौ कर्तरि कृत्प्रत्यये कर्माणि षष्ठ्यवसेया । मम मया वा सेव्यो हरि रित्यत्र कर्तरि षष्ठी तृतीया च प्रमाणम् ।

लिट्कार्यकारिणोः षष्ठी किकिनोः प्रतिषिध्यते ।
प्रतिप्रसूयते तोसुन् कसुनो स्तन्निमित्तता ॥९॥

" आदृगमहनजनः किकिनौ लिट् च ", त्यनुशासनेनादन्ता दृदन्ता द्गमिहनिजनिभ्य श्च लिडर्थे किकिनौ विधीयेते, तत्रापि षष्ठी निषेधः । वज्रस्य परोक्षातीतभरणकर्तेत्यर्थे वज्रं बभ्रिरिति, तथा जलं पपिः, दण्डं दधिः, ग्रामं जग्मिः, शत्रुं जघ्नि रित्यादिप्रयोगात् । वत्सानपाकर्तुं मित्यर्थे पुरा वत्सानां मपाकर्तो स्त्यत्र तोसुन्, क्रूरान्

विसर्पितु मित्यर्थे पुरा क्रूरस्य विसृप इत्यत्र कसुन्. एव मव्ययावपि तोसुन् कसुनौ षष्ठ्यपवादकाविति तयोः कृत्त्वेन प्रसक्ताया अव्यय त्वेन प्रतिषिद्धायाः षष्ठ्याः प्रतिप्रसवोयम् ।

शब्दै स्तुलोपमाभिन्नै र्योगे सादृश्यवाचिभिः ।
प्रतियोगिनि षष्ठी च तृतीया चानुशिष्यते ॥१०॥

सादृश्यवाचिभि स्तुल्यसदृशादिशब्दै र्योगे चन्द्रेण चन्द्रस्य वा सदृश इत्यादौ तृतीया षष्ठी च प्रतियोगित्व मभिधत्ते। चन्द्रस्य तुला चन्द्रस्योपमे त्यत्र षष्ठ्येव प्रमाणम् । न तृतीया। "तुल्यां यदा रोहति वाससा" इत्यत्र "स्फुटोपमं भूतिसितेन शंभुना" इत्यत्रच सहार्थे तृतीया, समंचमयैवतुलाभिलाषिणइतिवत्। चन्द्रवन्मुखमित्यादौ इवादि शब्दयोगे न तृतीया षष्ठीवा, "तुल्यार्थै रतुलोपमाभ्यां तृतीयान्यतरस्या" मिति सूत्रे बहुवचनेनैव कडारा इत्यादाविव तुल्यप्रभृतिलाभे प्यर्थग्रहण सामर्थ्येन यथेवादिशब्दानां पर्युदाससिद्धेः । वस्तुतो ऽन्योन्याभावार्थ कस्य नञः प्रतियोगित्वविशेषादावर्थे पंचमीषष्ठ्यादेरिव इवादिनिपा- तानामपि विभक्तिविशेषनिर्व्यपेक्षत्व स्वाभाव्यात् ।

यत्तु निपातानां सर्वत्रदर्शने द्योतकाभिधानमेव व्याप्यं, नञश्च प्रतियोगित्व सांसर्गिकविषयताका न्योन्याभावादिविषयक बुद्धाविवस्व प्रतियोगित्व सांसर्गिकविषयतानिरूपित सादृश्यविषयताविशिष्ट बुद्धौ संकेतस्ययुक्तत्वात; अतएव केवला दिवादिपदा दनन्तरेण मुखादिपदेन तुल्यंमुखमित्यादाविव सादृश्यविशिष्टं मुखं नप्रत्याय्यते, निष्प्रतियोगिक सादृश्यबोधने इवादीना मसामर्थ्यात । अतएवेवादिपदेन प्रतियोगित्वा- नुयोगित्व स्वरूपोमानत्वोपमेयत्वयोः श्रुतिमात्रेणावगमा दिवादिशब्द- योगे श्रौतीमुपमा मुदाहरन्त्यालंकारिकाः । प्रतियोगित्वादि संसृष्टसा- दृश्यानुभवं प्रती वादिपदसामर्थ्यावधारणेपि सादृश्यत्वमात्रेण स्मरणं ना नुपपन्नं, एवं च चन्द्रइव चन्द्रानेत्यादौ संसर्गतयालभ्येर्थे न षष्ठ्यादि,

उक्तार्थानामप्रयोगात्, पक्त्वाभुङ्क्तेइत्यादौ भावेक्त्वाप्रत्ययेन संसर्गीभूतसमानकर्तृकत्वलाभा च्चैत्रेण पक्त्वा चैत्रो भुक्तइत्यादयो न प्रयोगाइति । तच्चिन्त्यं, समानकर्तृकत्व सांसर्गिकविषयिता निरूपित धातुप्रयोज्य विषयता विशिष्टानुभवे क्त्वासङ्केतोपगमे चैत्रः पक्त्वा चैत्रेणभुज्यतेइति प्रयोगापत्तेः, अन्यलभ्ये संसर्गे घटो न चन्द्रइवे त्यादौ प्रातिपदिकार्थमात्रे प्रथमापत्ते रिति दिक् ।

आयुष्यमद्रकुशल सुखप्रभृतिभि र्हितैः ।
योगेचतुर्थीषष्ठीवा तत्राशिष्यनुशिष्यते ॥११॥

आयुष्यं चिरजीवितं, मद्रममंगलनिवृत्तिः, कुशलमनामयं, सुखं, एतदर्थै र्हितशब्देन च योगे तस्मै तस्यवायुष्यंवाभूयादित्यादा वाशी रर्थक ककारयोगे षष्ठी चतुर्थी च साधुः ।

इति पदवाक्यरत्नाकरे षष्ठी विवरणम् ॥६॥

---

ङ्योस्सुपस्सप्तमीतत्रानुबन्धौ ङिसुपोर्ङ्यौ ।
अथाधिकरणंसप्तम्यर्थो धात्वर्थसंगतम् ॥१॥

अधिकरण मधिकरणत्व माधेयत्वंवा सप्तम्यर्थः । तच्चाधेयत्वं स्थाल्या मोदनंपचतीत्यादौ कर्मघटित सामानाधिकरण्येनफले, गेहेचैत्रः पचतीत्यादौ कर्तृ घटित सामानाधिकरण्येन व्यापारेऽन्वेति । "यस्मि न्नग्नौपचेदन्नं तत्र होमोविधीयते" इत्यादावग्निपदं स्थालीपरं, तदाधेयत्वं सामानाधिकरण्येन पच्यर्थफलेन्वेति । भवतुवा परंपरयावह्न्याधेयत्वमेव सप्तम्यर्थः, अतएव तच्छब्देन वह्नेः परामर्शोपि संघटते । मिथिलास्थो राजा पाटलीपुत्रे ब्राह्मणेभ्यो ददातीत्यादौ सप्तम्यर्थोनस्वं प्रदान घटित सामानाधिकरण्येन धात्वर्थेन्वेति, किंतु साक्षादेव ब्राह्म

णेषु । एवं गिरौ वृक्षात् पर्णं पततीत्यत्रापि सप्तम्यर्थो वृक्षेन्वेति, नत्व पादान घटित परंपरया पतने । यदाहुः– " कर्तृकर्म व्यवहितामसाक्षात् धारयत क्रियाम् । उपकुर्वत क्रियासिद्धौ शास्त्रेऽधिकरणंस्मृत " मिति । दैशिककालिकान्यतरसंसर्गावच्छिन्न मधिकरणत्व माधेयत्वं वा सप्तम्यर्थः। तादृशं च क्रियाधिकरणत्वं कर्तृकर्माधिकरण एव स्वीक्रियते, एवं नान्य त्रेत्यपि वदंति । अत्र च क्वचित् क्रियाकालोपस्थितकालावच्छिन्न मधिकरण त्वमेव सप्तम्या प्रत्याय्यते, गृहान्निर्गत्य अंगणे पचमाने चैत्रे गृहे चैत्रः पचतीति नप्रयोगः । क्वचिदन्यकालावच्छिन्नम प्यधिकरणत्वं तथा, यथा भाविनीं चैत्राधिकरणता मभिसंधाय ग्रामे गच्छतीति प्रयुंजते । आतपे तिष्ठतीत्यादौ आतपपदं तत्संयुक्त प्रदेश परमिति संक्षेपः ।

समभिव्याहृताचेत्स्या द्विपयार्थकतानुभिः ।
वैज्ञानिकाधिकरणं तदानिर्नक्तिसप्तमी ॥ १ ॥

सविषयार्थक धातुसंवलिता सप्तमी विशेष्य निरूपक प्रकारता स्वरूपां वैज्ञानिकी माधेयता मभिधत्ते, शुक्तौ रजतत्वं जानाती च्छति वेत्यादौ शुक्तिविशेष्यतानिरूपकप्रकारत्वादि रजत त्वात्मककर्मघटितपरम्परया ज्ञानादावन्वेति ।

दूरान्तिकार्थकाच्छब्दा दाधारे सप्तमीविधिः ।
विभक्त्यन्तरतोबाधे प्रतिप्रसवतांगतः ॥२॥

सप्तम्यधिकरणेचेति सूत्रेचकारेण दूरान्तिकार्थकशब्दादधिकरणे सप्तमीविधिर्यद्यपि नाप्राप्तापकः, तथापि दूरान्तिकार्थेभ्यो द्वितीयाचेति सूत्रेण प्राप्ताभिर्द्वितीयातृतीयापंचमीभिः सप्तम्याबाधप्रसक्तौ प्रतिप्रसव विकल्पोयम् । तथा च ग्रामाद्दूरं दूरेण दूराद्दूरेवावनमिति सर्वे प्रयोगा स्साधवः ।

सप्तमी स्यात् कर्मणि वा यदिष्टादिपदादिनिः ।
अन्येतु नित्यमेवात्र सप्तमीत्याचचक्षिरे ॥४॥

इष्टादिगणा दुत्पन्नस्य कर्तरीनिप्रत्ययस्य योगे कर्मणि सप्तम्य न्यतरस्यां चानुशिष्यते, तेनाधीतीवेदान् वेदेषु वेत्यादौ वेदकर्मका ध्ययनकर्तेति बोधः । अत्र मुख्ये कर्मण्येव सप्तमी, नतु गौणे, तेन मास मधीतीत्यादयः प्रयोगाः सूपपादाः ।

इति पदवाक्यरत्नाकरे कारकसप्तमी विवरणम् ॥

निमित्ता त्कर्मसंयोगे या सप्तम्यनुशिष्यते ।
चतुर्थ्या इव तादर्थ्य मर्थो स्या इति शाब्दिकाः ॥१॥

" चर्मणि द्वीपिनं हन्ति दन्तयो र्हन्ति कुंजरम् । केशेषु चमरीं हन्ति सीम्नि पुष्कलको हतः ॥ " इत्यादौ सप्तमी चतुर्थीव तादर्थ्य मथवा तृतीयाव न्निमित्तत्व मभिधत्ते । चर्मार्थं द्वीपिहननमिति वाक्यार्थः । सीमा अण्डकोशः । पुष्कलको गन्धमृगः । " सीमा घाटस्थितिक्षेत्रे ष्वण्डकोशेषु च स्त्रियाम् " "अथ पुष्कलको गन्ध मृगे क्षपणकीलयो " रिति मेदिनी । सीमा घाटा, तज्ज्ञानार्थं पुष्क लकः शंकुः, हतो निखात इत्यर्थः, इति हरदत्तः । अत्र कर्मणा संयोगः समवायो वा निमित्ते स्वरूपसन्नेव सप्तमीसाधुतायां प्रयोज- को न शाब्दबोधविषय इति शाब्दिकाः । कर्म क्रिया, तद्योगे तादर्थ्ये सप्तम्यभिधत्त इति सूत्रार्थः । अत एव अविद्यारजनीक्षये यदुदेती त्यादौ निमित्तसप्तमी उपपद्यत इत्यपरे ।

यत्कर्मकर्तृको भावः परतन्त्रतया स्थितः ।
लक्षकोन्यस्य भावस्य ततो भवति सप्तमी ॥२॥

गोषु दुह्यमानासु आगत इत्यादौ गवादिकर्मकदोहनं, गोषु आयातासु आगत इत्यादा गवादिकर्तृक मागमनादि प्रधानभूता मागमनादिक्रिया मुपलक्षयति । कर्म कर्तृपारतन्त्र्येण भासमानक्रिया समानकालीनत्वादिसंसर्गेण विशेषणता मापद्यते। क्रियान्तरे सप्तमीतु साधुतामात्रार्थे त्येके । कालमात्रं सप्तम्यर्थः, दोहनादिविशिष्टा गौ दोहनाधिकरणताव्याप्यतया विशिष्टाधिकरणतयान्वेति ।

इति श्री महामहोपाध्याय गोकुलनाथशर्मविरचितः
पदवाक्यरत्नाकरः समाप्तः ॥

# SASTHDAMUKTHAVALI–7.

## KARYADHI KARANA VADA.

PART–1.

BY

*Vidwan. T. A. P. Sreeranga chariar.*

*Edited By*

P. B. ANANTHA CHARIAR, Pandit.

*Printed at the*

SRI SUDARSANA PRESS.

*Conjeeveram.*

1901.



Price, As–10.

श्रीः ।

शास्त्रमुक्तावळी - ७

# कार्याधिकरणवादः ।

( प्रथम स्तरंगः । )

विद्वद्वर्येण श्रीशैलानन्तपूरुष

श्रीरंगाचार्येण

विरचितः ।

श्री कांची प्रतिवादिभयंकरम्

अनन्ताचार्येण

संस्कृतः परिशोधितश्च

श्री सुदर्शनमुद्राक्षरशलायाम्

अमुद्रयत ।

॥ श्रीकांची ॥

१९०१

इदानीमेतन्मूल्यम् ० — १० — ०

श्रीः ।

# कार्याधिकरणवाद शुद्धाशुद्धपत्रिका ।

| पुटे | पङ्क्तौ | अशुद्धं | शुद्धं |
|---|---|---|---|
| १ | ८ | तरो | वरो |
| | २० | गहो | वाहो |
| | ११ | देष | देव |
| | २१ | द्रढे | द्रढि |
| २ | १० | त्प्राप्तय | त्प्राप्त्य |
| | १२ | हाद | बाद |
| | १६ | तद्रा | तत्रा |
| ३ | १ | नरति | नयति |
| | ३ | समातं | समायातं |
| | १० | णैवश्च | णैवच्च |
| | १२ | प्त्यर्थ | प्त्यर्धं |
| | १७ | कार्य | कार्य |
| | १९ | भस्य | अस्य |
| | २३ | जनश्या | जनया |
| | २५ | कृश्श्न | कृत्स्न |
| | १६ | प्रत्वाख्यास्थ | प्रत्याख्यास्थ |
| ४ | १ | सर्ष | सर्व |
| | २१ | यादरि | बादरि |
| | २३ | तस्माका | तस्याका |
| ५ | २४ | शतुर्मु | च्चतुर्मु |
| ६ | ६ | स्ये | स्य |
| | १४ | मार्ग | मार्ग |
| | २५ | त्वये | त्यये |
| ७ | ४ | ढिरण्य | हिरण्य |
| | १३ | रमृते | स्मृते |
| | १४ | क्षोतः | द्योऽतः |
| ८ | १५ | विन्दती | विन्दन्ती |
| | १८ | हिरण्गर्भौ | हिरण्यगर्भौ |
| | २३ | वत्र | तत्र |

–2

| | | | |
|---|---|---|---|
| ९ | २५ | त्वस्य | तस्य |
| १० | २ | देशं | देशं |
| | ६ | विन्द्ती | विन्दन्ती |
| | ७ | प्राप्यानां | प्राप्याणां |
| | १८ | पंचम | पंचमे |
| ११ | ३ | भिप्रेतश्रु | भिप्रेतस्य |
| | २२ | विदुषोव्य | विदुषोऽव्य |
| १२ | ११ | वृत | वृत्त |
| | २० | रोधोवि | रोधोऽवि |
| | २३ | ऊर्ध्वमा | ऊर्ध्वा |
| १४ | १४ | विषयणी | विषयिणी |
| १५ | ७ | वैद्युतान्पुरुषोमा | वैद्युतात्पुरुषोऽमा |
| | २४ | विशेषेव्यव | विशेषेऽव्यव |
| १६ | ११ | श्रुयमान | श्रूयमाण |
| | १५ | काय | कार्य |
| २२ | ९ | स्वार्भाविक | स्वाभाविक |
| | २६ | तत्तद्वस्तु | तत्तद्वस्तु |
| २३ | ८ | सर्ट | सर्व |
| २४ | ९ | परब्रह्म | परब्रह्म |
| | २८ | अर्च्चिर | अर्च्चिरा |
| २५ | १ | चदुर्मु | चतुर्मु |
| | ४ | यद्य | यद् |
| | ८ | तदूर्ध्वं | तदूर्ध्वं |
| | २० | कण्ठ्याश्च | ककण्ठ्याश्च |
| २६ | २२ | प्राप्तत्वना | प्राप्तत्वेना |
| २८ | १ | ब्रह्मं | ब्रह्म |
| | १४ | प्रप्त | प्राप्त |
| | १६ | ब्रह्मो | ब्रह्मो |
| | २० | यएत | यएव |
| | २९ | द्विदुये | द्विदुर्थे |
| ३० | २ | प्रायके | प्रायिके |
| | ११ | प्रवृतिमण्डलान्वः | प्रकृतिमण्डलान्तः |
| | १२ | नोवदन्वभा | नापितदन्तभा |

श्रीः

श्रीहयग्रीवायनमः ।

श्रीमतेरामानुजायनमः ।

# शास्त्रमुक्तावळी ।

## कार्याधिकरणवादः ।

श्रीमान् वेङ्कटशैलाद्धरिरुदयन्नोद्य दहरदिवि दीपः ।
दहतु सुदर्शनमहसा सत्पथसञ्चारिवैरिसन्तमसम् ॥ १ ॥
श्रीरामानुजयोगयनन्तगुरुराट्सौम्योपयंत्राह्वयै
र्योवेत्रै रघुना ञ्जगत्कुलगुरु र्येस्यात्र नो मध्यमः ।
आस्ताश्चापि तथा न आद्यचरमा वाम्नाय सिन्धुद्वयी
पारप्रापणनाविकौ फणिपति स्सोयं विधत्तां जयम् ॥ २ ॥
आध्यात्मिक्यां सरण्यां मम हृदयरथं स्वामियन्त्रश्वरूपा
श्श्रीश श्श्रीभाष्यकारो भुवनगुरुवरो रम्यजामातृयोगी ।
सज्जा स्सञ्चारयन्ता मविषम मधुना ऽनुज्झितप्राच्यलेखम्
दुर्मार्गोद्वृत्तवाहो न गमयति यथा दुष्पथं वक्रकर्षी ॥ ३ ॥
कार्याधिकरणवादं मुमुक्षुजनदेवयानगतिविषयम् ।
शारीरकमीमांसाशास्त्रे श्रीरंगसूरिरातनुते ॥ ४ ॥

इहतावच्छारीरकमीमांसाचतुर्थाध्याय तृतीयपादे षष्ठसूत्रप्रभृति पञ्चदशसूत्रपर्यन्त दशसूत्रयात्मकं कार्याधिकरणं विचार्यते ॥ ५ ॥

अस्मिन्नधिकरणे भगवता भाष्यकारेण सकलाभ्युपनिषदो भगवच्छास्त्रगीतोपनिष द्भगवत्परांकुशादि दिव्यसूरिसूक्ति श्रीविष्णुपुराण प्रभृतिभि र्यामुनादि श्रीसूक्तिभि र्न्यायतश्च परिशीलयता सकलेतरकुदृष्टीनुद्धूय निर्धारितस्य सिद्धान्तस्य कैश्चिदर्वाचीनै र्व्याकुलीकृतत्वा दीदृशवैयाकुल्याः प्रागभावेन श्रुतप्रकाशिकाया स्तत्कालस्थित शांकर-भास्करीय यादवीयादि मतान्तरशंकाजालमात्र विदळन विश्रान्तत्वा त्तद्वैयाकुलीपरिहारेणोक्त सिद्धान्तद्रढिम्ने पुनरयमारम्भः ॥ ६ ॥

इदंचाधिकरणं शास्त्रेषु समन्ततः प्रसिद्धानामैश्वर्यकैवल्यभगवत्प्राप्तिरूपपुरुषार्थार्थिनां त्रिविधाना मधिकारिणां मध्ये कान्नयति पूर्वाधिकरणनिर्णीत आतिवाहिकगणः, कान्वा ननयतीति शंकया प्रवृत्तम् ॥ ७ ॥

इयमत्र विप्रतिपत्तिः – अर्चिरादि रमानवान्तआतिवाहिकगणः – किं हिरण्यगर्भलक्षण कार्यकोटिप्रविष्टापरब्रह्मोपासकान्नयति? उत परब्रह्मोपासकान्? अथवा परब्रह्मोपासकान् प्रकृतिवियुक्तब्रह्मात्मक प्रत्यगात्मोपासकांश्चोभयानिति? ॥ ८ ॥

अत्र हिरण्यगर्भोपासका ऐश्वर्यार्थिनः, परब्रह्मोपासका भगवत्प्राप्त्यर्थिनः, प्रकृतिवियुक्त ब्रह्मात्मक प्रत्यगात्मोपासकाः कैवल्यार्थिन इति विवेकः ॥ ९ ॥

अत्र प्रथमः पक्षोबादरेः, द्वितीयः पक्षो जैमिनेः, तृतीयस्सिद्धान्तिपक्षो बादरायणस्य; एवमस्मिन्नधिकरणे प्रथमादिसूत्रपंचकं - बादरिपक्षपरम्, षष्ठादिसूत्रत्रयं जैमिनिपक्षपरं, ततस्सूत्रद्वयं बादरायणपक्षपरमित्यपि बोध्यम् ॥ १० ॥

तत्राप्रामाण्यातिशया त्प्रथमपूर्वपक्षतया बादरिपक्ष मुपन्यस्यति प्रथमं सूत्रपंचकेन –

सू – कार्यं बादरिरस्य गत्युपपत्तेः ॥ १ ॥ (४ - ३ - ६)
इत्यादिना ॥ ११ ॥

कार्यं – कार्यकोटिप्रविष्टं हिरण्यगर्भलक्षणमपरंब्रह्म, उपासीनमातिवाहिकगणो नयतीति बादरिराचार्यो मन्यते । अस्य - कार्यब्रह्मोपासीनस्यैव । गत्युपपत्तेः - परिच्छिन्नदेशवर्ति स्वप्राप्यप्राप्तये मार्गविशेषेण देशविशेषगमनोपपत्तेरिति प्रथमसूत्रार्थः ॥ १२ ॥

अत्र - विषयवाक्येषु " सएनान् ब्रह्मगमयती " त्यादिषूपासकानामुपस्थितत्वात् सिद्धान्तसूत्रच्छायानुरोधाच्चो पासकवाचक द्वितीयान्तोपासीन पदाध्याहारः । अस्येत्येकवचनेन परामर्शानुरोधादेकवचनान्ताध्याहारः ।

नयतिपद मितिपदंच सिद्धान्तसूत्रादाकृष्टम् । पूर्वाधिकरणोपस्थिताऽऽतिवाहिकविषय मातिवाहिकगणपदं नयति पदानुगुण्यायैकवचनान्त मध्याहृतम् । इतिपदाक्षिप्तम्मन्यत इति पदमन्वयपूर्तये समाहृतं । एवमेवोत्तरत्राप्यूहनीयमिति बोध्यम् ॥ १३ ॥

एतत्सूत्रभाष्ये " कार्यमुपासीनानेव गमयतीति बादरिराचार्योऽन्यत " इत्यत्र बहुवचनान्तोपासीनशब्देनोपासकनिर्देशस्तु पूर्वं विप्रतिपत्तिवाक्ये बहुवचनान्तशब्देन तद्ग्रहणात् तदनुरोधेनार्थोपन्यास मात्रतात्पर्येण; अन्यथा - सूत्रे अस्येत्येकवचनान्त शब्देनोपासक परामर्शास्वारस्यस्य दुष्परिहरत्वात् ॥ १४ ॥

सूत्रे - एकवचनान्तोपासीन पदमेवाध्याहर्तव्य मित्यभिप्रायेणैवत्र तत्सूत्रभाष्यएवान्ते - " कार्यन्तु हिरण्यगर्भरूपं ब्रह्मोपासीनस्य परिच्छिन्नदेशवर्तिप्राप्य प्राप्त्यर्थं गमन मुपपद्यते, अतोऽर्चिरादिरातिवाहिकगणस्तमेव नयती " ति सूत्रार्थोपसंहारे एकवचनान्तशब्देनैवोपासकस्य नयतिकर्मतया निर्देशः कृतः ॥ १५ ॥

अतएव चैतत्सूत्रदीपे सूत्रपदयोजनाया मेकवचनान्तोपासीनपद मेवोपात्तम् ॥ १६ ॥

यथोक्तं तत्र -" सूत्रार्थस्तु-कार्यं हिरण्यगर्भमुपासीन मातिवाहिको गणो नयतीति बादरिराचार्यो मन्यते, अस्यैव गत्युपपत्ते''रिति ॥ १७ ॥

यद्यपि, अस्य - कार्यब्रह्मणएव , गत्युपपत्तेः - मार्गविशेषेणदेशविशेषं गत्वा प्राप्त्युपपत्तेरिति व्याख्याने बहुवचनान्तोपासीन पदाध्याहारेपि न दोषः, सारग्रन्थोप्येतदभिप्रायकएव स्वरसतः प्रतिभाति; तथापि - गतिशब्दस्य गमनार्थकतायाः तत्समभिव्याहृत षष्ठ्याः कर्त्रर्थकतायाश्च स्वारसिकत्वात्तदाश्रित्य यथोक्तयोरन्वव्याख्यानं भाष्यदीपयोरादृत मित्यवधेयम् ॥ १८ ॥

ननु-कार्यशब्दः प्रकृतिमण्डलान्तःपातिकृत्स्न कार्यवर्गवाचीति-सर्वएवैश्वर्यार्थिनः कार्योपासकत्वेन विवक्षितुं योग्याः , प्रत्याख्यास्यंतेच

सिद्धान्तसूत्रे प्रतीकालम्बनत्वेनोद्धृत्य सर्वएवैते । एवंस्थिते कार्यशब्दः कथमिह हिरण्यगर्भमात्रविषयतया व्याख्यात इतिचेत्? इदमत्रावधेयम् , ' सएनान् ब्रह्मगमयती ' त्यत्र ब्रह्मशब्दविवक्षितस्यैवेह कार्यशब्देन निर्देशात् , तस्यचो त्तरसूत्रेषु हिरण्यगर्भरूपतायाः अभिव्यक्तत्वाच्चायं कार्यशब्दो हिरण्यगर्भविषयः, द्वितीयसूत्रे ऽर्चिरादिमार्गगामिनां प्राप्यस्थानस्य चतुर्मुखलोकरूपत्वाभिधाना च्चतुर्थपंचमसूत्रयोः तेषामाप्रळयं चतुर्मुखलोके स्थित्वा ततस्तदध्यक्षेण हिरण्यगर्भेण सह परब्रह्मप्राप्तिप्रतिपादनमुखेन श्रूयमाणापुनरावृत्ति निर्वाहात् , तृतीयसूत्रे कारणवाचकब्रह्मशब्दस्य कार्यभूतहिरण्यगर्भपरत्व निर्वाहाय तस्य प्रथमजत्वलक्षण ब्रह्मसामीप्यरूपोपचार बीजोपपादनाच्च दर्शितब्रह्मशब्दस्य हिरण्यगर्भपरतया बादर्यभिप्रेततापि स्फुटा । बादरिरपि - अर्चिरादिमार्गेण गच्छतां ब्रह्मलोकप्रजापतिसभावेश्मादिप्राप्तिश्रवणात्तस्यच ब्रह्मलोकैश्वर्यव्यतिरिक्तैश्वर्यार्थिष्वनुपपन्नतां ब्रह्मलोकैश्वर्य व्यतिरिक्तैश्वर्यार्थिना मप्यर्चिरादिमार्गगामित्वे धूमादिमार्गप्रतिपादक शास्त्रस्य निरवकाशत्वापत्तिश्च पर्यालोच्यैवार्चिरादिमार्गस्य ब्रह्मलोकैश्वर्यार्थिमात्रविषयतां तादृशमार्गप्रतिपादक प्रकरणस्थ ब्रह्मशब्दस्य चतुर्मुखमात्रविषयताञ्चाभिप्रेयाय । कार्यशब्देनेह चतुर्मुखनिर्देशस्तु तदाक्षिप्तकारणब्रह्मणोऽपरिच्छिन्नस्य प्राप्तये क्वचिद्गमनानुपपत्तिः , परिच्छिन्नस्य कार्यब्रह्मणश्चतुर्मुखस्यप्राप्तये तदुपपत्तिः, ब्रह्मगमयतीत्यादौ कारणवाचकशब्देनोपचारा त्कार्यनिर्देश इत्यादि बादरिपक्षाभिप्रेतांश द्योतनार्थः । सिद्धान्तसूत्रे सर्वेषा मपि प्रतीकालम्बनत्वेन ग्रहणन्तु - तुल्यन्यायत्वेनेतरदृष्टान्तेन चतुर्मुखलोकैश्वर्यार्थिनामपि प्रतिषेधलाभाय । तस्मात्कार्यशब्दो यथोक्तार्थपरएव व्याख्येय इति ॥ १९ ॥

सू - विशेषितत्वाच्च ॥ २ ॥ (४ - ३ - ७ ॥)

द्वितीयसूत्रस्यास्य प्रथमसूत्रान्वितस्याय मर्थः, विशेषितत्वाच्च-

अर्चिरादिमार्गगामिप्राप्यस्य तद्विषयशास्त्र एवानन्यथासिद्धैश्शब्दै श्चतुर्मुखलोकसभावेश्मादिकार्यरूपतया परस्माद्ब्रह्मणो व्यावृत्तत्वेन दर्शितत्वाच्च, कार्यमुपासीनमेव नयत्यातिवाहिकगण इति बादरिर्मन्यतइति ॥ २० ॥

शास्त्रञ्च - बृहदारण्यकाष्टमाध्याय द्वितीयब्राह्मणपंचदश खण्डिकायां-"पुरुषोऽमानवएत्य ब्रह्मलोकान् गमयती"ति श्रवणम् । १ । छान्दोग्याष्टमप्रपाठक चतुर्दशखण्डे - " प्रजापतेस्सभां वेश्म प्रपद्य" इति श्रवणंच । २ । इत्येवमादिकम् ॥ २१ ॥

अत्र बृहदारण्यकवाक्ये अर्चिरादिगामिप्राप्यविषय ब्रह्मलोकशब्दस्य चतुर्मुखलोकपरत्वा द्बहुवचनविरोधेन कर्मधारयमाश्रित्य परब्रह्मपरत्वाभिधानासम्भवात्, तथाभिधानेपि लोकशब्दास्वारस्यस्य दुर्वारत्वात्, छान्दोग्यवाक्ये अर्चिरादिना गतस्य स्पष्टमेव प्रजापति सभावेश्मादि प्रपत्त्यनुसन्धान दर्शनाच्च, अर्चिरादिमार्गगामिनां चतुर्मुखतल्लोकसभावेश्मादिप्राप्ति रनन्यथासिद्धाह्यवगम्यते ॥ २२ ॥

ब्रह्मणस्सर्वगतस्य क्वचित्परिच्छिन्नं लोकविशेष सभावेश्मादिकंचन प्रामाणिकम्, नवा ब्रह्मप्राप्तस्तत्प्राप्तये क्वचि द्गमनं युक्तम्, सर्वगतत्वाद्ब्रह्मणः ; नापि निश्शेषाविद्याविनिर्मुक्तस्य ब्रह्मोपसम्पन्नस्य अवश्यभंगुरस्थूलपदार्थमय लोकविशेषादिप्राप्तिरूपैश्वर्य विशेषानुभवलक्षणः पुरुषार्थो युक्तः, तथासति मोक्षस्यानित्यत्वापत्तेरितिहि बादरेराशयः ॥ २३ ॥

अतएवहि - उत्तरत्र चतुर्थपादे " अभावं बादरिराह ह्येच" मिति दशमसूत्रे मुक्तस्य देहेन्द्रियाद्यभावो बादर्यभिमतः प्रतिपाद्यते ॥ २४ ॥

तथाच - अर्चिरादिमार्गप्रस्थितानां क्वचिद्गमनप्रतिपादनलिंगाच्चतुर्मुखलोक सभावेश्मादिप्राप्तिप्रतिपादनालिङ्गा च्चार्चिरादय आतिवाहिकपुरुषा न परब्रह्मोपासकाना मतिवोढारः, अपितु हिरण्यगर्भलक्षणकार्यब्रह्मोपासकाना मैश्वर्यविशेषार्थिना मेवेति सूत्रद्वयाभिप्रायः ॥ २५ ॥

अर्चिरादिगतिप्रतिपादकवाक्येषु "स एनान् ब्रह्म गमयती"ति श्रूयमाणस्य नपुंसकब्रह्मशब्दस्य परब्रह्मवाचकस्य पुल्लिङ्गब्रह्मशब्दप्रयोगविषयहिरण्यगर्भपरत्वानुपपत्ति शंकापरिहारं तृतीयसूत्रेणाह ॥ २६ ॥

सू – सामीप्यात्तु तद्व्यपदेशः ॥ ३ ॥ ( ४ – ३ – ८ ॥ )

तुशब्द उक्ताशंकाव्यावृत्त्यर्थः ॥ २७ ॥ तद्व्यपदेशः - तस्य हिरण्यगर्भस्य नपुंसकब्रह्मशब्देन व्यपदेशः , यद्वा - तेन-नपुंसकब्रह्मशब्देन , व्यपदेशः - हिरण्यगर्भनिर्देशः , सामीप्यात्तु - हिरण्यगर्भस्य परब्रह्माव्यवहितकार्यत्वेन तत्सन्निहित त्वात्तु सम्भवतीति बादरिर्मन्यत इति सूत्रार्थः ॥ २८ ॥ कारणवाचकस्योपचारात्कार्ये प्रयोग इत्यभिप्रायः ॥ २९ ॥

हिरण्यगर्भस्य प्रथमजत्वलक्षणं परमपुरुषाव्यवहित कार्यत्वंच "यो ब्रह्माणं विदधाति पूर्वं योवैवेदांश्च प्रहिणोति तस्मै" इति श्वेताश्वतरोपनिषदादिषु प्रसिद्धम् ॥ ३० ॥

अथार्चिरादि मार्गगामिनां हिरण्यगर्भप्राप्तेरेव स्वीकारे तेषाममृतत्वप्राप्तेश्च पुनरावृत्ति प्रतिपादक शास्त्रविरोधस्स्यात , ब्रह्माण्डोदर वर्तिसर्वलोकानां विनाशशास्त्राद्द्विपरार्धावसाने हिरण्यगर्भविनाशात्पुनरावृत्ते रवर्जनीयत्वात । अमृतत्वप्राप्तिशास्त्रं छान्दोग्ये अष्टमप्रपाठके षष्ठखण्डे षष्ठखण्डिकायां "तयोर्ध्वमायन्नमृतत्वमेती"त्येव मादिकं, अपुनरावृत्तिशास्त्रञ्च तत्रैवचतुर्थप्रपाठके पंचदशखण्डे षष्ठखण्डिकायां"सएनान् ब्रह्मगमयत्येषदेवपथो ब्रह्मपथ एतेन प्रतिपद्यमाना इमम्मानव मावर्तं नावर्तन्ते नावर्तन्त" इत्येवमादिकम् , ब्रह्माण्डोदरवर्ति सर्वलोकविनाशशास्त्रन्तु-गीताष्टमाध्याये " आब्रह्मभवनाल्लोकाः पुनरावर्तिनोऽर्जुने" त्येवं जातीयकम् , तस्मात्परब्रह्म प्राप्तिरेवार्चिरादि मार्गगामिनां वक्तव्येत्याशंकां परिहरति चतुर्थेनसूत्रेण ॥ ३१ ॥

सू - कार्यात्यये तदध्यक्षेणसहातः परमभिधानात् ॥ ४ ॥ ( ४-३-९ )

सन्दर्भानुगुण्येनात्र–सः, अधिगतविद्यः,प्राप्नोति, इति पदत्रयमध्याहार्यम् ॥३२॥ सः–अर्चिराद्यातिवाहिकगणेनहिरण्यगर्भलक्षणंकार्यब्रह्म नीतस्तदुपासीनः पुरुषः। कार्यस्य-ब्रह्मलोकस्य, अत्यये- विनाशदशायां, तदध्यक्षेण सह–कार्यब्रह्मलोकाधिपतिना विदुषा हिरण्यगर्भेण सह ।अधिगतविद्यः - स्वयमपि प्राप्तपरविद्यस्सन् । अतः - कार्याद्ब्रह्मलोकात् । परं–परब्रह्म । प्राप्नोति । अभिधानात्–श्रुत्यैव तथा प्रतिपादनात । इति बादरिर्मन्यतइति सूत्रार्थः ॥३३ ॥

श्रुतिश्च "तेब्रह्मलोकेतु परान्तकाले परामृतात्परिमुच्यन्ति सर्वे" इत्येवंरूपा तैत्तरीयकोपनिषदि षष्ठप्रश्नदशमानुवाकद्वाविंशखण्डिकागता, एवं जातीयकान्याच ॥ ३४ ॥

अस्मिन्नेवार्थे स्मृतिमपि प्रमाणयति पंचमेन सूत्रेण ॥ ३५ ॥

सू – स्मृतेश्च ॥ ५ ॥ (४ - ३ - १० ॥ )

स्मृतेश्च – महर्षिस्मरणाच्च, स कार्यात्यये तदध्यक्षेण सहाधिगतविद्योतः परं प्राप्नोतीति बादरिर्मन्यत इतिसूत्रार्थः ॥ ३६ ॥

स्मृतिश्च "ब्रह्मणा सहते सर्वे संप्राप्ते प्रतिसंचरे । परस्यान्ते कृता मानः प्रविशन्तिपरं पद" मित्यादिरूपा ॥ ३७ ॥

श्रुतौ'परान्तकाल'इत्यत्र स्मृतौ 'परस्यां त'इत्यत्रच स्थलद्वयेपि परशब्दो ब्रह्मायुःपरः, श्रुतौ ' परामृतादिति ' ल्यब्लोपे पञ्चम्यन्तम् , परामृतं प्राप्येत्यर्थकमिति बादर्यभिप्रायः ॥ ३८ ॥ स्मृतौ कृतात्मान इति पदमेव पूर्वसूत्रेऽधिगतविद्यपदाध्याहारबीजम् ॥ ३९ ॥

इदमत्र चतुर्थपञ्चमसूत्रतात्पर्यम् – सत्यलोकोपलक्षितांडाधिपतेश्चतुर्मुखस्य द्विपरार्धावसानकाले नाशेप्यर्चिरादिमार्गप्रस्थितानां चतुर्मुखप्राप्तिस्वीकारे न तेषाममृतत्वापुनरावृत्तिश्रवणविरोधः , आप्रलयं चतुर्मुखलोके स्थितानां तत्रैवाधिगतविद्यानां तेषां चतुर्मुखेन

विदुषासाकं तदायुषोन्ते मोक्षस्वीकारेण तदुपपत्तेः, श्रुत्या स्मृत्याच्च तेषां तथा मोक्षप्राप्तेः प्रतिपाद्यमानत्वाच्चेति ॥ ४० ॥

तथाचेदमत्र बादरेराचार्यस्य तात्पर्यं पंचसूत्र्या निष्पद्यते – औपनिषदविद्याप्रकरणस्थगतिश्रुतिषु श्रूयमाणोऽर्चिरादिरमानवान्त आतिवाहिकगणो हिरण्यगर्भलक्षणकार्यब्रह्मोपासकानेव नयति, तेषामेव देशविशेषप्रतिनियत हिरण्यगर्भैश्वर्यप्राप्तये गमनोपपत्तेः। नहि परब्रह्मोपासकानां तत्प्राप्तये क्वचिद्गमन मुपपद्यते, परस्य ब्रह्मणस्सर्वगतत्वात्। एवं - ब्रह्मलोकान् गमयतीति, प्रजापतेस्सभां वेश्मप्रपद्य, इतिच परिच्छिन्नस्थूलवस्त्वात्मक लोकविशेष प्रजापतिसभावेश्मादिप्राप्तिश्रवणात्तेषां च भंगुरताया अवश्यम्भावात्, उपनिषत्सु ब्रह्मविदाम्मोक्षएव पुरुषार्थः, सचा नन्तस्थिरफलरूप इति प्रतिपादनाच्च अर्चिरादिगति रपरब्रह्मोपासक विषयैव । परब्रह्मोपासकास्तु क्वचिद्गमननिरपेक्षा स्सर्वगतमस्थूलत्वादिगुणकमनन्तं स्थिरं परं ब्रह्मैव यथास्वदेशमेव प्रतिपद्यन्त इति न तेषां गत्यपेक्षा। उक्तश्रुतौ ब्रह्मलोक शब्दस्य बहुवचनान्तत्वेन 'एतं ब्रह्मलोकं न विन्दन्ती'त्यादिष्विव कर्मधारयाश्रयणेन ब्रह्मपरत्वमपि न सम्भवदुक्तिकम्। एवमर्चिरादिमार्गेण गतस्य 'प्रजापतेस्सभां वेश्म प्रपद्य' इति प्रजापतिशब्दित हिरण्यगर्भ सभावेश्मप्रपदना नुसन्धानश्रवणेन हिरण्गर्भोपासकत्वमेवास्य सुनिर्णयम्। इत्थं दर्शितहेतुभि र्हिरण्यगर्भोपासकस्यैवाऽऽतिवाहिक गणनेयत्वे निश्चितेसति ' स एनान् ब्रह्मगमयती'त्यत्र कारणवाचको ब्रह्मशब्दः कार्यऔपचारिको निर्बाधः। एवमेतस्यामृतत्व प्राप्तचपुनरावृत्तिश्रवणञ्च 'तेब्रह्मलोकेत्वि'त्यादि श्रुत्या 'ब्रह्मणा सहते सर्व' इत्यादिस्मृत्याच अर्चिरादिवर्त्मना चतुर्मुखलोकं गत्वा तत्र विदुषा चतुर्मुखेन साक मुपासनमनुष्ठाय तदायुरवसाने तेनैव सहामृतत्वापुनरावृत्तिप्राप्तिपरं निर्बाधम्। तस्माद्धिरण्यगर्भलक्षण कार्यब्रह्मोपासकानेव नयत्यर्चिरादिरातिवाहिक गण इति ॥ ४१ ॥

अत्र बादरिमते परब्रह्मोपासकानां गत्यनुपपत्तिः । १ । स्थूलवस्तु मच लोकविशेष प्राप्यत्वानुपपत्तिः । २ । ब्रह्मशब्द परब्रह्मपरत्वविरोधि समानप्रकरणस्थ ब्रह्मलोकशब्दबहुवचनानुपपत्तिः । ३ । तथाभूत प्रजापतिसभावेश्म प्राप्तिप्रतिसन्धानानुपपत्तिः । ४ । परमात्ममुख्यवृत्त ब्रह्मशब्द गौणवृत्तिकल्पनं । ५ । अर्चिरादिगत पुरुषामृतत्वा पुनरावृत्तिश्रवण विलम्बितविषयत्वकल्पनं च । ६ । इत्येतेषडर्थाः स्वपक्षसाधकतया भिमताः प्राधान्येन, लोकशब्दगतिश्रवणाभ्या मर्चिरादिगतिशास्त्रस्य ब्रह्मोपासकविषयत्वव्यवच्छेदात्परस्य ब्रह्मणो मुक्तप्राप्यलोकविशेषानंगीकारएवतु मुख्यबीजं श्रुत्यन्यथानयनस्ये त्यवगम्यते ॥ ४२ ॥

अथ जैमिनिपक्षस्यां शिकप्रामाण्येन बादरिपक्षादुत्कृष्टतया द्वितीयपक्षत्वेन तत्पक्षमुपन्यस्यति षष्टादिसूत्रत्रयेण ॥ ४३ ॥

॥ सू ॥ परं जैमिनिर्मुख्यत्वात् ॥ ६ ॥ ( ४ - ३ - ११ ॥ )

परं - परब्रह्म , उपासीनमेवं नयत्यातिवाहिकगणइति जैमिनिराचार्यो मन्यते । मुख्यत्वात् - ब्रह्मगमयतीत्यादिष्वर्चिरादिमार्गगामि प्राप्यविषयस्य ब्रह्मशब्दस्य परस्मिन्नेव ब्रह्मणि मुख्यवृत्तत्वादिति षष्ठसूत्रार्थः ॥ ४४ ॥

इदमत्राभिप्रेतं-ब्रह्म गमयतीत्यत्र ब्रह्मपदश्रुतिप्रबलां गत्युपपत्तिसमानप्रकरणस्थ ब्रह्मलोकशब्दबहुवचन श्रवणप्रजापतिसभावेश्मादिप्राप्तिप्रतिसन्धानादि रूपं लिंगंदुर्बलं नहि बाधितुं क्षमते, ब्रह्मशब्दोहिपरस्मिन्नेव ब्रह्मणि मुख्यवृत्तः, तत्रापि नपुंसकलिंगोयं निरूढलक्षणयापि न चतुर्मुखपरोभवितुमर्हति, पुल्लिंगस्यैव तस्य तथाप्रयोगदर्शनात , नापि कारणे परब्रह्मणि मुख्यस्यास्य - अपरे कार्यब्रह्मणि स्वारसिकलक्षणया प्रवृत्तिर्युक्ता , विना मुख्यार्थबाधं तदयोगात् ; नच गत्यनुपपत्तिः प्रमाणम् - नित्यसिद्धस्यापि ब्रह्मणो यथावद्वेदनाय कालविशेषापेक्षावत् सर्वगतस्यापि तस्य प्राप्तये

देशविशेषापेक्षाया अपि न्यायानुगृहीतेन गतिशास्त्रेणैव दुरपह्नवं सिद्धे ब्रह्मोपासकानां तत्प्राप्तये देशविशेषंप्रति गमनस्योपपन्नतरत्वात्; ब्रह्मलोकान् गमयतीत्यत्र लोकशब्दबहुवचनश्रवणमपि नानुपपन्नम्, ब्रह्मगमयतीत्यनेन समानप्रकरणस्थेन प्राप्यस्य ब्रह्मणएकत्वे निश्चिते बहुवचनस्य अदितिः पाशानिति वदुपपत्त्या – निषादस्थपतिन्याय प्राप्तस्य कर्मधारयस्य ' एतं ब्रह्मलोकं न विन्दती' त्यादिष्विवात्रापि– निर्बाधत्वात्; मुक्तप्राप्यानां परब्रह्मासाधारण शुद्धसत्त्वद्रव्यमयाप्राकृतलोकानां बहूनां श्रुतिस्मृतीतिहासपुराणादि प्रमाणगणसिद्धानां दुरपह्नवतया षष्ठीतत्पुरुषाश्रयणेपि बाधकाभावाच्चेति ॥ ४५ ॥

षष्ठीतत्पुरुषसमासोपि समानप्रकरण श्रुत्यन्तरानुगुणएव, बृहदारण्यकोपनिषदि सप्तमाध्याये दशमब्राह्मणे– "यदावैपुरुषोस्माल्लोका त्प्रैती" त्यादिके - "सलोकमागच्छत्यशोकमहिमं तस्मिन् वसतिशाश्वतीस्समा" इत्यत्र ब्रह्मशब्दासमभिव्याहृत लोकशब्देन प्राप्यस्थानविशेषस्यैव विवक्षितत्वात्; प्रश्नोपनिषदि पंचमसत्यकामप्रश्ने पंचमखण्डिकायां – "ससामभिरुन्नीयते ब्रह्मलोकं सएतस्माज्जीवघनात्परात्परं पुरिशयं पुरुषमीक्षत" इत्यत्र ब्रह्मलोकशब्देन पुरुषमीक्षतइत्युक्त परमपुरुषेक्षितृस्थानस्यैव विवक्षितत्वाच्च ॥ ४६ ॥

'पुरुषमीक्षत' इति ब्रह्मप्राप्तेः पृथगभिहितत्वात्-प्रश्नोपक्रमे 'कतमंवावसतेन लोकं जयती' ति प्राप्यस्थानस्यैव जिज्ञासितत्वात्– उपसंहारेप्युक्तब्रह्मलोकविषयश्लोके 'ससामभिर्यत्तत्कवयोवेदयंत' इत्यनेन उक्तब्रह्मलोकस्य सूरिदृश्यवैष्णवपद रूपतायाः ख्यापितत्वाच्च नात्रत्य ब्रह्मलोकशब्दः कर्मधारयार्हः ॥ ४७ ॥

ईदृशश्रुत्यन्तर संवादमालोच्यैव षष्ठीतत्पुरुषस्यापि सम्भवमभिप्रेत्योक्तं भाष्यकारैरेतत्सूत्रभाष्ये – "परस्य ब्रह्मणः परिपूर्णस्य – सर्वगतस्य सत्यसङ्कल्पस्य स्वेच्छापरिकल्पिता स्वासाधारणा अप्राकृताश्च लोकानात्यन्तायनरूपा श्रुतिस्मृतीतिहास पुराणप्रामाण्यात्" इति ॥ ४८ ॥

अत्र श्रौतेर्थे यथाश्रुतिप्रतिपत्तव्यत्व न्यायेन परमपुरुषासाधारण लोकस्थापनं मुक्तप्राप्यपरब्रह्मासाधरण लोकविशेषानंगीकारस्य बादरिपक्षाभिप्रेत श्रुत्यन्यथानयनमुख्यबीजस्य व्युदासाय ॥ ४९ ॥

परब्रह्मासाधारण लोकानामप्राकृतत्वेच्छापरिकल्पितत्वयोरभिधानेन कालकाल्यदृष्टलोकसजातीयत्व बुद्ध्यापत्तमोक्षानित्यत्वशंकाव्युदस्ता, इच्छापरिकल्प्या प्राकृतलोकाना मिच्छासमकालं सर्वदैव सम्भवस्य दुरपह्नवत्वात् ॥ ५० ॥

तथाच प्रथमसूत्रविवक्षिता गत्यनुपपत्तिः, द्वितीयसूत्रविवक्षिता सु स्थूलवस्तुमय लोकविशेषप्राप्यत्वानुपपत्ति ब्रह्मशब्द परब्रह्मपरत्वविरोधि समानप्रकरणस्थ ब्रह्मलोकशब्दबहुवचनानुपपत्ति प्रजापतिसभावेश्मप्राप्तचनुसन्धानानुपपत्तिषु प्रथममनुपपत्तिद्वयं, तृतीयसूत्रविवक्षितम् परमात्ममुख्यवृत्त्या ब्रह्मशब्दगौणवृत्तिकल्पनं, चेत्येते बादरिपक्षार्थाः प्रत्याख्याताभवंत्यनेन सूत्रेण ॥ ५१ ॥

अत्र मुक्तप्राप्यपरमपुरुषासाधारण लोकसाधकतया विवक्षितं प्रमाणजालन्तूत्तरत्र प्रपञ्चयिष्यामः ॥ ५२ ॥

॥ सू ॥ दर्शनाच्च ॥ ७ ॥ ( ४ - ३ - १२ ॥ )

प्रथमसूत्रविवक्षित गत्यनुपपत्ति तृतीयसूत्रविवक्षित परमात्ममुख्यवृत्त्या ब्रह्मशब्दगौणवृत्तिकल्पन चतुर्थपंचम सूत्रविवक्षितार्चिरादिगत पुरुषामृतत्वा पुनरावृत्तिश्रवणविलम्बित विषयत्वकल्पनरूपाणां त्रयाणां बादरिप्रतितन्त्रार्थानां प्रतिक्षेपपरं सप्तमं सूत्रम् ॥ ५३ ॥

अस्यार्थः, दर्शनाच्च - शरीरान्मूर्धन्य नाड्यासमुत्क्रम्य देवयानेन गतस्यैव विदुषोऽव्यवधानेनैव परस्यैव ब्रह्मणः प्राप्ते श्श्रुत्यैव प्रतिपादनाच्च । परमुपासीनमेव नयत्यातिवाहिकगणइति जैमिनिराचार्यो मन्यतइति ॥ ५४ ॥

अत्र विवक्षिताश्रुतिश्च - छान्दोग्येदहरविद्याया मष्टमप्रपाठक-तृतीयखण्डचतुर्थखण्डिकागता , द्वादशखण्ड द्वितीयखण्डिकागता च - " एषसंप्रसादोस्मा च्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन-रूपेणाभिनिष्पद्यते " इत्येवं रूपा ॥ ५५ ॥

अत्र शरीरात्समुत्थायेति मूर्धन्यनाड्योत्क्रम्य देवयानेनोद्गमना-भिधानेन गत्यनुपपत्तितर्कानवकाशः ॥ ५६ ॥

ल्यप्प्रत्ययेना व्यवधानाभिधानेना र्चिरादिगतपुरुषामृतत्वा पुन रावृत्तिश्रवणविळम्बित विषयत्वकल्पनानवकाशः ॥ ५७ ॥

समानप्रकरणस्थस्यात्रत्यपरंज्योतिश्शब्दस्य मोक्षात्मक स्व-स्वरूपाभिनिष्पत्ति श्रवणानुरोधेन परब्रह्मपरताया अवर्जनीयतया - गतिश्रुतौ - ब्रह्मगमयतीत्यत्र परमात्ममुख्यवृत ब्रह्मशब्दगौणवृत्तिक-ल्पनानवकाशश्च ॥ ५८ ॥

उक्तश्रुतौ, अस्माच्छरीरात्समुत्थाय - शरीरात्मभावनां परित्य ज्येत्यर्थः , नत्वासनादिव समुत्थायेतीह युक्तमिति कुदृष्टिव्याख्यानं त्वनुपपन्नत्वाद्विवरण श्रुतिविरुद्धत्वाच्च हेयम् ॥ ५९ ॥

शरीरात्मभावनापरित्यागोह्यत्र न पदेनोपस्थाप्यते ॥ ६० ॥

उपरिष्टादुक्तश्रुत्युक्त शरीरसमुत्थानविवरणैदम्पर्यप्रवृत्तोषष्ठख ण्डे पंचमषष्ठखण्डिकयोः - " अथ यत्र तदस्माच्छरीरादुत्क्रामत्य थैतै रेव रश्मिभिरूर्ध्वमाक्रमते - स ओमितिवाहोद्वामीयते - स यावत्क्षिप्येन्म-नस्तावदादित्यं गच्छत्येतद्वैखलु लोकद्वारं विदुषां प्रपदनं निरोधो विदु षाम् ।१।" "तदेषश्लोकः- शतं चैकाचहृदयस्य नाड्यस्तासाम्मूर्धानमभिनि स्सृतैका। तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्याउत्क्रमणे भवंत्युत्क्रम-णेभवं ति " ।२ ।इत्येवंरूपयोः-विदुषश्शरीरान्मूर्धन्य नाड्योत्क्रमणं रश्मिभिरूर्ध्वं मा

क्रमणं - प्रणवेन ब्रह्मानुस्मरण पूर्वकं प्रयाणं अविलंबेनादित्योपल-क्षितेनार्चिरादिमार्गेण लोकविशेषगत्वामृतत्व प्राप्तिश्च स्पष्टतरं ह्य-भिधीयन्ते ॥ ६१ ॥

तदेतत्सर्वमभिप्रेत्यैतत्सूत्रभाष्ये भाष्यकारैः - "दर्शयतिच श्रुति-र्मूर्धन्यनाड्यानिष्क्रम्य देवयानेन गतस्य परब्रह्मप्राप्तिम्" इत्यभिधायोक्त श्रुतिरुदाहृता ॥ ६२ ॥

"तयोर्ध्वमायन्नमृतत्वमेती"ति विवरणश्रुतावायन्निति शतृप्रत्यये-नार्चिरादिमार्ग प्रस्थितानाममृतत्वप्राप्ते र्मध्ये लोकविशेषचिरकाल स्थितिलक्षणव्यवधानराहित्यं प्रतिपादयता - एष "सम्प्रासाद"इत्या-दिमूलश्रुतौ समुत्थायेति ल्यप्प्रत्ययार्थस्य विवृतत्वादुक्तश्रुते रर्चि रादिमार्गप्रस्थितानां मव्यवधानेनामृतत्व प्राप्तिप्रतिपादकत्वं दुरपह्न वम् ॥ ६३ ॥

एवमुक्त विवरणश्रुत्युपबृंहणभूतया याज्ञवल्क्यस्मृत्या - "ऊ-र्ध्वमेकःस्थितस्तेषां योभित्वा सूर्यमण्डलम् । ब्रह्मलोकमतिक्रम्य तेन याति परां गतिम् " इति तृतीयाध्यायसप्तषष्ट्यधिक शततमश्लोक रूपया - अर्चिरादिमार्गप्रस्थितानां मेकोत्पातेनैव चतुर्मुखलोकमप्य-तिक्रम्य तत ऊर्ध्वं गत्वा अमृतत्व प्राप्तिलक्षण परमगतिप्राप्तिं प्रति पादयन्त्या- तेषां न चतुर्मुखःप्राप्यः, नवा तत्र चिरकालं स्थित्वा महता विळम्बेन पश्चादमृतत्वप्राप्तिरिति प्रतीतेः; छान्दोग्योपनिषदि षष्ठप्रपाठके चतुर्दशखण्डे द्वितीयखण्डिकागतया- " तस्य तावदेव-चिरं यावन्नविमोक्ष्ये अथ सम्पत्स्यइति"इति सद्विद्याप्रकरणस्थश्रुत्या - सद्विद्यानिष्ठस्य मोक्षप्राप्तेर्देहपात मात्रावधिविळम्बप्रतीतेश्च , विदुष श्शरीरादुत्क्रान्तस्य लोकविशेष चिरकालवासलक्षणव्यवधानमन्तरेणै व ब्रह्मप्राप्तिः प्रस्फुटा ॥ ६४ ॥

एवम्मुण्डकोपनिषदि प्रथममुण्डके द्वितीयखण्डे - एकादशख-

ण्डिकायां – "तपश्श्रद्धे येह्युपवसन्त्यरण्ये शान्ताविद्वांसो भैक्षचर्यां चरन्तः । सूर्यद्वारेण तेविरजाःप्रयान्तियत्रामृत स्सपुरुषोह्यव्ययात्मा"– इत्येवं रूपायां सूर्योपलक्षितार्चिरादि मार्गगामिनां विदुषां अमृतत्वाव्ययात्मत्वविशेषित परमपुरुषतल्लोकावेव प्राप्यौ नतु द्विपरार्धावसानकाल विनाशि हिरण्यगर्भ तल्लोकाविति प्रस्फुटमेवाभिधीयते ॥ ६५॥

नचायं पुरुषो हिरण्यगर्भइति शक्यं वक्तुम् – प्रकरणविरोधादमृतत्वा व्ययात्मत्व श्रुतिविरोधाच्च ॥ ६६ ॥

अस्मिन् हि प्रकरणे एतत्खण्डिकातः प्रागण्डान्तर्वर्ति चतुर्मुखलोकान्त सर्वप्राप्याणामन्तवत्त्व मभिधाय, एतत्खण्डिकायां परविद्याकार्यानन्त स्थिरफलपरमपुरुषप्राप्ति प्रस्तुत्य , एतदुपरिष्टात – "परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायादि"त्यादिना पूर्वोक्तान्तवत्फल निन्दानुवादेन– "येनाक्षरं पुरुषं वेदसत्यं प्रोवाचतां तत्त्वतो ब्रह्मविद्यामि"त्यन्तेन – अनन्तस्थिरफलब्रह्मप्राप्तिफला दर्शितखण्डिकोक्तपरमपुरुषविषयणीपराविद्याहि विधीयते ॥ ६७ ॥

अमृतत्वाव्ययात्मत्व विशेषितोस्त पुरुषविशेषएवाहि अक्षरं पुरुषं वेदसत्यमिति पराविद्याविषयश्शब्दतो ऽर्थतश्च प्रत्यभिज्ञायते ॥ ६८॥

एवं तृतीयमुण्डके प्रथमखण्डे - "सत्यमेव जयते नानृतं सत्येन पन्थावितततो देवयानः । येनाक्रमन्त्यृषयो ह्याप्तकामायत्र तत्सत्यस्य परमं निधानम्"इति षष्ठखण्डिकायां देवयानगामिनां विदुषां सत्यशब्दवाच्य परब्रह्मसम्बन्धि परमपदमेव प्राप्य नापरब्रह्मस्थानमिति स्फुटतरंश्रूयते;सत्यशब्दवाच्यं परमेव ब्रह्मेतितु-"बृहच्च तद्दिव्यमचिन्त्यरूपं सूक्ष्माच्च तत्सूक्ष्मतरं विभाति । दूरात्सदूरे तदिहान्तिकेच पश्यत्स्विहैव निहितं गुहायाम् ॥ " इत्याद्युत्तरभागेनैव स्पष्टम् ॥ ६९ ॥

अर्चिरादिगामिना ममृतत्वापुनरावृत्तिप्राप्तेर्मध्ये लोकविशेष चिरकालस्थिति विलम्बेन पश्चाद्भाविस्त्वराहित्यं गतिश्रुतिष्वव्यवधानेन त

त्प्राप्तिप्रतिपादनादिव तादृशगतिप्रतिपन्न स्थानविशेषे तदीयस्थिते स्ततऊर्ध्वगमनमन्तरेण तत्रैव कालपरिच्छेदरहितायाः प्रतिपादना- दप्यवगम्यते ॥ ७० ॥

अर्चिरादिमार्गगतानां तद्गतिलब्धस्थानविशेषे कालानवच्छिन्ना- स्थितिश्च बृहदारण्यकोपनिषदि - सप्तमाध्यायदशमब्राह्मणे- "सलोक मागच्छत्यशोकमहिमं तस्मिन् वसतिशाश्वतीस्समाः ,, (१) इति श्रुत्या अष्टमाध्यायद्वितीयब्राह्मण पञ्चदशखण्डिकायां " तान् वैद्युतान्पुरुषोमा नवएत्य ब्रह्मलोकान् गमयतिते तेषु ब्रह्मलोकेषु पराः परावतो - वसन्ति तेषां न पुनरावृत्तिः " (२) इति श्रुत्याचप्रतिपन्ना ॥ ७१ ॥

एतदुक्तंभवति - अर्चिरादिगतिश्रुतिषु क्वचिद्ब्रह्मप्राप्तया, क्वचि ल्लोकविशेषप्राप्ति तत्रत्य कालानवच्छिन्नवासाभ्यां, क्वचिच्चताभ्याम पुनरावृत्ति सहिताभ्यां , क्वचिच्चामृतत्वप्राप्तयाच, गन्तॄणां चर्याभि रूपण विश्रमो दृश्यते । यदिपुनरत्र लोकप्राप्तिश्रवणं चतुर्मुखलोक विषयं अमृतत्वप्राप्तिश्रवणं तत्र चिरकालस्थितिविलम्बेन पश्चान्मो- क्षप्राप्तिविषयं चाभविष्यत् - तदा लोकविशेषप्राप्ति तत्रत्य कालान वच्छिन्न वासाभ्यां विश्रमः , अव्यवधानेन ब्रह्मप्राप्तयमृतत्व प्राप्तयोः श्रवणं, एकेनैव प्रयाणेन चतुर्मुखलोकमप्यतिक्रम्य परगतिप्राप्तिस्मर णञ्च नाभविष्यत् , अभविष्यच्च क्वचिच्चतुर्मुखलोक चिरकालस्थिति - तदनन्तरमोक्षप्राप्तयो रुभयोश्श्रवणमपि । प्रश्नोपनिषत्पंचमप्रश्न पंचमख ण्डिकायां " ससामभिरुन्नीयते ब्रह्मलोकम् , सएतस्माज्जीवघनात्परा त्परं पुरिशयं पुरुषमीक्षत " इति गन्तॄणामर्चिरादिगति लब्ध ब्रह्मलो कशब्दित स्थानविशेषएव परमपुरुषेक्षितृत्व श्रवणमपि नोपपद्यते । सर्वगतिश्रुतीनां मैककण्ठ्यंच न कथंचिदपि सम्भवति । तस्माद्गति श्रुतीनां - गन्तॄणां देशविशेषेव्यवधानेन साक्षात्परब्रह्म प्रापकत्वप रतैव दुरपह्नवासिद्ध्यतीति ॥ ७२ ॥

विदुषउत्क्रान्ति प्रतिषेधादिकं तु चतुर्थाध्यायद्वितीयपादे प्रागेव समाहितम् ॥ ७३ ॥

॥ सू ॥ नच कार्ये प्रत्यभिसन्धिः ॥ ८ ॥ ( ४ - ३ - १२ ॥ )

द्वितीयसूत्रविवक्षित प्रजापतिसभावेश्मप्राप्ति प्रतिसन्धानानुपपत्ति स्थूलवस्तुमय लोकविशेषप्राप्यत्वानुपपत्तिरूपयोः बादरिप्रतितन्त्रार्थयोः प्रतिक्षेपपरमष्टमं सूत्रम् ॥ ७४ ॥

अस्यार्थः, प्रत्यभिसन्धिश्च - प्रजापतिसभावेश्मप्राप्ति प्रतिसन्धानंच । न कार्ये - न कार्यब्रह्मविषयः , अपितु परब्रह्मविषयएवेति जैमिनिर्मन्यत इति ॥ ७५ ॥

इद मत्र तात्पर्यम् - छान्दोग्याष्टमप्रपाठके - चतुर्दशखण्डे - "प्रजापतेस्सभां वेश्मप्रपद्ये " इति श्रूयमानमार्चिरादिगतस्य प्रजापतिसभावेश्मप्राप्ति प्रतिसन्धानं न कार्यब्रह्महिरण्यगर्भ तत्स्थानप्राप्तिविषयम् , अपितु परब्रह्म तत्स्थानप्राप्तिविषयमेव , वाक्यशेषेतस्याभिसन्धातुः - " यशोऽहंभवामि ब्राह्मणाना " मित्यादिना सर्वाविद्याविलोपपूर्वक सर्वात्मभावानुसन्धान श्रवणात् कायप्राप्तुस्तदसम्भवात् , पूर्वत्र त्रयोदशखण्डे " अश्वइव रोमाणि विधूय पापंचन्द्रइव राहोर्मुखात्प्रमुच्य धूत्वाशरीरमकृतं कृतात्मा ब्रह्मलोकमभिसम्भवामी " त्यभिसम्भाव्यस्य - ब्रह्मलोकस्याकृतत्वश्रवणात् , सर्वबन्धविनिर्मोकस्य साक्षाच्छ्रवणाच्च । प्रजापतिशब्दश्च नात्र चतुर्मुखविषयः - स्ववाक्यएव पूर्वत्र - " आकाशोहवैनामरूपयो र्निर्वहिता ते यदन्तरातद्ब्रह्म तदमृतं स आत्मे " ति प्रकृतपरब्रह्मविषयत्वात् , प्रजापतिशब्दस्य पतिं विश्वस्येत्यादि श्रुतिसिद्धनिरुपाधिकपतित्व शालिनि परस्मिन्नेव ब्रह्मणि मुख्यत्वात् , " प्रजापतिश्चरति गर्भे अन्त " रित्यादिषु परब्रह्मण्येव प्रयोगदर्शनाच्च । तथाच ब्रह्मोपासकस्यार्चिरादिना गतस्य न प्रजापतिसभावेश्मप्राप्ति प्रतिसन्धानानुपपत्तिः - नापि स्थूलवस्तुमयलोकविशेष प्राप्यत्वानुपपत्तिः - अकृतं ब्रह्मलोकमिति नित्यस्य परब्रह्मासाधारणा प्राकृत-

लोकस्य श्रुत्यैव सिद्धस्य तर्केणानपनोद्यत्वात् लोकप्राप्तिश्रुतेस्तद्विषय स्वलम्भात् लोकसामान्यस्य क्षणक्षरणशील प्राकृतस्थूलवस्तुमयत्व नि- बन्धाभावाच्चेति ॥ ७६ ॥

इत्थ मर्चिरादिमार्गगामिना मुपासकानामव्यवधानेन लोकविशेषे परस्यैव ब्रह्मणः प्राप्तौ प्रमाणगणैर्दुरपह्नवं निश्चितायां चतुस्त्रिंशवा क्योदाहृता श्रुतिस्सप्तत्रिंशवाक्योदाहृता स्मृतिश्च न तद्विरोधेनोदेतु- मभवतः ॥ ७७ ॥

चतुस्त्रिंशवाक्योदाहृतश्रुतेश्चायमर्थः; तेसर्वे- उपासकाः । ब्रह्मलो केतु - ब्रह्मैव लोको ब्रह्मलोकः, कर्मधारयोऽत्र निषादस्थपतिन्या यात् , तस्मिन् - उपास्ये परब्रह्मणि । वर्तमानाः । परान्तकाले - परः-अन्तिमः, योऽन्तकालः - देहावसानसमयः, तस्मिन् - प्रारब्धकर्मभो- ग हेतुप्राकृतचरमदेहावसान समये । परामृतात् - परस्माद्ब्रह्मणउपा सनप्रीताद्धेतोः । परिमुच्यन्ति - सर्वस्माद्बन्धाद्विमुच्यन्तइति ॥ ७८ ॥

सप्तत्रिंशवाक्योदाहृतास्मृतिस्तु - नैतल्लोकनिष्पन्नविद्यार्चिरादि- मार्गप्रस्थितविद्वद्विषया, किन्तु पुण्यकर्मविशेषेणहिरण्यगर्भलोकं प्रा प्तानां - ' तदुपर्यपि बादरायण ' इति न्यायेन तत्रैव निष्पन्नविद्यानां ग- तिप्रकारविषया ॥ ७९ ॥

अस्यास्स्मृतेरयमर्थः; तेसर्वे पुण्यकर्मविशेषेण हिरण्यगर्भलोकं प्राप्ताः पुरुषविशेषास्सर्वे । ब्रह्मणासह - चतुर्मुखेनसाकं । कृतात्मानः- तस्यैव लोके शिक्षितमतयः, अधिगतविद्यास्सन्तइति यावत् । परस्य- चतुर्मुखायुषः । अन्ते । प्रतिसंचरे- महाप्रळये । संप्राप्तेसति । परं पदं- प्रविशन्तीति ॥ ८० ॥

नच दर्शितश्रुतिस्मृत्योर्भिन्नविषयत्वं नोचितम् , तद्गतक कतिपय- शब्दतउभयोरेक विषयतायाः स्वरसतः प्रत्यभिज्ञापनादिति वाच्यम् ; ते- ब्रह्मलोकेत्विति श्रुतौ - ते सर्वइत्यनेन " वेदान्तविज्ञानसुनिश्चितार्था स्स

न्यासयोगाद्यतयश्शुद्धसत्वा " इति तत्खण्डिकापूर्वार्धोक्तानां मत्रैव लोके सुदृढपरिनिष्पन्न विद्यानामुपासकानामेव ग्रहणेन " ब्रह्मणास्स हते सर्व " इति स्मृतौ चतुर्मुखेन साकं तल्लोकेऽधिगत विद्यानामेवा धिकारिणां ग्रहणेनच तयोर्भिन्नविषयत्वस्यैवावगमेन ब्रह्मलोकपरान्त-कालादि शब्दानां पूर्वोक्तरीत्या स्वरसतएव तत्तदानुगुण्यसम्भवाच्चो क्तस्मृत्या श्रुतेस्समानविषयत्व प्रत्यभिज्ञापकत्वायोगात् ॥ ८१ ॥

तैत्तिरीयोपनिषदि षष्ठप्रश्ने दशमानुवाके " यस्मात्परंनापरमस्ति किंचिद्यस्मान्नाणीयो नज्यायोस्तिकश्चित् । वृक्षइवस्तब्धो दिवि ति-ष्ठत्येक स्तेनेदं पूर्णं पुरुषेण सर्वं " मिति विंशखण्डिकायां सर्वान्तः-द्युशब्दिते परमपदे सर्वव्याप्तस्य निस्समाभ्यधिकस्य कस्यचित्पुरुष विशेषस्य सद्भावं प्रस्तुत्य तादृशपुरुषप्राप्तिः कस्मिन्देशे भवति के-नोपायेन केषामधिकारिणां भवतीत्याशंकायां " न कर्मणा न प्रजया धने न त्यागे नैके अमृतत्वमानशुः । परेणनाकं निहितं गुहायां विभ्राजते-यद्यतयोविशन्ति ॥ " इत्येकविंशखण्डिकायां तादृशपरमपुरुषप्राप्तेरमृ तत्वलक्षणायाः परमपदाख्यदेशविशेषभावितां कर्मप्रजाधनानपेक्षतां त्यागसाध्यतां यतिशब्दिताधिकारि विशेषाधिगम्यमानतांच प्रतिपाद्य, ततः – " वेदान्तविज्ञानसुनिश्चितार्था स्संन्यासयोगाद्यतयश्शुद्धसत्वाः । ते ब्रह्मलोकेतुपरान्तकाले परामृतात्परिमुच्यन्ति सर्वे ॥ " इति द्वा विंशखण्डिकायां तादृशाधिकारिणां स्वरूपस्य तेषां पूर्वप्रस्तुतपरमपु रुषप्राप्तिप्रकारस्यचैव प्रतिपिपादयिषितत्वेनास्मिन् प्रकरणे पुण्यकर्म-णां चतुर्मुखलोकप्राप्ति तत्रत्योपासनानुष्ठान तदनन्तरमोक्षप्राप्ति प्रसं-गएव न संगतः ॥ ८२ ॥

ईदृशानुपपत्ति मालोच्यैव भाष्यकारैरेतदधिकरण वेदान्तसार-दीपयोरुक्तश्रुतिर्यथोक्तरीत्यैव व्याख्याता ॥ ८३ ॥

नहि खलवत्रैव वेदान्तविज्ञानसुनिश्चित तत्त्वहितपुरुषार्थानामसं ग कर्मयोगानुष्ठानादि लक्षणसंन्यासयोगेन विशुद्धान्तःकरणाना माप्र

याण मुपासनादिलक्षणाभीप्सित परमपुरुषार्थप्राप्तियतनशीलाना म र्चिरादिमार्गप्रस्थिताना मधिकारिणां हिरण्यगर्भलोकप्राप्ति तद्वास त त्रस्थभोगानुभवोपासनादिकं संगतं भवति, तेषां देहावसानसमयएव सकलसुकृतदुष्कृत हानस्य सांपरायाधिकरणसिद्धतया मध्ये चतु र्मुखलोके ब्रह्मप्राप्तिव्यवधायक भोगाद्यसम्भवात, स्वोपासनेनाप्रेप्सि- त फलप्राप्तौ तत्क्रतुन्यायविरोधात, सएनान् ब्रह्मगमयतीत्यादिकायाः तदानीमेव ब्रह्मप्राप्तिश्रुतेर्विरोधाच्च ॥ ८४ ॥

एवं वेदान्तविज्ञानसुनिश्चितार्था इत्यादिविशेषणवत्तया श्रुताना मधिकारिणां कृतात्मत्वस्या भिव्यक्ततया, कृतात्मना मनित्यचतुर्मुख- लोकप्रहाणेन नित्यस्य परमपदस्यैवाधिगन्तव्यतायाः दर्शितस्मृताचे व कृतात्मानः प्रविशन्ति परं पदमित्यनेन स्पष्टत्वाच्च, तेब्रह्मलोकेत्वि- ति श्रुतौ ब्रह्मलोकशब्दस्य न तादृशाधिकारिप्राप्यतयाः नित्यचतुर्मु- खलोकप्रतिपादकत्वं सम्भवति ॥ ८५ ॥

अतएवहि छान्दोग्यश्रुतौ “ धूत्वाशरीरमकृतं कृतात्मा ब्रह्मलोकम भिसम्भवामी”तीहैव सतः कृतात्मनोभिसम्भाव्यस्य ब्रह्मलोकस्याकृ- तमिति नित्यत्वं चतुर्मुखलोकाद्व्यावर्तकमभिहितं ॥ ८६ ॥

इत्थमुक्तश्रुतेः प्रकरणबलेनानैव वेदान्तविज्ञानसुनिश्चितार्थत्वादि विशेषणविशिष्टाधिकारि विशेषविषयत्वादेव अस्मिन्नधिकरणे बादरि पक्षस्यैव सिद्धान्तरूपताभिमानिभिः परैरपि मुण्डकोपनिषत्तृतीय मु- ण्डकद्वितीयखण्डषष्ठखण्डिकाया मुक्तायामेव श्रुतौ पाठभेदत उक्त प्रकारेण किंचिदानुपूर्वीभेदेनच पठ्यमानायां ब्रह्मलोकपरान्तकालशब्द- योरुक्तरीत्यैव परब्रह्मचरमदेहावसानपरतयैव व्याख्यानं कृतम्, न तु चतुर्मुखलोकतदायुरवसानकालपरतया ॥ ८७ ॥

तत्रत्यपाठभेदस्तु “ तेब्रह्मलोकेषु परान्तकाले परामृताः परि- मुच्यन्तिसर्वे ” इत्येवं रूपः ॥ ८८ ॥

इदं पुनरत्र बोध्यम्–यथा ब्रह्मलोकान् गमयतीत्यत्र ब्रह्मलोकशब्दस्य अदितिः पाशानितिवद्बहुवचनोपपत्त्या कर्मधारयसमासम् , अप्राकृतलोकानामपि बहूनां प्रमाणप्रतिपन्नतया तत्पुरुषसमासञ्चाश्रित्य द्विविधापि योजना परं जैमिनिरिति सूत्रे भाष्यकारैर्भाषिता; तथेहापि द्विविधा योजना सम्भवति; परान्तकालेतु, ब्रह्मलोके - परब्रह्मासाधारणाप्राकृतनित्यविभूतौ। अवान्तरलोकबहुत्वे ऽप्यप्राकृतविभूत्यैक्य विवक्षयैकवचनं, पाठान्तरेतु लोकबहुत्वाभिप्रायेण बहुवचनं। परामृतात्–परममृतं ब्रह्मप्राप्य, परामृताइति पाठेतु परममृतंब्रह्मप्राप्यतया येषामस्ति ते परामृताः – परं ब्रह्मप्राप्ताइत्यर्थइति यथायथं योजनाद्वयेपि पदानामानुगुण्यं बोध्यम्। एकयोजनायाः ब्रह्मलोकान्गमयतीत्यत्रोक्तन्यायेन योजनान्तरोपलक्षणत्वेन दर्शितयोजनाद्वयमभिप्रेतमेव भाष्यकृतां। "धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसम्भवामि" "ब्रह्मलोकान् गमयति सलोकमागच्छत्यशोकमहिमं सप्रजापतिलोकं सब्रह्मलोकं ससामभिरुन्नीयते ब्रह्मलोकं" इत्यादिश्रुत्यन्तरेषु अर्चिरादिगामिनां विदुषामप्राकृतनित्यलोकस्य प्राप्यतया ब्रह्मलोकशब्देन प्रतिपादनानुगुणाच्चेयं द्वितीययोजनाप्यभिप्रेतैव भाष्यकृतां। इत्थञ्श्रुत्यन्तरसंवादानुरोधेनैव ब्रह्मलोकान्गमयतीत्यत्र द्विविधयोजनाया एव स्वरसत्वात्तस्य स्थलान्तरस्य ब्रह्मलोकशब्दयोजना द्वयोपलक्षणत्वादिति ॥ ८०॥

नचोक्तस्मृतौ - कृतात्मानस्ते सर्वे ब्रह्मणासहपरस्यान्ते प्रतिसञ्चरे संप्राप्ते परं पदं प्रविशन्तीति योजना, इत्थञ्चोक्तस्मृत्यनुरोधेन सर्वेपि विद्वांस इहैवानुष्ठित परविद्याअपि विद्यानिष्पत्तिशेषं चतुर्मुखलोकं चिरकालस्थित्या प्राप्य चतुर्मुखेन साकं महाप्रळयलक्षण तदायुरवसानकालएव परं पदं प्रविशन्तीत्यभ्युपगमे का क्षतिरिति वाच्यं 'कृतात्मा ब्रह्मलोकमभिसम्भवामि' 'कृतात्मानः प्रविशन्ति परंपद'मिति श्रुतिस्मृत्योःस्वरसतः प्रतिपन्नस्य कृतात्मतायाः परमपदप्राप्ति हेतुत्वस्यापवादायोगात , अर्चिरादिपथगामिनां विदुषां शरीरावसानएव सकलकर्मविधूननस्य चतुर्मुखलोकमप्यतिक्रम्या व्यवधानेन परब्रह्मप्राप्तेश्च श्रुतिस्मृतिप्र-

तिपन्नतायाः प्रागेव निरूपिततया तद्विरोधस्य दुरण्हवत्वात्, मध्ये चिर कालं चतुर्मुखलोकस्थिति हेतुकर्माभावेन सर्वेषां विदुषामाधिकारिक-चतुर्मुखेन साकमाप्रळयावस्थानासम्भवाच्च ॥ ९० ॥

"तस्य तावदेव चिरं यावन्नविमोक्ष्ये अथ संपत्स्यइती " ति छान्दोग्यषष्ठप्रपाठक चतुर्दशखण्ड द्वितीयखण्डिकागता श्रुतिर्हि सद्विद्यानिष्ठस्य मोक्षप्राप्ते देहपातमात्रावधि विळम्बं प्रतिपादयन्ती विदुषांमध्ये चतुर्मुखलोकआप्रळयावस्थान लक्षणविळम्बविरहं विशदयतिं ॥९१॥

तस्मादविदुषामेव पुण्यकर्मविशेषेण हिरण्यगर्भलोकं भेजुषां - तत्रैवाधिगतविद्यानां प्रारब्धकर्मफलभूत हिरण्यगर्भसायुज्यानुभवाव साने तेनैवसाकं मोक्षस्थानप्राप्तिं प्रतिपादयति सैषा स्मृतिरिति न तया दर्शितश्रुतेः कथंचिदपि समानविषयता सुवचा ॥ ९२ ॥

तथाचोक्तस्मृते रर्चिरादिवर्त्मना हिरण्यगर्भोपासकानां तल्लोकप्राप्तिप्रतिपादकत्वादर्शनात्, प्रस्तुतार्चिरादिगतिश्रुतिषु गन्तॄणां हिरण्यगर्भतल्लोकव्यावृत्त परब्रह्मलक्षण परमपुरुषतल्लोकयोरेव प्राप्यत्वप्रतिपादनदर्शनाच्च, परब्रह्मोपासीनानेव नयत्यर्चिरादिरातिवाहिकगणइति जैमिनेराशयः ॥ ९३ ॥

इदमत्र षष्ठादित्रिसूत्र्या निष्पन्नं जैमिनितात्पर्यम्, परविद्याप्रकरणेष्वेवार्चिरादिगतिश्रवणात्, गतिश्रुतिषुच गन्तॄणां प्राप्यस्य कार्यब्रह्मतल्लोकादि व्यावृत्तैः परब्रह्म तल्लोकाद्यसाधारणैरनन्यथासिद्धै मुख्यवृत्तैरेव शब्दैर्निर्देशाच्च, परब्रह्मोपासकाएवार्चिरादिमार्गेण गन्तारः; परमेवच ब्रह्मतेषां प्राप्यं, न कार्यं हिरण्यगर्भादिलक्षणं ब्रह्मेतिनिश्चीयते ।

नच परब्रह्मासाधारणशब्दानां कार्यब्रह्मणि लाक्षणिकत्वकल्पनं युक्तम्, अनन्यथासिद्धबीजाभावात् । नच गमनानुपपत्तिः प्रमाणम्, सर्वगतस्य नित्यसिद्धस्यच ब्रह्मणो वेदनस्य " तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसा नाशकेने" त्यादि शा

ब्राह्मणाश्रमधर्मशौचाचार देशकालादिसापेक्षत्ववत्सर्वगतत्वेपि तस्य तादृशवेदनफलभूत निश्शेषाविद्यानिवृत्तिपूर्वकप्राप्ते विशिष्टदेशगतिसापेक्षत्वस्यापि गतिशास्त्रादेव सिध्या गमनस्यानुपपन्नता विरहात् ।

नचाविद्याया अनिवृत्तौ कुत्रापि न ब्रह्मप्राप्तिः, निवृत्तौचात्रैव सा संम्भवितुमर्हति, सर्वगतत्वाद्ब्रह्मणः; अविद्यानिवृत्तिश्च सत्यां सामग्र्यामत्रैव सम्भवतीति कथमुपपन्नं ब्रह्मप्राप्तये क्वचिद्गमनमिति वाच्यं । गतिशास्त्रेण देशविशेषे ब्रह्मप्राप्तिप्रतिपादकेनैव निश्शेषाविद्यानिवृत्त्यसम्भवे प्रतिपाद्यमाने तर्केणैव तत्सम्भवोपपादनायोगात् । नहिखलु लिंगं श्रुतिं बाधितुं प्रभवति, लोके सर्वभावानां स्वाभाविकस्वस्वकार्योत्पादन शक्तिवैचित्र्यस्य दुरपह्नवतयाऽग्निजलादीनां तत्तद्वस्तूनामौष्ण्यशैत्य शुद्धत्वाशुद्धत्व शुद्धिकरत्वाशुद्धिकरत्वादि शक्तिवैचित्र्यवत् प्रकृति मण्डलस्याविद्योत्पादनशक्तिः परमव्योमाख्यदेशविशेषस्य तन्निवर्तनशक्तिश्च प्रमाणसिद्धेनापह्नवमर्हतः । स्वाभाविकविचित्रभावशक्तीनां तर्केण दुरपह्नवताच पराशरेणाप्युक्ता विष्णुपुराणप्रथमांशतृतीयाध्याये - "शक्तयस्सर्वभावानामचिन्त्य ज्ञानगोचराः । यतोऽतोब्रह्मणस्तास्तु सर्गाद्याभाव शक्तयः ॥ भवन्तितपतां श्रेष्ठ पावकस्य यथोष्णता " इति ॥ किञ्च विशुद्धतरेणापि सलिलेन पंकिलस्य वस्तुनः पंकमध्यगस्य सतोमलप्रक्षाळनवद्विद्ययापि संसारिणो जन्तोरविद्योत्पत्त्याकरप्रकृतिमण्डलस्थस्य सतो निश्शेषाविद्याकल्मष निवर्तनमसम्भावितम् , अनन्तभगवान् परमकारुणिकः परब्रह्मपुरुषोत्तमोनारायणः यथापंकिलं वस्तुप्रक्षाळयितुकामः पंकाद्बहिर्निष्पंकं पंकहरंच विशुद्धतीर्थसलिलंनीत्वा प्रक्षाळयति तद्वदुपासनप्रीत उपासीनानातिवाहिकैरर्चिरादिभिः प्रकृतिमण्डलादूर्ध्वं तत्सम्बन्धविधुरं तत्सम्बन्धगन्धासहिष्णुञ्च प्रदेशविशेषंनीत्वा निश्शेषाविद्याकल्मषं प्रक्षाळ्य स्वात्मानंप्रापयतीति विदुषां ब्रह्मप्राप्तये गमनमुपपन्नं । अपिचानुभूयमानातिरोहित तत्तद्वस्तुसन्निकर्षविशेषस्यैव तत्तद्वस्तुप्राप्तिरूपत्वा त्तथाविधसन्निकर्ष विशेषलक्षणायाः विशदतरब्रह्मप्राप्ते स्तत्स्वरूपाच्छादक वितत सततपरिणामप्रकृतिमण्डले ऽसम्भावितया विदुषां ब्रह्मप्राप्तये प्रदेशविशेषगमनाभि

धान मुपपन्नतरमेव। प्रकृतेः परस्ताद्व्यतिरोहितं ब्रह्मसमन्ततोदीप्तमिति श्रूयते। यथोक्तं छान्दोग्ये तृतीयप्रपाठके त्रयोदशखण्डे- "अथ यदतः परोदिवोज्योतिर्दीप्यते विश्वतः पृष्ठेषु सर्वतः पृष्ठेष्वनुत्तमेषूत्तमेषु-लोकेष्वि" ति। मुण्डकोपनिषदि द्वितीयमुण्डके द्वितीयखण्डेच "यस्सर्वज्ञस्सर्वविद्यस्यैषमहिमाभुवि । दिव्ये ब्रह्मपुरेह्येष व्योमन्यात्माप्रतिष्ठित" इत्यारभ्य - "हिरण्मये परे कोशे विरजं ब्रह्मनिष्कलम्। तच्छुभ्रं ज्योतिषां ज्योति स्तद्यदात्मविदो विदुः ॥ न तत्र सूर्यो भाति नचन्द्रतारकं नेमाविद्युतो भान्ति कुतोयमग्निः । तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाती" त्यन्तंच। पुरुषसूक्तेच श्रुतम्- "वेदाहमेतं पुरुषं महान्तमादित्यवर्णतमसःपरस्ता" दिति । अतः प्रकृतिमण्डले ब्रह्मणस्तिरोहितत्वा दुपरिष्टात्समन्ततो दीप्तत्वाच्च तत्प्राप्ये तमसः परस्ताद्गमनमावश्यकमेव । अतएव विद्वान् शरीरान्मूर्धन्य नाड्यानिष्क्रम्य देवयानेनोर्ध्वगत्वा तमसः परस्तात्समन्ततोदीप्तं परब्रह्माख्यं परं ज्योतिः प्राप्यैव स्वस्वरूपाविर्भावलक्षणमोक्षं प्राप्नोतीति स्पष्टमुच्यते छान्दोग्ये- "एष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परंज्योतिरुपसम्पद्य स्वेनरूपेणाभिनिष्पद्यत" इति। अतएवच तैत्तिरीयोपनिषदानन्दवल्ल्यां - "ब्रह्मविदाप्नोति पर " मित्युपक्रमाभिहित प्राप्तिविशदीकरणार्थं "अथातोनुप्रश्ना "इति प्रश्नानुपक्षिप्य,"उताविद्वानमुंलोकंप्रेत्य, कश्चनगच्छती" त्यनेन ब्रह्मविदस्माल्लोकात्प्रेत्यामुं लोकं गच्छतिनवेति परिचोद्य, अन्तेच "सयएवं वित्, अस्माल्लोकात्प्रेत्य । एतमन्नमयमात्मानमुपसंक्रामती" त्यादिकया ब्रह्मोपासीनस्सर्वोपि विद्वानस्माल्लोकात्प्रेत्यान्नमयादि समष्टिव्यष्टिविभूतिकं निरतिशयानन्दं परमात्मानं - प्राप्नोतीति पूर्वोक्तप्रश्नोत्तराभिधानपरया सर्वेषां विदुषां स्थानविशेषे ब्रह्मप्राप्तये ऽर्चिरादिगतिमत्त्वं प्रस्फुटमेवाभिहितम्। इत्थंच 'सत्यंज्ञान' मित्यादिश्रुत्या यो गुहायां निहितं ब्रह्मवेदसपरमे व्योमनि सर्वान्कामान् समश्नुत इति प्रतिपादयन्त्या अस्मिन्लोके निजहृदये ब्रह्मोपासकस्य परमव्योमाख्यदेशविशेषे भोगप्राप्त्यभिधानेन उपासकोऽस्माल्लोकात्परमपदं गत्वा ब्रह्मप्राप्नोतीत्युक्तं भवतीति ह्युदाहृतोदीच्य विव

रणेन निष्पद्यते । तस्माद्देशविशेषावच्छिन्नातिरोहित परब्रह्मसन्निकर्ष विशेषलक्षण ब्रह्मप्राप्तये ब्रह्मविदां गमनमवर्जनीयमिति सिद्धम् । 'ब्रह्मलोकानुगमयती'त्यत्र बहुवचनलोकशब्दश्रवणमपि ब्रह्मगमयतीत्यत्र ब्रह्मशब्दस्य न हिरण्यगर्भादिलक्षणकार्य ब्रह्मपरत्वोत्तम्भकं, ब्रह्मलोकानित्यत्र निषादस्थपतिन्यायेन स्वतः प्राप्तस्य कर्मधारयस्याश्रयणे द्वयोरपि श्रुत्योःस्वरसतएव सम्भवत्यैककण्ठ्ये षष्ठीतत्पुरुषाश्रयणेन परमात्ममुख्यब्रह्मशब्दस्य स्थलद्वयेपिकार्यब्रह्मणि लक्षणायास्तत्पुरुषस्थले लक्ष्यमुख्यलक्षणान्तरस्यच कल्पनाया अन्याय्यत्वात् , समानप्रकरणेनार्थैकत्वे निश्चिते बहुवचनस्य 'अदितेः पाशान्' इतिवदुपपत्तेः, परब्रह्म साधारणाना मप्यनेकेषामप्राकृतानां लोकानां श्रुतिस्मृतीतिहासपुराणादिप्रमाणगण सिद्धतया ब्रह्मलोकानित्यत्र तत्पुरुषाश्रयणेपि द्वयोरविरोधेनैव निर्वाहात् , प्रत्युत समानप्रकरणस्थ नानाश्रुतिघटकपरमात्मवाचकशब्द समानकण्ठस्य ब्रह्मगमयतीत्यत्र ब्रह्मशब्दस्य चतुर्मुखपरत्वएव विरोधाच्च । लोकदृष्टयाऽस्थूल पदार्थविजातीया आभ्यन्तरसूक्ष्मस्वात्मपदार्थाः श्रुतिसिद्धाः स्वस्वानुभवमात्र साक्षिका यथा - नापलपितुं शक्याः , तथैव विद्याप्रकरणेषु मुक्तभोग्यतया प्रतिपाद्यमानाः कालानुगुणपरिपाक प्राकृतसकलपदार्थ विजातीया स्तर्क-पदवीदवीयांस ईश्वरनित्यमुक्तानां केवलेच्छानुगुणपरिपाका भोग्य-भोगोपकरण भोगस्थानरूपाश्शुद्धसत्वमया अप्राकृता अपि पदार्था नापलपितुं शक्याः, अनाघ्रातदोषगन्धापौरुषेय वेद तन्मूलस्मृतीतिहासपुराणादि रूपशास्त्रप्रामाण्यादेव । ईश्वरोपिहि शास्त्रैकप्रमाणको निरधारिशारीरकशास्त्रे । अमीषांच पदार्थानां कालकृतविनाशव्यवस्था वैधुर्येण सर्वदैवमुक्तेच्छानुगुण परिपाकतया न कदाचिन्मुक्तैश्वर्यहानिरिति नमोक्षानित्यत्वप्रसंगः । अतएवहि श्रूयते छान्दोग्येष्टमप्रपाठके द्वितीयखण्डे-" सयदि पितृलोककामो भवती" त्यादि । नच परिच्छिन्नत्वमनित्यत्वनियतमिति वाच्यम् ; नियामकाभावात् । अणुपरिमाणतया शास्त्रसिद्धेषु प्रत्यगात्मसु व्यभिचाराच्च । इत्थंच गतिश्रुतिषु ब्रह्मलोक शब्दस्य अर्चिराद्यातिवाहिक नीयमानपुरुष प्राप्यविषयस्य

ल्लोकपरत्वेपि न चतुर्मुख लोकपरता, किन्तु परमपुरुषा साधारण प्रकृतिमण्डल बहिर्भूत परमाकाशविषयतैव, तस्यैव चरमप्राप्यस्थान त्वात , परब्रह्मोपासकस्या र्चिरादिपथगामिन स्तत्क्रतुन्यायविरोधेन परमप्राप्यस्थानतया चतुर्मुखलोक प्रतिपादनायोगाच्च । यद्यप्यर्चिरादि मार्गगामिनां चतुर्मुखलोके चिरंस्थित्वाऽ धिगतविद्यानां पश्चाच्चतुर्मुखेन साकं तदायुरवसाने परमपदप्राप्तिस्वीकारेण तेषां श्रूयमाणामृतत्व प्राप्तिच पुनरावृत्ति सांगत्यसमर्थनम् । तदसाधु । गतिश्रुतिषुक्वापि कुत्रचि त्स्थानेआमळयंविलंघ्यततस्तदूर्ध्वस्थानान्तरप्राप्तिप्रतिपादनादर्शनात,मार्ग प्राप्तचरमस्थानविशेषएवा पुनरावृत्त्यमृतत्वप्राप्तयो रव्यवधानेनैव संभ वप्रतिपादनात्, तेषां प्रथमं हिरण्यगर्भलक्षणकार्यब्रह्मोपासकत्वस्य पश्चा दर्चिरादिवर्त्मना हिरण्यगर्भलोकं गत्वा तत्राधिगत परविद्यत्वस्यच क्वापि प्रतिपादनादर्शनात , प्रत्युत परविद्याप्रकरणेन परब्रह्मोपासक त्वस्यैवावगमात्, एष संप्रसादइत्यादि श्रुतौ तद्विवरणभूतायां 'अथ यत्रैतदस्माच्छरीरा दुत्क्रामती' त्यादिकायां 'तयोर्ध्वमायन्नमृतत्वमेती'त्यन्तायांच श्रुतौ, तदुपबृंहणभूतायां 'ऊर्ध्वमेकस्थित' इत्यादिस्मृतौच शरीरा न्मूर्धन्य नाड्या निष्क्रम्य देवयानेन गच्छतो विदुष एकप्रस्थानेनैव चतुर्मुखलोकमप्यतिक्रम्य परमस्थानेऽव्यवधानेनैवा मृतत्वा पुनरवृत्तिसिद्धिं प्रतिपादयन्त्यां यथोक्तस्य कृत्स्नस्यार्थजातस्य प्रस्फुटमेवाभिधानाच्च । तेब्रह्मलोकेत्वित्यादिश्रुतिश्च स्वप्रकरणानुगुण्या दुदाहृत सकलश्रुत्यैककण्ठ्याच्च परब्रह्मोपसकानामेव विद्या योनि चरमशरीरावसानकाले सर्वबन्धविनिर्मोकाभिप्रायैव , ब्रह्मलोक इत्यस्य कर्मधारयत्वे ब्रह्मण्युपास्ये वर्तमाना इत्यर्थस्य तत्पुरुषत्वे पर मपदइत्यर्थस्यच संभवात , परान्तकालइत्यस्य अन्तकालेच मामे मेवेति गीताप्रयोगाद्यानुगुण्येन चरमशरीरावसानकाल इत्यर्थसम्भ वाच्च । ब्रह्मणासहेत्यादिस्मृतिस्तु पुण्यकर्मविशेषेण हिरण्यगर्भसायुज्यं गतानां तत्रैवाधिगतविद्यानां तेनैव साकं तदायुरवसाने परम

पदप्राप्तिपरा । नपुनरनयो श्श्रुतिस्मृत्योर्हिरण्यगर्भोपासकाना मर्चि रादिगत्या तल्लोकप्राप्तिप्रतिपादनं किंचिदपि दृश्यते । अर्चिरादिगतिश्रुतीनां सर्वासां परविद्याप्रकरणस्थत्वात् तादृशगत्या प्रवृत्तानां शरीरावसानकालएव सकलकर्मधूननस्य भोक्तव्यकर्मविशेष शालिनां तादृशगत्यभावस्यच निर्णयाच्च तादृशगते र्हिरण्यगर्भोपासकविषयत्वं तादृशगत्यागतानां मध्ये लोकविशेषे कर्मफलभोगविशेषेण चिरकाल विलम्बितत्वं वा नहि कल्पयितुं शक्यं । एतेनोक्तश्रुतिस्मृत्योः अत्रैवाधिगतपरविद्यानामपि विदुषां अर्चिरादिगत्या चतुर्मुखलोकं प्राप्य तत्प्रळयं स्थित्वा लब्धविद्यापरिपाकविशेषाणामेव चतुर्मुखेन साकं पश्चा त्परब्रह्मप्राप्ति परत्वशंकापि दूरोत्सारिता । तत्क्रतुन्यायेन परब्रह्मोपासकानां चतुर्मुखलोके भोक्तव्यभोगशेषाभावेन तत्र विळंबे कारणाभावाच्च । एवं प्रजापते स्सभां वेश्म प्रपद्य इत्यभिसन्धानमपि परब्रह्मविषयमेव । आकाशो हवै नामरूपयो र्निर्वहितेति पूर्वप्रकृतपरब्रह्मविषयत्वा त्प्रजापतिशब्दस्य । प्रजापतिशब्दोहि निरुपाधिकः पति विश्वस्यात्मा...निरुपाधिकजगत्पतौ परब्रह्मण्येव मुख्यः । प्रजापति श्चरति गर्भे अन्तरित्यादिषु परमात्मविषयः प्रयुक्तश्च उत्तरवाक्यशेषे । प्रजापतिसभावेश्मप्रपन्नस्यास्य यशोहं भवामि ब्राह्मणाना मित्यादिना सर्वविद्या विशोकपूर्वक सर्वात्मभावाभिसन्धानात , पूर्वत्र अश्व इव रोमाणीत्यादिश्रुतौ अस्यैव प्रस्थानदशायाम् सर्वपापविधूननपूर्वक मभिसंभाव्यतयानुसंहितस्य ब्रह्मलोकस्या कृतत्वानुसन्धानअणात , प्रस्थानदशायां प्राप्यत्वेनानुसंहितस्य प्राप्तिदशायां प्राप्तत्वेनानुसंहितस्य चैकतया आवश्यकतया अकृतं कृतात्मा ब्रह्मलोक मभिसंभवामीत्यत्र ब्रह्मलोकशब्दस्य प्रजापते स्सभां वेश्म प्रपद्य इत्यस्यच समानविषयत्वावश्यकत्वाच्च नायं प्रजापति शब्दो हिरण्यगर्भ विषयो भवितु मर्हति । नखलु हिरण्यगर्भतल्लोकयो स्सर्वपाप

विधूननपूर्वक प्राप्यत्वमकृतत्वंवा संगच्छते , नापि तत्प्राप्तस्य सर्वाविद्या विमोकपूर्वक सर्वात्मभावानुसन्धानं वा युज्यते , त योरनित्यतायाः तत्प्राप्तस्य पुण्यपापफलभोगा विद्या संबन्ध पुनरावृत्तीनांच श्रुतिस्मृतिप्रतिपन्नत्वात् । तस्मा दुक्तै र्हेतुभिः परब्र ह्मोपासकानेवार्चिरादिगणो नयतीत्यंगीकार्यमिति ॥ ९४ ॥

ब्रह्मपदमुख्यवृत्त्याश्रयणेन बादरिं प्रतिक्षिपतो जैमिने रयमशा योवगम्यते । श्रौतोह्यर्थो यथाश्रुत्यैव प्रतिपत्तव्यः, प्रमाणान्तरागम्यत्वा त् । इत्थंच ब्रह्मणइव तदनुबन्धिनां लोकविशेषादीनामपि नापलापो युक्तः, श्रौतत्वाविशेषात् । अतएवच देशविशेषावच्छिन्नब्रह्मप्राप्तये ब्र ह्मविदामिवार्चिरादिवर्त्मना गमनमपि न तर्केण व्याहन्तुमर्हम् । एवंच सति स्वरसवाहितापि श्रुतीनां नपरित्यक्ता भवतीति ॥ ९५ ॥

अत्र बादरिजैमिन्यो रुभयोरपि गतिश्रुतिघटक ब्रह्मशब्दस्य का र्यब्रह्मपरत्व परब्रह्मपरत्वविवादेपि कार्यब्रह्मोपासकान् वा परब्रह्मो पासकान्वा एकोपासकानेव नयत्यर्चिरादिगणः, नतु भिन्नभिन्नोपा स्योपासकान् द्विविधान् , प्राप्यस्य ब्रह्मण एकस्यैव श्रवणात् , तद्य इत्थं विदुरिति येचेमे ऽरण्यइतिच विभागो यथाकथंचि देकविधोपास कानामेव अंगांगिभावोपासनभेदमात्रविषयतयावा उपासनाकारभेद मात्रविषयतया वा नेय इत्येवाभिप्रायइति बोध्यम् ॥ ९६ ॥

॥ ९ ॥ सू ॥ अप्रतीकालंबना न्नयतीति बादरायण उभयथाच दोषा त्तत्क्रतुश्च ॥ ४ ३ १४ ॥

अथान्ते भगवान् बादरायणः परमसिद्धान्तभूतम् स्वपक्षं नय मादि सूत्रद्वयेनाह ॥ ९७ ॥

अप्रतीकालम्बनान् – प्रतीकं–परमप्राप्यादर्वाचीनंवस्तु, अचित्त्वं तन्मिश्रं चित्त्वंवा, आलम्बंते - प्राप्यतयोपासतइति प्रतीकालम्बनाः ! लेनभवन्तीत्य प्रतीकालम्बनाः, तान् -परमप्राप्य भूतमेव वस्तु अचि

द्विधुक्तं चित्तत्वम् , परं ब्रह्मवा प्राप्यतयोपासीनान् , पंचाग्नि विच्छाब्दित प्रत्यागत्मविद्यानिष्ठाः परमात्मविद्यानिष्ठाश्चे त्युभयविधानपीति यावत । न यत्यातिवाहिक गणइति बादरायणो मन्यते । उभयथाच – बादरिपक्ष जैमिनिपक्षयो रुभयोरपि । दोषात–श्रुतिविरोधात । तत्क्रतुश्च - तथोपासी नस्तथैव प्राप्नोतीत्ययं न्यायश्च इहभवतीतिच बादरायणोमन्यत इति सूत्रार्थः ॥ १८ ॥

इदमत्र तात्पर्यम् । कार्यमुपासीनान्नयतीति बादरिपक्षे छान्दोग्योपनिषदष्टमप्रपाठके तृतीयखण्ड चतुर्थखण्डिकायां द्वादशखण्ड द्वितीयखण्डिकायांच स्थितायाः 'एष संप्रसादो ऽस्माच्छरीरात्समुत्थाय परं ज्योति रुपसंपद्य स्वेन रूपेणा भिनिष्पद्यत' इति श्रुतेः एवं जातीयानामन्या सांच बहूनां श्रुतीनां विदुषश्शरीरा न्मूर्धन्य नाडया निष्क्रम्य देवयाने नोर्ध्वंगतस्या व्यवधानेन परस्यैव ब्रह्मणः प्राप्तिं प्रतिपादयन्तीनां विरोधोदुष्परिहरः । कार्यब्रह्मोपासकस्यसाक्षा त्परब्रह्मप्राप्ते रयोगात,यथावास्थितस्वरूपाविर्भावलक्षण मोक्षप्राप्ते श्श्रूयमाणतया तासां कार्यब्रह्मपरत्वादिभि रन्यथासिद्धे वर्णयितु मशक्यत्वात, अव्यवधानश्रवणेन विळंबस्यापि दुर्वचत्वाच्च । परंब्रह्मोपासीनानेव नयतीति जैमिनिपक्षे छान्दोग्यपंचमप्रपाठक दशमखण्डगतायाः 'तद्य इत्थं विदुः, येचेमे ऽरण्ये श्रद्धातप इत्युपासत' इत्यारभ्य 'सएनान् ब्रह्म गमयत्येष देवयानः पन्था', इती त्यन्ताया श्श्रुतेः, बृहदारण्यकाष्टमाध्याये द्वितीय ब्राह्मणपंचदशखण्डिकारूपायाः 'ते यएतमेव द्विदु येचामी अरण्ये श्रद्धां सत्य मुपासते तेर्चिष मभिसंभवन्तीत्यारभ्य, तान् वैद्यतात्पुरुषो ऽमानव एत्य ब्रह्मलोकान् गमयति ते तेषु ब्रह्मलोकेषु पराः परावतो वसन्ति तेषां नपुन रावृत्ति, रित्यन्ताया श्श्रुतेः,एवं जातीयाना मन्यासांच श्रुतीनां पंचा

ग्निविदाम च्यर्चिरादिमार्गेण परब्रह्मप्राप्तिं प्रतिपादयन्तीनांविरोधो दुष्परिहरः । अतः , पंचाग्निविदो ब्रह्मविद श्चोभयविधा अप त्यर्चि: रादिगणइत्यंगीकार्यम् । कथ मेतेषा मुभयेषांपर मर्चिरादिपथगा मित्वं– नान्येषा मिति चे दिद मत्र पर्यालोचनीयम् । अर्चिरादिगति शास्त्रे ब्रह्मप्राप्त्यपुनरावृत्तिलक्षण फलश्रवणात् तादृशफलयोग्या ए वार्चिरादिगतियोग्याः, येतु ब्रह्मप्राप्त्यतिरिक्त नश्वरप्राप्यलक्षणप्रतीकं प्राप्यतयाध्यवस्यन्ति, नते तादृशगतियोग्याः, तेषां प्राप्यनाशेन पुन रावृत्ते स्वर्जनीयतयो क्तफलयोग्यताविरहात् , प्रतीकालंबनव्यतिरि क्तास्तु सर्वएव तादृशगतियोग्याः, तेषां पुनरावृत्तिहेतुप्रतीकावलं बित्वविरहेणोक्तफलयोग्यत्वानपायात , तथाविधाश्चाधिकारिण श्चोभ यविधाएव भवन्तीति तेषामेवार्चिरादिपथगामित्वं सम्भवति - नान्ये षां, अतएव तद्यइत्थंविदु रित्यादिछान्दोग्यश्रुतौ ते यएवमेतद्विदु रित्यादिबृहदारण्यकश्रुतौच अर्चिरादिपथगामिनो विभज्य द्विविधा एव निर्दिष्टा इति । नच – पंचाग्निविदोहि कर्मवशेन भूतसूक्ष्मसंप रिष्वक्तमेव तत इत स्संचरन्तं प्रत्य गात्मान मुपासीना श्रूयंते , नच ते प्रतीकालंबनव्यतिरिक्ता भवितु मर्हन्ति , क्षरणशीलाचिन्मिश्रोपासकत्वात् , अतः पंचाग्निविद्ब्रह्मवि दुभयानुगमेन अप्रतीकालम्बनान्नयतीति प्रतिज्ञानं व्याहतम् , किंच–तद्य इत्थं विदुरित्य! दिश्रुती ना र्चिरादि पथगामिनां द्विविधत्वप्रदर्शनपरे – अपितु – ये इत्थं विदुः–इमे इत्थं विदन्तर्गताएव ये अरण्ये श्रद्धापूर्वकं ब्रह्मचो पासते - तेऽर्चिषमभिसम्भवन्तीति तदंगभूत पंचाग्निविद्याशब्दित - प्रत्यगात्मविद्यानुष्ठान पूर्वक मंगिभूत ब्रह्मोपासननिष्ठाना मेकविधा धिकारिणामेवार्चिरादिगति प्रतिपादनपरे, अध्यात्मयोगाधिगमेन देव म्मत्वाधीरो हर्षशोकौ जहातीति कठवल्लीश्रुत्या अध्यात्मयोगाधिगमे नेति प्रत्यगात्मविद्यां विधाय देवम्मत्वेति तदंगिकां ब्रह्मविद्यांच वि धाय अंगांगिभावापन्न मुक्तविद्याद्वयं क्रमेणानुष्ठितवतो धीरस्यैव

*

फलप्राप्तिः प्रतिपाद्यते, यद्वा-उपासनाकारभेदमात्रायत्ताधिकारि द्वैविध्या भिप्रायके वा दर्शितश्रुती, इत्थंचोक्तश्रुत्योरुक्तरीत्या निर्वाहा भ्युपगमेन परब्रह्मोपासकमात्र विषयमेव गतिशास्त्रमिति मन्यमानस्य जैमिनेर्वा कार्य ब्रह्मोपासक विषयमेव गतिशास्त्र मिति मन्यमानस्य बादरेर्वा पक्षआश्रयि तु मुचितः, यद्वा-अंगांगिभावानवच्छिन्न भिन्नप्राप्योपासनपर द्विविधोपा सकपरत्वेपि दर्शित श्रुत्यो रुक्तलक्षण पंचाग्निवित् साहचर्येणा र्चिरादि पथगामितया निर्दिष्टा अन्ये हिरण्यगर्भलक्षण कार्यब्रह्मोपासकाएवां गीकर्तु मुचिताः, अवान्तरभेदे ष्वुभयेषाम प्युपाध्यवच्छिन्न ब्रह्मलक्षण कार्यब्रह्मो पासकत्वाविशेषेण साहचर्येण निर्देशौचित्यात, प्रश्नोपनिषत्पंचमप्रश्ने-एतद्वैसत्यकामपरंचापरंचब्रह्म यदोंकार इत्यत्र कार्यब्रह्मपरेणापरब्रह्म शब्देन प्रकृतिमण्डलान्तःपातिनः कृत्स्नस्य निर्देशा दचिन्मिश्र प्र-त्यगात्मनोपि तदन्तर्भावस्या वर्जनीयतया तदुपासकानां पंचाग्निविदां कार्यब्रह्मोपासकत्वंहि स्पष्टं, अर्चिरादिपथगामिनां कार्यब्रह्मोपा सकानामेव गतिशास्त्रे तेषां द्विविधत्वनिर्देश उपपद्यते, प्राप्यस्य कार्यब्रह्मणो नानात्वेन तदुपासकानामपि नानाविधत्वसम्भवात्, पर ब्रह्मोपासकत्वेतु तेषां तथाविध निर्देशो न संगच्छतएव, सकलो पाधिविनिर्मुक्तस्य परस्यब्रह्मण एकरूपतया तदुपासकाना मनेक विधत्वा सम्भवेन तद्यइत्थंविदु रित्युक्तानाम प्येकविध परब्रह्मोपा सकत्वाभिधाना सम्भवात्, प्राप्यभेद निबन्धनोपासकनानात्वस्यैव -तद्य इत्थं विदुरित्यादिश्रुतिविवक्षितत्वा दन्यथो पासनाकार भेदमा-त्रनिबन्धनो पासक नानात्वस्य तद्विवक्षितत्वे अनन्तविधत्वस्यैव संभ वेन द्विविधत्वनिर्देशासम्भवाच्च, तथाच तद्यइत्थंविदु रित्यादि श्रु-त्योरंगांगिभावापन्नोपासनप रैकविध परप्राप्योपासकविषयत्वेनवा अंगांगिभावानापन्न भिन्नभिन्नप्राप्योपासनपर द्विविधाधिकारिविष-यत्वेन वा द्वेवापि निर्वाहसम्भवेन कार्योपासकविषयमेव गतिशास्त्रमिति

बादरिपक्षएव वांगीकर्तुमुचितः, एवं स्थिते तावेतौद्धावपिपक्षा वुपेक्ष्य प्र-
तीकालम्बनकोटावेव घटितव्यानां पूर्वोक्तलक्षणानां पंचाग्निविदां परब्रह्मो
पासकानांचो भयेषा मर्चिरादिपथगामित्वपरता वर्णन मसंगतमेव,
एतेषां सुदूरपरस्परतारतम्यशालिनां समानस्कन्धव त्साहचर्यं णैकपथ
गामित्व निर्देशानौचित्यात् , अविशेषेण ब्रह्मप्राप्त्यपुनरावृत्ति
श्रवणा नुपपत्तेश्चेति वाच्यम् । तत्क्रतुन्यायसंचारेण वा-
क्यार्थनिर्णये पूर्वोक्त सर्वदोष परिहार संभवात् । एतदुक्तंभवति ।
बादरिपक्ष स्ताव त्सुतरा मयुक्तएव, पूर्वोक्तादेव दुरुद्धरादोषस-
मूहात , कार्यब्रह्मणो नानात्वेपि पंचाग्निवित्साहचर्येणा र्चिरादि
पथगामितया निर्दिष्टाना मन्येषां हिरण्यगर्भलक्षणकार्यब्रह्मोपा
सकत्वेपिच भिन्नभिन्नकार्योपासकत्वेना भ्युपगताना ममीषा मु-
भयेषा मविशेषेण सएनान् ब्रह्म गमयती त्येकब्रह्मप्राप्तिश्रवणानुप
पत्तेश्च, नापि दर्शितश्रुत्यो रंगांगिभावापन्नोपासनद्वयशाल्येकविधाधिकारि
मात्रविषयत्वाभ्युपगमपक्षो युक्तः, तद्यइत्थं विदु र्येचेमेरण्ये श्रद्धा
तपइत्युपासत इत्यादिश्रुतौ येचेम इत्यत्रो पासकवाचि पदानुबन्धि-
तया प्रयुक्तचकारे णेह निर्दिष्टोपासकानां तद्यइत्थं विदुरिति पूर्व
निर्दिष्टपंचाग्निविद्भ्यो भेदस्यैव स्फुटं प्रतिपादनेनो भयेषा मभिन्न
त्वासिद्धेः, उपासकैक्यस्योपास्यभेदमात्रस्यच विवक्षितत्वे तद्यइत्थं
विदु र्य इमे ऽरण्ये श्रद्धातपइति चोपासत इत्युपास्यवाचि पदा
नुबन्धितयैव चकारश्रवणावश्यकत्वाच्च , किंबहुना, यद्युपासकैक्य
मिह विवक्षित मभविष्यत , नाभविष्यदेव तर्हि येचेमइति पु
नरुपासकवाचि पदश्रवणम् , अभविष्यच्च तद्यइत्थं विदु ररण्ये
श्रद्धातपइति चोपासत इत्येवच श्रवणम् , नचैवं श्रूयते , तस्मा
दुक्तश्रुतौ द्वाभ्यां यच्छब्दाभ्यां चकारसहकृताभ्यां विभज्य नि-
र्दिष्टा अर्चिरादिपथगामिनो भिन्नभिन्नमेवोपास्य मुपासीना द्विवि-
धाएवोपासकाइति स्पष्ट मवगम्यते , तेच पंचाग्निविदः इत-

ब्रह्मोपासकाध्वे त्युक्तोभयविधाएव। नचात्र पंचाग्निविदा मुक्तरीत्या प्रकृतिविमिश्रं प्रत्यगात्मान मुपासीनानां प्रतीकालंबनत्वावश्यंभावेन ब्रह्मप्राप्त्यपुनरावृत्त्यो रनुपपत्तिः, नाप्यप्रतीकालंबनत्वेन पंचाग्निविद्ब्रह्मविदा मनुगमो ऽनुपपन्नः, अर्चिरादिना गतानां ब्रह्मप्राप्त्यपुनरावृत्तिश्रवणा दमीषां चार्चिरादिगतिश्रवणा त्तत्क्रतुन्यायेन प्रकृतिविनिर्मुक्तब्रह्मात्मकात्मानुसन्धानलक्षणोपासनस्यैवा मीषां सिद्धेः, अत एव प्रतीकालंबनत्वायोगाच्च . तत्क्रतुन्यायश्च अथ खलु क्रतुमयः पुरुषो यथाक्रतु रस्मिन् लोके पुरुषो भवति तथेतः प्रेत्य भवतीति छान्दोग्यतृतीयप्रपाठक चतुर्दशखण्ड प्रथमखण्डिकागतश्रुत्या तं यथायथोपासते तथैव भवतीति श्रुत्याच तथोपासीन स्तथैव प्राप्नोतीत्येवं रूपः प्रतिपद्यते , तत्श्चो पासनानुरूप मेव फल मुपासकानां सम्भवति नान्यादृशमिति सिद्ध्यति, यदि पुनः ये पंचाग्निविदः प्रकृतिविमिश्रं ब्रह्मात्मकत्वाविशेषितम् प्रत्य गात्मान मेव प्राप्यतयो पासीना इतीष्यते , नो पपद्येते एव तर्हि तेषां श्रूयमाणा ब्रह्मप्राप्तिरपुनरावृत्तिश्च , अनुपासितस्य ब्रह्मणः प्राप्त्ययोगात् , उपासितस्य प्रानस्य क्षरणशीलाचिन्मिश्रप्रत्यगात्मलक्षण प्राप्यस्य कदाचित् क्षरणा वश्यं भावेन पुनरावृत्ते रवर्जनीयत्वाच्च , अतः पंचाग्निविदः प्रकृति विमुक्तं प्रत्यगात्मानं ब्रह्मात्मक मुपासीना इत्येव न्यायत स्सिध्यति, प्रत्यगात्मनो ब्रह्मात्मकत्वंच यस्यात्माशरीरमित्यादि श्रुतिशतसिद्धम् , पंचाग्निविद्यायां श्रूयमाण भूतसूक्ष्मसम्परिष्वक्तस्यैव सतः प्रत्यगात्मनः द्युलोकपर्जन्यपृथिवीपुरुषयोषारूपेषु पंचस्वग्निषु देव प्राणैर्हूयमानस्य क्रमेण सोमराजाख्यामृतमयदेहिभाव वर्षभावापन्नत्वेनानुसन्धानं ना चिन्मिश्रवेषेण तमुपास्य तथाविधस्यैव तस्य - प्राप्त्यर्थं विधीयते, अपितु यावदचित्संसर्गं प्रत्यगात्मनः कर्मवशेन पुनःपुन रीदृशरीत्या सर्वकश्मलमये संसारएव परवशपरिभ्रमण

माणत्वलक्षण दोषदर्शनमुखेन जुगुप्सया सर्वदोषाकर हेया चित्संसर्गस्य परित्याज्यतामनुसन्धाय तादृशाचित्संसर्ग वियुक्तं स्वस्वरूपापन्नं प्रत्यगात्मान मुपास्य तथाविधस्यैव तस्य प्राप्त्यर्थं विधीयते, तथाचानुसन्धानस्याभिसन्धिभेदेन हानार्थस्योपादानार्थस्यच द्विविधस्य सम्भवा दचिन्मिश्रस्य प्रत्यगात्मन स्ततद्‌तस्संचारित्वानुसन्धानं दोषदर्शनविधया प्रकृत्यंशग्रहणार्थं गुणदर्शनविधया प्रकृतिवियुक्तत्व विशिष्ट प्रत्यगात्मस्वरूप प्राप्त्यर्थं चेत्यवगम्यते । तदिदं छान्दोग्यपंचमप्रपाठक दशमखण्डान्ते पंचाग्निविद्याप्रकरणावसाने तस्माज्जुगुप्सेत तदेष श्लोकइत्यारभ्य अथहय एतान् पंचाग्नीन् वेद नसहतैरप्याचरन् पाप्मनालिप्यते शुद्धः पूतः पुण्यलोकोभवति यएवं वेद यएवं वेदेत्यन्तेन ग्रन्थेन सुव्यक्त मुपपादितं । अत्र जुगुप्सेतेति प्रकृतिसंसर्ग जुगुप्सया तद्वियुक्त प्रत्यगात्म तत्त्वोपासनं विधाय शुद्धः पूतः पुण्यलोकोभवतीति लोकविशेषावच्छिन्न प्रकृतिवियुक्तत्व विशिष्टा त्मप्राप्तिलक्षणस्यो पासनफलस्याप्यभिधानात् । इत्थंच पंचाग्निविदां प्रकृतितन्मिश्रयोः प्राप्यतयोपासकत्वलक्षणप्रतीकालम्बनत्व विरहा दपुनरावृत्तिश्रवण म्मुख्यमेवोपपद्यते । हिरण्यगर्भलक्षणकार्य ब्रह्मोपासकस्यतु नामाद्युपासकवदेव प्रतीकालम्बनतायाः तत्क्रतु न्यायेन पुनरावृत्तेश्चा वर्जनीयतया नार्चिरादिना गतिर्युक्ता । पंचाग्निविदामपि ब्रह्मप्राप्तिश्रवणेपि पंचाग्निविद्भिः प्रकृतिवियुक्तत्वविशिष्टप्रत्यगात्मनः परब्रह्मोपासकैः परब्रह्मणश्च प्रधानप्राप्यतयो पासनेन तत्क्रतुन्यायेनैव प्राप्यभेदसिध्या प्रधानप्राप्यभेदनिबन्धन मुपासक भेदमभिप्रेत्य गतिशास्त्रे गन्तॄणां द्वेधाविभज्य निर्देशोपि सुसंगतो भवति । नचायं द्विधानिर्देश उपासनाकारभेदमात्रायत्ताधिकारिद्वैविध्यपरस्सुवचः, तथासति विद्यानामनेकविधत्वेना नेकविधत्वस्यैव गन्तॄणां वक्तव्यतया द्विविधत्वकथनासामंजस्यादिति । तस्मा द्बादरि जैमिनि पक्षावुभावपि दोषयुक्तावेवेति परब्रह्मोपासीनान् प्रकृतिवियुक्तं प्रत्य

गात्मानं ब्रह्मात्मकतयोपासीनान् पञ्चाग्निविदश्च नय त्यातिवाहिकगण इत्येवांगीकार्यमिति ॥ ९९ ॥

पंचाग्निविद्यायां विहितस्य भूतसूक्ष्म संपरिष्वक्तप्रत्यगात्म कर्मानुगुण प्रकृतिमण्डल परवशबंभ्रम्यमाणत्वानुसन्धानस्य दोषदर्शनविधया वैतृष्ण्यजननार्थत्वादेव सूत्रकारेणापि शारीरकशास्त्रे प्रथमेनाध्यायद्वयेन मुमुक्षूपास्यं ब्रह्मस्वरूपं निरूप्य तदुप युपासकानांतदुपास नप्रवृत्तिहेतु प्राप्यवस्तुव्यतिरिक्तवैतृष्ण्य प्राप्यतृष्णा सिध्यर्थं दोषगु णपरामर्शपरयोः तृतीयाध्याय प्रथम द्वितीयपादयोः तदन्तरप्रतिपत्त्यधिकरणप्रभृति मुग्धाधिकरण पर्यन्त दोषपरामर्शपर ग्रन्थे प्रथमं पंचाग्निविद्योदित दर्शित जीवपरिभ्रमणविशेष एव विचारितः ॥१००॥

तदिदमुक्तं भाष्यकारैर प्युक्तदोषपरामर्शपर ग्रन्थ कृत्स्नतात्पर्यमनुभाषमाणै रुभयलिंगाधिकरण प्रथमसूत्रभाष्ये ‘दोषदर्शना द्वैराग्योदयाय जीवस्या वस्थाविशेषा निरूपिता’ इति ॥ १०१ ॥

पंचाग्निविद्योदिते तत्रतत्रसंचारि प्रकृतिमिश्रप्रत्यगात्मानुसन्धाने प्रकृत्यंशानुसन्धानं तस्यहेयतया त्याज्यत्वानुसन्धानरूपं, प्रत्यगात्मानु सन्धानंच तस्योपादेयतया प्राप्यत्वानुसन्धान रूपं, द्युलोकाद्यग्निपंच काधिकरणकाहुतिपश्चककर्मत्वलक्षणस्य तत्रतत्रसंचारित्वस्या नुसन्धानं च भयजननेन तत्परिहारार्थमितिच प्रस्फुटमेय भाषितंगीताभाष्ये तैरेव ॥ १०२ ॥

यथोक्तं तत्र ‘अक्षरं ब्रह्मपरमं स्वभावोऽध्यात्ममुच्यते । भूतभावोद्भवकरो विसर्गः कर्मसंज्ञित’ इति कैवल्यार्थि ज्ञातव्य विषयाष्टमाध्याय तृतीयश्लोकभाष्ये ‘परममक्षरं - प्रकृतिविनिर्मुक्तात्मस्वरूपं, स्व भावोऽध्यात्ममुच्यते, स्वभावः–प्रकृतिः, अनात्मभूतमात्मनि संबध्य मानं भूतसूक्ष्मतद्वासनादिकं पंचाग्निविद्यायां ज्ञातव्यतयोदितम्, तदुभयं प्राप्यतया त्याज्यतयाच मुमुक्षुभिर्ज्ञातव्य' मिति, ‘भूतभावो म-

नुष्यादिभावः, तदुद्भवकरोयो विसर्गः - पंचम्यामाहुतावापः पुरुषव चसो भवन्तीति श्रुतिसिद्धो योषित्सम्बन्धजः, सकर्मसंज्ञितः - तन्नाखिलं सानुवन्ध मुद्वेजनीयतया परिहरणीयतयाच मुमुक्षुभिर्ज्ञातव्य' मितिच ॥ १०३ ॥

अचित्संसर्गायत्त जरामरणादि सर्वावस्थामोक्षलक्षण कैवल्यार्थितया गीतातद्भाष्ययोऽस्तत्र तत्र निर्दिश्यमानोधिकारी पंचाग्निविदेवेति-तूदाहृतश्लोक तद्भाष्याभ्यामेव सुव्यक्तम् ॥ १०४ ॥

इत्थंच - तद्यइत्थं विदु र्येचे मेऽरण्ये श्रद्धा तप इत्युपासते तेऽर्चिष मभिसम्भवन्तीति छान्दोग्यश्रुतेः, ते य एव मेत द्विदु र्ये चामी अरण्ये श्रद्धां सत्य मुपासते तेऽर्चि रभिसम्भवन्तीति बृहदारण्यकश्रुते श्चैव मर्थोऽनुसन्धेयः । ये - पूर्वोक्ताः पंचाग्निविदः, तत् - द्युलोकपर्जन्यपृथिवीपुरुषयोषारूपेषु पंच स्वग्निषु प्राणैः कर्मानुगुण्येन हूयमानं सोमभाव वर्षभावा न्नभाव रेतोभाव गर्भभावरूप दशापंचक मापद्यमानं भूतसूक्ष्मपंचकरूपा चिन्मिश्रं चिद्वस्तु, इत्थं हेयभूता चिद्रूपविशेषणांशे त्याज्यतया तद्वियुक्तं शुद्धज्ञानानन्दमये तिरोधानविगमेन ब्रह्मात्मकतयापि भासमाने उपादेयभूतचिद्रूपविशेष्यांशे प्राप्यतयाच, विदुः -जानन्ति, येचेमे-तत्रतत्रोपनिषत्सु प्रसिद्धा ब्रह्मोपासकाश्च, अरण्ये - विविक्तप्रदेशे, तपः - परंब्रह्म, श्रद्धेति - श्रद्धयाऽधिगन्तव्यमिति, तदेव पुरुषार्थविधया प्राप्यमित्यध्यसायपूर्वक तत्प्राप्तित्वरालक्षणां श्रद्धां कृत्वा, तया तदेव प्राप्तव्यमिति मत्वेति यावत, उपासते - भक्तिरूपापन्नज्ञानेन विषयीकुर्वन्ति, ते - प्रकृतिवियुक्तं ब्रह्मात्मकं प्रत्यगात्मानं पुरुषार्थविधया प्राप्यत्वेनोपासीनाः पंचाग्निविदः पर मेव ब्रह्म तथोपासीना ब्रह्मनिष्ठाश्चेत्युभये, अर्चिषं - अर्चिरभिमानिनी मातिवाहिकदेवतां, अभिसंभवन्ति - प्राप्नुवन्तीति प्रथमश्रुते

र्थः. द्वितीयश्रुतेरपि प्रथमश्रुतिघटकपदसमानार्थक पदभेदमात्रघटि ताया यथोक्तरीत्यैवार्थः, श्रद्धां सत्य मुपासत इत्यत्रापि, सत्यम्- ब्रह्म, श्रद्धां - श्रद्धयाऽधिगन्तव्यम्, उपासते - पूर्वोक्तलक्षणां श्र द्धां कृत्वा तयाऽधिगन्तव्यत्वेनो पासत इति पूर्वोक्त एवार्थः पर्यवस्यति । अत्रोभयत्रापि श्रद्धाशब्द श्रद्धयाऽधिगन्तव्य औप चारिको द्रष्टव्यः । यद्वा- श्रद्धातप इत्युपासत इत्यत्र श्रद्धा तप इतीत्यन्त मुपासनक्रियाकर्मवाचि, तथाच श्रद्धेति श्रद्धासंज्ञं परब्रह्म प्राप्यत्वाध्यवसायपूर्वक तत्प्राप्तित्वरालक्षणं ज्ञानविशेषं, तप इति तपस्संज्ञं परं ब्रह्मच, उपासते - प्रीत्या समाश्रयन्त इ- त्यर्थः, श्रद्धां सत्य मुपासत इत्यत्रच श्रद्धां सत्यं चोपासतइ त्यर्थः, 'तपश्श्रद्धे ये ह्युपवसन्त्यरण्ये शान्ता विद्वांसो भैक्षचर्यां चरन्त : । सूर्यद्वारेण ते विरजाः प्रयान्ति यत्रामृत स्सपुरुषो ह्यव्ययात्मे ' ति मुण्डकोपनिषत्प्रथममुण्डकद्वितीयखण्डश्रुत्यैकार्थ्यात । योजनाद्वयेपि श्रद्धातप इत्युपासतइत्यत्र श्रद्धां सत्यमुपासत इत्य त्रच - परं ब्रह्म तदेकप्राप्यताध्यवसाय पूर्वक तत्प्राप्तित्वरालक्षण- श्रद्धापूर्वकमुपासीनाएव विवक्षिताभवन्तीति ॥ १०५ ॥

उपबृंहितंचैतच्छ्रुतिद्वयं याज्ञवल्क्येन निजस्मृतितृतीयाध्याये- " यएवमेनं जानन्ति येचारण्यकमाश्रिताः । उपासते तप स्सत्यं श्रद्धया परया युताः ॥ क्रमात्ते सम्भवन्त्यर्चिं रहश्शुक्लं तथो- त्तरं । अयनं देवलोकंच सवितारं सवैद्युतं ॥ तत्र तत्पुरुषो दिव्योऽमानवो ब्रह्मलौकिकान् । करोति पुनरावृत्ति स्तेषामिह नविद्यत' इत्येवं रूपैर्व- चनैः ॥ १०६ ॥

अत्र तपस्सत्यमिति सामानाधिकरण्य प्रयोगेण छान्दोग्यगत- तपश्शब्द बृहदारण्यकगत सत्यशब्दयो रैकार्थकता, श्रद्धया परया

युता इत्यनेन दर्शितश्रुत्योः श्रद्धाग्रहणस्य ब्रह्मोपासने ब्रह्मणि-श्रद्धापूर्वकत्वप्रतिपादनपरताच स्पष्टीकृता ॥ १०७ ॥

परमं योमहत्तप इति सहस्रनामपाठात् सत्यं ज्ञानमनन्तं ब्रह्मे त्यादिषु ब्रह्मणि सत्यशब्दश्रवणात स्ववाच्योपासकानां श्रूयमाणब्रह्मप्राप्त्यानुगुण्याच्च दर्शितश्रुतिगत तपस्सत्यशब्दयो ब्रह्म-परत्वम् ॥ १०८ ॥

एवं गीताशास्त्रे ऽ पुनरावृत्तिलक्षणा र्चिरादिपथगामितया नि-र्दिष्टानां द्विविधाधिकारिणां अक्षराव्यक्तशब्दित प्रत्यगात्मोपासके-भ्यः पंचाग्निविद्भ्यो ऽन्येषां श्रद्धापूर्वकं परमपुरुषोपासकत्वेन नि-र्देशा त्तादृश शास्त्रस्य दर्शितश्रुतिद्वयोपबृह्मणत्वाच्च पंचाग्निविदित रोपास्यविषयौ दर्शितश्रुतिगत तपस्सत्यशब्दौ परब्रह्मपरावुवश्यंभवि-तुमर्हतः ॥ १०९ ॥

तत्रहि द्वादशाध्याये दर्शितद्विविधाधिकारिस्वरूप परायां प्रथ-मादिसप्तश्लोक्यां 'एवं सततयुक्ता ये भक्ता स्त्वां पर्युपासते। येचा प्यक्षरमव्यक्तं तेषांके योगवित्तमा' इति प्रथमश्लोके ऽर्जुनप्रश्नपरे-त्वां पर्युपासत इति भगवदुपासकत्वेन, 'मय्यावेश्यमनोयेमां नित्ययु-क्ता उपासते। श्रद्धया परयो पेता स्ते मे युक्ततमामता' इति तादृ शप्रश्नसमाधानपरे द्वितियश्लोके श्रद्धापूर्वक भगवदुपासकत्वेनच-पंचाग्निविदन्येषां निर्देशः कृतः ॥ ११० ॥

अस्मिन् शास्त्रे ऽष्टमाध्याये प्रागर्चिरादिपथगामितया निर्दिष्ट द्विविधाधिकार्यनुवाद परत्वात , श्रद्धया परयोपेता इत्यनेन श्र-द्धातपइत्युपासत इत्यादिप्रत्यभिज्ञापकत्वा च्चेयं सप्तश्लोकी दर्शित श्रु त्युक्त द्विविधाधिकारि परैवे त्यतो दर्शितश्रुतिगत तपस्सत्यशब्दौ गीताशास्त्रे भगवतैव परब्रह्मपरौ व्याख्यातौ भवतः ॥ १११ ॥

अत्र दर्शितद्विविधाधिकारिणां मध्ये पंचाग्निविदा मुपासनस्य ज्ञानयोगरूपत्वं ब्रह्मनिष्ठाना मुपासनस्य भक्तिरूपत्वंच श्रुतिस्मृतिविवक्षितम् ॥ ११२ ॥

अतएव, 'श्रद्धातपइत्युपासते, श्रद्धां सत्यमुपासते , उपासते तप स्सत्यं श्रद्धया परया युताः , एवं सततयुक्ता ये भक्ता स्त्वां पर्युपासते, मय्यावेश्य मनो ये मां नित्ययुक्ता उपासते । श्रद्धया परयोपेता इत्यादिश्रुतिस्मृतिभि र्ब्रह्मनिष्ठाना मुपासनस्य भक्तियोगरूपत्वं, 'तद्यइत्थं विदुः , ते यएवमेतद्विदुः , यएव मेनं जानन्ति , येचाप्यक्षरमव्यक्तम् , येत्वक्षरमनिर्देश्य मव्यक्तम् पर्युपासते । सर्वत्रग मचिन्त्यंच कूटस्थ मचलं ध्रुवम् ॥ सन्नियम्येन्द्रियग्रामं सर्वत्र समबुद्धयः ' इत्यादि श्रुतिस्मृतिभिः पंचाग्निविदा मुपासनस्य ज्ञानयोगरूपत्वं चावगम्यते ॥ ११३ ॥

अतएवच तत्तदधिकारिस्वरूपनिरूपणपरप्रकरणेषु पंचाग्निविदां ज्ञानयोगः ब्रह्मनिष्ठानां भक्तियोगश्च तत्रतत्राभिधीयते ॥ ११४ ॥

अत्र यद्यपि येचाप्यक्षरमव्यक्त मित्यत्र भक्ता स्त्वां पर्युपासत इत्यतः पर्युपासतइति पद मनुवर्तते , येत्वक्षरमित्यादिवचनेच तत्पदं स्वतएव तिष्ठति , तथापि तत्रत्यं पर्युपासतइतिपद मनुसन्दधत इत्येतावन्मात्रार्थकं, नतु भजन्तइत्यर्थकं, तद्य इत्थं विदुः , यएव मेनं जानन्तीत्यादिश्रुतिस्मृत्यैकार्थ्यात् , अन्यथा भक्ता स्त्वां पर्युपासत इत्यत्र भक्ता स्सन्तोभजन्त इति पौनरुक्त्येनानन्वयापत्तेश्च । किंच-स्वापेक्षयोत्कृष्टपूज्यविषयक प्रीतिरूपापन्नोपासनस्यैव भक्तिरूपत्वेन स्वात्मानुसन्धानरूपोपासनस्य भक्तिरूपत्वं न कथंचिदपि संभवति , तस्मा त्रोक्तस्थले पर्युपासत इति पदम् भक्तियोगार्थक मित्यनुसन्धेयम् ॥ ११५ ॥

इदं पुनरत्रावधेयम् । यद्यप्युदाहृतश्रुतिस्मृतिषु ब्रह्मनिष्ठोपासनविषये प्युपासतइति पदमेव दृश्यते , तच्च नावश्यं भक्तिरूपस्यैवोपासनस्य वाचकम् , तथाविधोपासनवाचकत्वनैयत्या भावस्या नुपदमेवोक्तत्वात् , प्रमाणांतरैककंठ्येन तस्येह तथात्वमिति चेत्पंचाग्निविदुपासनविषयशब्दस्यापि तत्सुवचम् , 'चतुर्विधा भजन्ते मां जना स्सुकृतिनो ऽर्जुन । आर्तो जिज्ञासुरर्थार्थी ज्ञानीच भरतर्षभ ॥' इति भक्तियोगस्य चतुर्विधाधिकारिसाधारणताया गीतत्वात । तथापि श्रद्धादिपद सहकृत तादृशपदस्य श्रद्धापूर्वक ब्रह्मोपासकवाचिनः भक्तिरूपोपासन वाचकता नैयत्यात दर्शितश्रुतिस्मृतिषु-ब्रह्मनिष्ठानां भक्तिरूपस्यैव ब्रह्मोपासनस्य सिद्धिर्निष्प्रत्यूहा, श्रद्धापूर्वकस्य ब्रह्मोपासनस्यहि भक्तिरूपता नियता, तत्तद्गुणानुसन्धानाद्यधीनया रुच्या कश्चित्पदार्थं स्वप्राप्यपुरुषार्थत्वेन परिगृह्य तदेकप्रियतया तद्विश्लेषासहिष्णो रचिरेण तत्प्राप्तये तत्साधनत्वेन विश्वासिते तदुपासनादौ यात्वरा तस्याएव श्रद्धा शब्दार्थत्वेन प्रकृते ब्रह्मनिष्ठ स्वशेषित्व निरस्तनिखिलदोषत्व समस्तकल्याणगुणाकरत्वाद्यनुसन्धान जनित तदेकप्रियत्वाध्यवसाय तन्मूल तत्प्राप्तिविलम्बासहिष्णुत्वाधीन साधनत्व विश्वासपूर्वक तत्प्राप्तिसाधनानुष्ठानत्वरापूर्वक तदुपासनस्यैव श्रद्धापूर्वकब्रह्मोपासनरूपताया अत्र विवक्षितत्वेन तदृशोपासनस्य शेषित्वाभिमत विषयक प्रीतिरूपोपासनत्वलक्षणं भक्तित्वं दुरपह्नवमेव । प्रकृतिवियुक्त प्रत्यगात्मोपासनस्य तु तन्नसम्भवति , प्रत्यगात्मन स्स्वात्मानं प्रति शेषित्वेनाभिमतत्वाभावात श्रद्धाया उक्तलक्षणप्राप्यत्वराधीन साधनत्वविश्वासपूर्वक तत्प्राप्ति साधना नुष्ठान त्वरा रूपत्वं भाष्यकारैरेव तत्र तत्रोच्यते ।

यथोक्तम् गीतासु सप्तदशाध्याय द्वितीयश्लोकभाष्ये 'यत्र रुचि स्तत्र-श्रद्धा जायते, श्रद्धाहि स्वाभिमतं साधयत्येतदिति विश्वासपूर्विका साधने त्वरेति'। षष्ठाध्यायान्तिमश्लोकेपि 'श्रद्धावान् भजते योमां स मे युक्ततमोमत' इत्युत्तरार्धभाष्ये 'श्रद्धावान्–अत्यर्थं मत्प्रियत्वेन क्षणमात्र विश्लेषासहतया मत्प्राप्तिप्रवृत्तौ त्वरावान्, योमां भजत' इत्युक्त्यापि श्रद्धाया उक्तरूपता व्यक्ता । ईदृशाविश्लेषासहिष्णुता लक्षण त्वरापूर्वक प्राप्यभूत शेष्युपासनस्य भक्तिरूपत्वादेवहि 'पुनर्विश्लेषभीरुत्वं परमाभक्ति रुच्यत'इति भक्तिस्वरूप निर्वचनमपि संगच्छते। पंचाग्निविदान्तु प्रत्यगात्मनएव पुरुषार्थतयाभिमतत्वेन तत्प्राप्त्युपायतया भगवद्भक्तियोगस्याभिमतत्वेपि ब्रह्मण्युक्तलक्षणश्रद्धापूर्वक ब्रह्मोपासकत्वं नास्त्येव, प्रकृतिवियुक्तप्रत्यगात्मन्येव तेषां तथाविध श्रद्धासम्भवात् । अतएवहि दर्शितश्रुतिस्मृतिषु श्रद्धापूर्वकब्रह्मोपासकत्वेन पंचाग्निविद्यावृत्ततया ब्रह्मनिष्ठानां निर्देशः श्रद्धातप इत्युपासते श्रद्धां सत्यमुपासतइत्यादिना क्रियते। भाष्यकारैरप्युक्त श्रुत्यादिषु श्रद्धापूर्वकब्रह्मोपासकत्वं पंचाग्निविद्यावृत्ततया भिप्रेतम्मन्वानैः तादृशश्रुत्यर्थ मनुवदद्भि रनियमाधिकरण भाष्ये – यइत्थं विदुरिति पंचाग्निविद्यानिष्ठान् येचेमइत्यादिना श्रद्धापूर्वकं ब्रह्मोपासीनां श्चोद्दिश्या र्चिरादिका गति रुपदिश्यत इति तेनैव रूपेण पंचाग्निविद्यावृत्ततया ब्रह्मनिष्ठानां निर्देशः कृतः। गीता द्वादशाध्यायावतारिकाभाष्येपि 'अनन्तरमात्मप्राप्तिसाधनभूता दात्मोपासना द्भक्तिरूपस्य भगवदुपासनस्य स्वसाध्यनिष्पादने शैघ्र्या त्सुसुखोपादानत्वाच्च श्रैष्ठ्य' मित्यादिना भाव्यध्यायार्थ संग्रहेण प्रदर्शयद्भिः यथोक्तम् पंचाग्निविदुपासन ब्रह्मनिष्ठोपासनयो र्दर्शित-श्रुत्याद्यभिप्रेतं वैलक्षण्यं स्पष्टतरमेवाभाषि । तस्मा दुक्तोपासन-वैलक्षण्यं दुरपह्नवमेवेति ॥ ११६ ॥

उक्तश्रुतौ तद्य इत्थं विदुरित्यत्र ब्रह्मात्मकतया प्रत्यगात्मनो वेदनं विवक्षितम् – य आत्मनितिष्ठन्नात्मनोऽन्तरो यमात्मानवेद यस्यात्माशरीरं य आत्मानमन्तरो यमयतीत्यादि श्रुत्या प्रत्यगात्मनो ब्रह्मशरीरभूतत्या तदात्मकतयैव विद्यमानत्वा त्तिरोधानभूतप्रकृति वियुक्त शुद्ध प्रत्यगात्मस्वरूप साक्षात्कारदशायां द्रव्यचाक्षुषे रूपोपलम्भावश्यम्भावव दन्तर्यामिभूत परब्रह्मोपलम्भावश्यम्भावात् । तमेवं विदित्वाऽति मृत्युमेति नान्यः पन्था अयनायविद्यतइति श्रुत्या निश्शेषसंसार सम्बन्धनिवृत्ति रूप मृत्युतरणस्य ब्रह्मप्राप्तेश्च ब्रह्मवेदनैक साध्यत्वावगमेन तदावश्यकत्वा द्देशविशेषावच्छिन्न ब्रह्मप्राप्तिमन्तरेण निश्शेषाविद्यानिवृत्तिलक्षण प्रकृतिवियुक्तत्व विशिष्ट प्रत्यगात्मप्राप्तिरूप-पंचाग्निविद्यापुरुषार्थासिद्ध्यापत्त्या तदर्थं तादृशब्रह्मप्राप्ते रावश्यकत्वे-तत्क्रतुन्यायेना नुपासितस्य प्राप्त्ययोगेनापि तदुपासना वश्यकत्वाच्च ॥ ११७ ॥

तमिमं पंचाग्निविद्यायां ब्रह्मणोप्युपासनसद्भावं श्रुतिरेव न्यायानुगृहीता सम्यगवगमयति ॥ ११८ ॥

'श्रद्धा तपइत्युपासते' 'श्रद्धां सत्यमुपासते' इत्यादिकाहि श्रुतिः, सामान्य ब्रह्मोपासकत्वमात्रेण, तद्य इत्थं विदुः, ते य एवमेतद्विदुरिति पूर्वनिर्दिष्ट पंचाग्निविद्भ्यो ब्रह्मनिष्ठानां सम्यग्व्यावृत्त्यसिद्धिमभिसन्धाय श्रद्धापूर्वकब्रह्मोपासकत्वेन तेभ्य स्तान् व्यावर्त्य प्रतिपादयन्ती पंचाग्निविद्यायामपि ब्रह्मोपासन सद्भावमवगमयत्येव ॥ ११९ ॥

एवं – स एनान् ब्रह्मगमयतीति पंचाग्निविदामपि ब्रह्मप्राप्तिप्रतिपादयन्ती श्रुतिरपि तत्क्रतुन्यायानुगृहीता समवगमयति, अनुपासितस्य ब्रह्मणः प्राप्त्ययोगात् ॥ १२० ॥

अपिच - एष देव पथो ब्रह्मपथ एतेन प्रतिपद्यमाना इम म्मानव-मावर्तं नावर्ततेनावर्तन्ते , तेषु ब्रह्मलोकेषु पराः परावतो वसंति , तेषां न पुनरावृत्तिः,इत्यादिका अर्चिरादिमार्गगामिना मपुनरावृत्ति श्रुतिरपि योवा एतदक्षरं गार्ग्यविदित्वाऽस्मिन् लोके जुहोति यजते तपस्तप्यते बहूनि वर्षसहस्रा ण्यन्तवदेवास्य तद्भवतीति, योवा एतदक्षरं गार्ग्यविदित्वा ऽस्माल्लोकात्प्रैति सकृपणो ऽथ-य एतदक्षरं गार्गिविदित्वा ऽस्माल्लोकात्प्रैति स ब्राह्मणइति बृहदारण्यक पंचमाध्यायाष्टम ब्राह्मणगत श्रुत्यैकार्थ्यानुगृहीता तमवगमयति । अर्चिरादिगामितया श्रुतानां पंचाग्निविदां स्वविद्यायां ब्रह्मोपासनाभावे ऽन्तवत्फलत्वेन पुनरावृत्ते रवर्जनीयत्वेना पुनरावृत्ति श्रवणविरोधापत्तेः ॥ १२१ ॥

एवं गीतास्वप्यष्टमाध्याये , ऐश्वर्यार्थि पंचाग्निवि ब्रह्मनिष्ठानां-तत्रापि प्रथमानां पुनरावृत्तिमत्वेन , इतरेषा मपुनरावृत्तिमत्त्वेनच प्रतिपादितानां पुनरावृत्त्यपुनरावृत्तियोग्य मार्गकथनावसरे, 'यत्र – काले त्वनावृत्ति मावृत्तिंचैव योगिनः । प्रयातायान्तितं कालं वक्ष्यामि भरतर्षभ ॥ अग्निर्ज्योतिरहश्शुक्ल ष्षण्मासा उत्तरायणम् । तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जना' इत्यत्र , ब्रह्मविच्छब्देन पंचाग्निविद्ब्रह्मनिष्ठाना मुभयेषां ग्रहणं कुर्वता भगवता यथोक्त रीत्या पंचाग्निविद्यायां ब्रह्मोपासन सद्भाव स्स्पष्टतरमभिहितः ॥१२२॥

तदिदं सर्वमभिप्रेत्यैव भाष्यकारै र्दर्शितगीताश्लोकद्वयावतारिकाभाष्ये , तद्य इत्थं विदुरिति श्रुते र्यथोक्तरीत्या अचिदंशस्य त्याज्यत्वेन चिदंशस्य प्राप्यत्वेन चानुसन्धानपरत्वं, तत्रापि तत्क्रतु-न्यायानुग्रहीत ब्रह्मप्राप्त्यपुनरावृत्ति श्रवणबलेना चिद्वियुक्तस्यात्मवस्तुनो ब्रह्मात्मकत्वेनानुसन्धान परत्वंच, व्याख्यातम् ॥ १२३ ॥

समर्थितंचानयैव दिशा पंचाग्निविदां प्रकृतिवियुक्त ब्रह्मात्मकात्मानुसन्धायित्व मेतदधिकरण भाष्यदीपसारादिषु ॥ १२४ ॥

इत्थं पंचाग्निविदामपि स एनान् ब्रह्म गमयतीति श्रूयमाणब्रह्म प्राप्तिहेतु ब्रह्मोपासनस्य प्रमाणन्यायसंचाराभ्यां निष्प्रत्यूहं सिद्धेः, तत्क्रतुन्यायस्य प्रत्यक्षश्रुतिबलेन पंचाग्निविद्यायांपरं बाधेन सं-कोचमभ्युपगम्या न्यत्राप्रतिहतप्रसरत्व वर्णनं इतरेषा मयुक्तमेवेति-भाष्यकाराशयः । बाधकत्वेनाभिमताया श्रुतेरेव श्रुत्यन्तरैकार्थ्य मा पन्नाया स्स्मृत्युपबृंहिताया न्यायानुगृहीतायाश्च यथोक्तरीत्या पंचा ग्निविदामपि ब्रह्मोपासकत्वबोधकत्वात् ॥ १२५ ॥

नच 'एवं पंचाग्निविदामपि ब्रह्मप्राप्तिफल ब्रह्मोपासननिष्ठत्वे ब्र-ह्मनिष्ठाना ममीषांच कोविशेष' इति वाच्यम् । ब्रह्मनिष्ठानां पुरुषार्थ विधया प्राप्यत्वलक्षणस्य परमप्राप्यत्वस्य परस्मिन् ब्रह्मणि पंचा-ग्निविदां तथाविधप्राप्यत्वस्य प्रत्यगात्मनिच स्वीकारेण वैलक्षण्य सिद्धेः। अन्यथोभयेषां विभज्य निर्देशासांगत्यापाताच्च ॥ १२६ ॥

किञ्च- पंचाग्निविदुपासने ब्रह्मणः ब्रह्मनिष्ठोपासने प्रत्यगात्म नश्च विषयत्वेपि तयो स्तत्राप्रधानत्वा द्यत्प्रधानं यदुपासनं त-देव तत्र कर्मतया निर्देष्टव्यम् प्राधान्यद्योतनाये त्याशयेनैव तद्यइत्थं विदु रित्यत्र पूर्वोक्तपरामर्शिना तच्छब्देन प्रत्यगात्मनो वेदनप्रधानकर्मतया 'श्रद्धातप इत्युपासते , श्रद्धां सत्य मुपासत ' इत्यत्र तपस्सत्यशब्दाभ्यां परब्रह्मण उपासनप्रधानकर्मतयाच श्रु-त्या निर्देशः क्रियते ॥ १२७ ॥

स्मरतिच भगवान् पाणिनिः 'कर्तुरीप्सिततमं कर्मे' ति कर्तुः क्रियया प्राप्तु मिष्टतमस्यैव कारकस्य मुख्यकर्मत्वम् ॥ १२८ ॥

इत्थंच पंचाग्निविदामपि स्वोपासनेन ब्रह्मणः प्राप्तु मिष्टत्वेपि प्रत्यगात्मनएव प्राप्तुमिष्टतमत्वं , ब्रह्मनिष्ठानांच प्रत्यगात्मनोपि 'एक आत्मन श्शरीरेभावात्' 'आत्मेतितूपगच्छन्ति ग्राहयन्तिच' 'अविभागे न दृष्टत्वा' दित्यधिकरणेषू पास्य प्राप्य कोटि निविष्टताया निर्णीततया

स्वोपासनेन प्राप्तुमिष्टत्वेपि प्राप्तुमिष्टतमत्वं परस्यैव ब्रह्मणइति दुः- रपह्नवमेव प्राप्यवैलक्षण्यम् ॥ १२९ ॥

तद्यइत्थं विदुः , ते यएव मेतद्विदुः , इत्यत्र श्रूयमाणपंचाग्निविद्या प्रजापतिवाक्यादौश्रुत परविद्यांगभूत प्रत्यगात्मविद्यामात्ररूपा तु नकथंचिदपि निर्वोढुं शक्या । तथासति ब्रह्मनिष्ठानां पंचाग्निवि दभिन्नतया पंचाग्निविदां गत्युपदेशेनैव तेषां तत्सिद्ध्या येचेमेरण्ये श्रद्धातपइत्युपासते , येचेमेरण्ये श्रद्धां सत्य मुपासत इति ब्रह्मनिष्ठानां पृथग्गत्युपदेशवैयर्थ्यात् ॥ १३० ॥

पंचाग्निविद्यायाः परविद्यांगभूत प्रत्यगात्मविद्यामात्रत्वे तस्या स्सर्वब्रह्मविदां विदितत्वावश्यकतया पंचाग्निविद्या प्रकरणे प्रवाह णाख्येन जैबलिना पांचालराजेन गौतमंप्र त्युपादिश्यमानाया अस्या स्ततः पूर्वं केनापि ब्राह्मणेना विज्ञातत्वं क्षत्रियपरंपरयैव प्रवर्तमा न त्वंच तेनाभिधीयमान मनुपपन्नमेव भवेत् , कालत्रयेपि ब्राह्मणेष्वे व ब्रह्मविद्बाहुल्यश्रवणेन अंगिनिष्ठानां तेषा मंगसद्भावावश्यकतया पंचाग्निविद्या विज्ञानवैधुर्यासंभवात् ॥ १३१ ॥

श्रूयतेहि बृहदारण्यकाष्टमाध्याय द्वितीयब्राह्मणे ‘ यथेयं विद्येतः पूर्वं नकस्मिंश्चन ब्राह्मण उवास तां त्वहं तुभ्यं व क्ष्यामी’ ति ॥ १३२ ॥

छान्दोग्येपि पंचमप्रपाठके तृतीयखण्डे ‘ यथेयं न प्राक्त्वत्तः पुराविद्या ब्राह्मणान् गच्छति तस्माद्धु सर्वेषु लोकेषु क्षत्रस्यैव प्रशासन मभूदिति ॥ १३३ ॥

अप्रतीकालम्बनानित्यत्र अप्रतीकोपासकानित्यनुक्त्वा उपासक पदस्थाने आलम्बनपद प्रयोगा त्प्राप्यतया प्रतीक बुद्धिश्योपासका स्स- र्वएव प्रतीकालम्बनशब्देन गृह्यन्ते । प्राप्यतया प्रतीकोपासकत्वस्यै व प्रतीकालम्बनत्व रूपत्वात् ॥ १३४ ॥

इत्थंच प्राप्यबुध्या प्रतीकं प्रापकबुध्या अन्यश्चोपासीनाः, प्राप्यबुद्ध्याप्रापकबुध्याच प्रतीकमेवोपासीना श्चे, त्युभाय विधा अपि प्रतीकालंबनशब्देनगृहीताभवन्ति ॥ १२५ ॥

यदि पुनः प्रतीकोपासकपदमिहस्या त्तदा स्वरसतो ऽसंकोचेन प्राप्यतया प्रापकतयाच प्रतीकमुपासीनानामेव बोधस्स्यात् , तथा सति दृष्टयुपासकव्यतिरिक्ताना मर्वाचीनैश्वर्यार्थिना मातिवाहिक नेयत्वनिषेधो नसंभवतीति तादृशपदोपेक्षा ॥ १२६ ॥

उपासन वाचिपदस्य सति बाधके प्राप्यतया प्रापकतयाच स्वसमभिव्याहृत कर्मवाचिपदार्थ गोचरोपासन परत्वमेवा संकोचन्यायेन स्वरससिद्धं ॥ १२७ ॥

अतएवोक्तं प्रतीकाधिकरणभाष्ये प्रतीकोपासनंहिनाम अब्रह्मणि ब्रह्मदृष्टयानुसन्धानमिति ॥ १२८ ॥

ब्रह्मदृष्टयानुसन्धानं चात्र ब्रह्मणः प्राप्यत्वेन प्रापकत्वेन चाभिसंहितस्य दृष्टयानुसन्धानरूपंस त्प्राप्यप्रापकविधया प्रतीकानुसन्धान रूपमेव पर्यवस्यति ॥१२९ ॥

अत्रत्य प्रतीकालंबनशब्दो दर्शितालम्बनपद स्वारस्य पर्यालोचनेनैव ब्रह्मदृष्ट्या स्वरूपेणच्च प्रतीकानुसन्धायिनां द्विविधाना मपि प्रतिपादनपरो व्याख्यात एत दधिकरणभाष्यादिषु ॥ १४० ॥

यथोक्तं भाष्ये – येतु ब्रह्मकार्यान्तर्भूत नामादिकं वस्तु देवदत्तादिषु सिंह्मादिदृष्टिवत् ब्रह्मदृष्ट्या केवलंवा तत्तद्वस्तूपासते नतान्नयतीति, अचिन्मिश्रं केवलं वाऽचिद्वस्तु ब्रह्मदृष्ट्या तद्वियोगेन च यउपासते नतान्नयतीतिच्च ॥ १४१ ॥

दीपेप्युक्तम् – प्रतीकालंबनास्तु अचिन्मिश्रं केवलमाचिद्वस्तुच्च सिंह्मदृष्ट्या देवदत्तवत ब्रह्मदृष्ट्या स्वरूपेणवा तद्वस्तु य उपासते त इति ॥ १४२ ॥

सारेप्यभिहितम् - अप्रतीकालम्बनाहि नामादिप्राणशब्दनिर्दिष्टप्रत्यगात्मपर्यंतं सर्वंचिदचिद्वस्तुजातं ब्रह्मदृष्ट्या स्वरूपेण वा य उपासते, प्रतीकालम्बना स्तद्व्यतिरिक्ता इति ॥१४३॥

अत्र सर्वत्र ब्रह्मदृष्ट्योपासनं पूर्वोक्तरीत्या प्राप्यप्रापकविधयोपासनरूपम् , स्वरूपेणोपासनंच प्राप्यविधयोपासनरूप, मिति बोध्यम् ॥ १४४ ॥

तथाच - प्रतीकालम्बनत्वेन हिरण्यगर्भलक्षण कार्योपासकस्यापि ग्रहणेन तस्या र्चिरादिगतिनिषेधसिध्या बादरिपक्षः , अप्रतीकालंबनत्वेन पंचाग्निविद् ब्रह्मनिष्ठोभयाविधोपासकग्रहणंकृत्वा तेषामर्चिरादि गति प्रतिपादनेन जैमिनिपक्ष श्च प्रत्याख्यातौ भवतः ॥ १४५ ॥

यद्यपीह बादरिपक्ष व्युदासार्थं हिरण्यगर्भोपासक मात्रस्या र्चिरादिगति निषेध्या- नत्वन्येषां प्रतीकालम्बनानां , तथापि अन्येषां प्रतीकालम्बनानामिव प्रतीकालम्बनताविशेषेणा स्यापि नार्चिरादिगतिरिति दृष्टान्तमुखेन व्युदसनार्थं प्रतीकालम्बनत्वेन सर्वग्रहणमिति बोध्यम् ॥ १४६ ॥

अथ-अंगं प्रतीकोवयवः इत्यादिकोशेनां गपर्यायः प्रतीकशब्दों गिस्थानीय प्राप्यादर्वाचीन प्राप्योपलक्षकः , यद्वा - बृहदारण्यके तृतीयाध्याय पंचमब्राह्मण प्रथमखण्डिकास्थस्य सोत्रमात्तिप्रतीकेनेतिमन्त्रखण्डस्यविवरणभूतेन तदीयद्वितीय खण्डिकास्थेन सोत्रमात्तिप्रतीकेनेति प्रतीकं मुखं मुखेनेत्येतदिति ब्राह्मणेन प्रतीकशब्दस्य मुखशब्देन द्वारपरतया व्याख्यानात, तथा तत्रैवाष्टमाध्याय द्वितीयब्राह्मण तृतीयखण्डिकायां इमइतिह प्रतीको न्युदाजहारेति प्रश्नप्रतिपत्तिद्वारभूत तत्परवर्णावळीपरतया : प्रतीकशब्द प्रयोगाच्च द्वारिस्थानीय-परब्रह्मलक्षणप्राप्य मुखस्थानीय तदर्वाचीन प्राप्योपलक्षको वा भवितुमर्हत्यसौ शब्दः , पक्षद्वयेपि परमप्राप्यादर्वाचीन प्राप्योपलक्षकं एवायं भवति । इत्थंच प्रकृतिपुरुषपरब्रह्मलक्षण तत्त्वत्रये -

परमप्राप्यभूता त्परस्माद्ब्रह्मणोऽर्वाचीन प्रकृतिवियुक्त प्रत्यगात्म तत्त्वावलम्बिनां पंचाग्निविदां प्रतीकालम्बन शब्दा भिलपनीयानां कथ मप्रतीकालम्बनत्वमिति चे दिदमत्रावधेयम् । परमस्थान प्रकृतिवियुक्त प्रत्यगात्मस्वरूप भगवत्स्वरूपाणां त्रयाणामपि परमप्राप्यत्वेनै केनैव प्रवृत्तिनिमित्तेन परमपदशब्दवाच्यतायाः वेदार्थसंग्रहे भाष्य कारैस्समर्थितत्वा त्प्रकृतिवियुक्त प्रत्यगात्मस्वरूपस्य परमप्राप्यत्वमेव सम्भवति न प्रतीकत्वं, यथोक्तं तत्र, 'एतदुक्तं भवति, क्वचित्परम स्थानं परमपदशब्देन प्रतिपाद्यते, क्वचित्प्रकृतिवियुक्तात्मस्वरूपं, क्वचिद्भगवत्स्वरूपंच. तद्विष्णोः परमं पदमिति परमस्थानं, सर्ग स्थित्यन्तकालेषु त्रिथैवं संप्रवर्तते । गुणप्रवृत्त्या परमं गुणं तस्या गुणं महदिति प्रकृतिविनिर्मुक्तात्मस्वरूपं, समस्तहेयरहितं विष्णवाख्यं परमं पदमित्यत्र भगवत्स्वरूपं, त्रीण्यप्येतानि परमप्राप्यत्वेन परमपदशब्देन प्रतिपाद्यन्ते, कथं त्रयाणां परमप्राप्यत्वमितिचेत, भगवत्स्वरूपं परमप्राप्यत्वादेव परमपदशब्दवाच्यम्, इतरयोरपि भगवत्प्राप्ति गर्भत्वादेव परमपदत्वं, सर्वकर्मविनिर्मुक्तात्मस्वरूपां वाप्तिर्हि भगवत्प्राप्तिगर्भा, त इमेसत्याः कामा अनृता पि धा नाइति भगवतो गुणगणस्य तिरोधायकत्वेना नृतशब्देन स्वकर्मणः प्रतिपादना'दिति । अत्र भगवत्प्राप्तिं निमित्तीकृत्य त्रयाणां परम प्राप्यत्वं प्रतिपादयतां भाष्यकृता मि॰ तात्पर्यम् । यस्मिन् प्राप्ये प्राप्ते सर्वस्मात्परं तत्त्वं नप्राप्तंभवति, पश्चात्प्राप्तव्यतयैव चावशिष्यते, तदेवच प्रतीकशब्दवाच्य मर्वाचीन प्राप्यम्, यस्मिन् प्राप्ते सर्वस्मात्परं तत्त्वं प्राप्तमेवभवति, पश्चात्प्राप्तव्यतया च नावशिष्यते, तत्परमप्राप्यमेव, अत्र भगवत्स्वरूपस्य स्वयं परतत्त्व रूपत्वेन तत्प्राप्तेः परतत्त्वप्राप्तिरूपत्वा त्तस्य स्वतएव परमप्राप्यत्वं, स्थानविशेष प्रकृतिवियुक्तात्मस्वरूपयो र्भगवत्स्वरूपतिरोधायकनिश्शेषा विद्यानिवृत्त्या प्राप्तिसमकालमेव भगवत्प्राप्तिनैयत्येन परमप्राप्यत्वंसंभवति, एतदभिप्रायेणैवच त्रयाणां परमपदशब्दव्यपदेशः, नामादिपदा-

र्थो स्साक्षा त्परब्रह्मप्राप्तिविधुर स्वप्राप्तिकत्वादेव प्रतीकशब्देन व्यवह्रियं त इति । इत्थश्च ब्रह्मप्राप्तितदभावयोरेव परमप्राप्यत्व प्रतीकत्व-प्रयोजकत्वावगमा दचिद्वस्तु तन्मिश्रयोरेव प्रतीकता विश्राम्यति, तत्रैवाविद्ययाब्रह्मप्राप्ति प्रतिरोधात् । अतएव पूर्वोदाहृतभाष्यदीपसारग्र-न्धे ष्वचिद्वस्तुतन्मिश्रोपासकविषयतयैव प्रतीकालम्बनशब्दो व्याख्यातः। प्रकृतिवियुक्तप्रत्यगात्मस्वरूपन्तु यथोक्तरीत्या ऽविद्याकृततिरोधान वि-गमेन ब्रह्मप्राप्तिगर्भ स्वप्राप्तिकत्वा त्परमप्राप्यमेव । अतएव - पर-मगतिपरमधामपरमपदादिशब्दैः प्रकृतिवियुक्तप्रत्यगात्मस्वरूपनिर्देश स्तत्रतत्रदृश्यते । त्रितय साधारणमिह विवक्षितम् परमप्राप्यत्वंच-स्व प्राप्त्युत्तरकालप्राप्तव्यस्वोत्कृष्टप्राप्यकाभिन्नप्राप्यत्वं ,स्वप्राप्त्युत्तरकालप्राप्त-व्यत्व स्वोत्कृष्टत्वोभयसम्बन्धावच्छिन्नाधेयतासम्बन्धेन प्राप्यवि-शिष्टान्यप्राप्यत्वपर्यवसितम् । उक्तसम्बन्धेन प्राप्याविशिष्टप्राप्यत्व-रूप मर्वाचीन प्राप्यत्वमेव च प्रतीकपदप्रवृत्तिनिमित्तमिह विवक्षितं । परम्मायस्मात्तत् परमं - परमश्च तत प्राप्यंच परमप्राप्यमिति वि-ग्रहे , परमशब्दघटक परशब्दस्य - उत्तरकालप्राप्तव्योत्कृष्टसम भिव्याहृतपदार्थतावच्छेदकावच्छिन्नपरतया , यस्मात्प्राप्ता दुत्तरकाल प्राप्तव्योत्कृष्टप्राप्यवस्तु नास्ति तादृशम् प्राप्य मित्यर्थसिद्धया परम-प्राप्यशब्देन यथोक्तरूपावच्छिन्नो ऽर्थः पर्यवसानतोलभ्यत इति बो-ध्यम् । स्थानविशेष प्रकृतिवियुक्त प्रत्यगात्मस्वरूपयोः प्राप्तिदशायां परमात्मनोऽपि प्राप्ते रुत्तरकालप्राप्तव्यत्वाभावेन यथोक्तलक्षणं परमप्राप्यत्वं तयोस्सम्भवति। ईदृशमेवच परमप्राप्यत्वं दर्शितवेदार्थसंग्रहग्रन्थाभिप्रेतं । उत्कृष्टत्वंचात्रा नन्दहेतुत्वंनिबन्धनं ग्राह्यम् । तेनान्यादृशोत्कृष्टत्वस्या न्यत्रसत्वेपि नक्षतिः । यद्वा-परान्महत् परमामितिविग्रहे अपरत्वेनाभि मता त्कस्माच्चित्प्राप्या त्परत्वेनाभिमतं यत्प्राप्यं तस्मादुत्कृष्टप्राप्यम् परमप्राप्यशब्देन लभ्यते । इत्थंच अचित्स्वरूपप्राप्यात्परं यद चिन्मिश्रचित्स्वरूपं प्राप्यं, तस्मादुत्कृष्टत्वलक्षणं परमप्राप्यत्वं स्वो

त्कृष्ट प्राप्योत्कृष्टत्वसंबन्धेन प्राप्यविशिष्टप्राप्यत्वपर्यवसितं प्रकृतिवियुक्तप्रत्यगात्मस्वरूप परमात्मलक्षण प्राप्यद्वयसाधारणं । पृषोदरादिवत्तदवयवलोपमाश्रित्य व्युत्पादनीयस्य परमशब्दस्य पूर्वोक्तव्युत्पत्तिव देषापि व्युत्पत्ति स्संभवति । एषापि व्युत्पत्ति र्भाष्यकाराभिमतैव । अतएव गीताष्टमाध्यायविंशैक विंशश्लोकभाष्ये भाषितम् , तन्मम, परमं धाम - परं नियमनस्थानम् , अचेतनप्रकृतिरेकं नियमनस्थानं, तत्संसृष्टरूपाजीवप्रकृति द्वितीयं नियमनस्थानम् , अचित्संसर्गवियुक्तं स्वरूपेणावस्थितं मुक्तस्वरूपं परमं नियमनस्थानमित्यर्थइति । अत्र प्रकृतिविनिर्मुक्त प्रत्यगात्मविषयस्य परमं धामेत्यस्य नियमनस्थानपर्वत्रये तृतीयपर्वस्थानरूपतां प्रकृतिवियुक्त प्रत्यगात्मन उपपाद्य तत्परत्वोपपादना त्परमशब्दस्य परान्महदिति व्युत्पत्ति रेवाभिमेता । अन्यथा नियमनस्थानपर्वत्रय प्रदर्शना नावश्यकत्वात् । एवं त्रयोदशाध्याय द्वाविंशश्लोकस्थ परमात्मशब्दव्याख्यानपरभाष्यग्रन्थेन पंचदशाध्याय सप्तदशश्लोकस्थ परमात्मशब्दभाष्यग्रन्थेनच परमशब्दस्येदृशव्युत्पत्तिरेवाभिमता ऽवगम्यते । तत्राप्यर्वाचीनपरत्वद्वयप्रदर्शनात् । एवम् परमेव परममिति स्वार्थिकप्रत्ययान्तत्व माश्रित्य परमशब्दस्योत्कृष्टमात्र विषयताया अपि सुवचत्वा दपुनरावृत्तिहेतुत्व निबन्धनो त्कर्षशालि प्राप्यत्वेन दर्शितोभयविषयः परमप्राप्यशब्दो भवितु मर्हति । परमशब्दस्य दर्शित रीत्या केवलोत्कृष्टमात्रविषयतापि दर्शितगीताभाष्ये दर्शितधामशब्दस्य प्रकाशपरत्वकल्पे ऽभिमेता । यथोक्तम् तत्र, 'अथवा प्रकाशवाची धामशब्दः, प्रकाशश्चेह ज्ञानमभिप्रेतम् , प्रकृतिसंसृष्टा त्परिच्छिन्नज्ञानरूपा दात्मनो ऽपरिच्छिन्नज्ञानरूपतया मुक्तस्वरूपं परमम् धामे' ति । अत्र परापरप्रकाशपर्वद्वयस्यैवा भिधाना त्परमशब्दस्योत्कृष्टमात्रविषयतैवाभिमेता । पूर्वकल्पाभिमेतव्युत्पत्ते रिहाप्यभिमेतत्वे अपरः प्रकाशः-परः प्रकाशः -परात्परः प्रकाशश्चेति - प्रकाशपर्वत्रयं

8-6 ७

ह्यभिधातव्यम् , असंभावितमेवच परात्परप्रकाशस्वरूपत्वं प्रत्यगात्म-नि, प्रकृतितत्त्वस्य प्रकाशरूपत्वाभावेना परप्रकाशपर्वरूपत्वासंभ-वात् । इत्थं परमप्राप्यत्वस्य विवक्षाभेदेन नानाविधस्य प्रकृतिवि युक्त प्रत्यगात्म परमात्मोभय साधारणस्य सम्भवेन परम प्राप्या दर्वाचीनत्व लक्षणम् प्रतीकत्वम् प्र-कृतिवियुक्त प्रत्यगात्मव्यावृत्तमेव भवति । अतो न पंचाग्निविदः-प्रतीकालम्बनाभवन्ति । यद्वा – परमशब्दघटक परशब्दस्योत्कृष्टमात्र विषयत्वस्वीकारे परमप्राप्यशब्देन लभ्यमानं स्वोत्कृष्टत्वसम्बन्धाव च्छिन्ना धेयतासम्बन्धेन प्राप्यविशिष्टान्यप्राप्यत्वपर्यवसन्नं परमप्राप्य त्वं परब्रह्मासाधारण मेवेह विवक्ष्यतां, उक्तलक्षण परमप्राप्यावांची न प्राप्यत्वमेवच प्रतीकत्वमिह विवक्षितं भवतु । तथापि नैते पंचा–ग्निविदः प्रतीकालम्बनकोटौ निविशन्ते । तथाहि। प्रतीकालम्बनत्वं नताव त्स्वप्राप्तिप्रयोजक स्वनिष्ठ विलक्षणविषयतानिरूपकत्वसंबन्धेन प्रतीक विशिष्टोपासनाश्रयत्वं । तथासति सर्वासु ब्रह्मविद्यासु प्रत्यगात्म-नोपि ब्रह्मशरीरतयोपास्यतायाः मुक्तिदशायां तथैत प्राप्यतायाश्च – तृतीयाध्याय तृतीयपादैकविंशाधिकरण तद्भाष्य चतुर्थाध्याय प्रथम पाद द्वितीयाधिकरण तद्भाष्य सिद्धत्वात । सर्वंह पश्यःपश्यति स-र्वमाप्नोति सर्वश इत्यादिश्रुत्या सर्वसाक्षात्कार सर्वप्राप्त्योर्मुक्तैश्वर्यतया श्रूयमाणत्वा त्तत्क्रतुन्यायेन प्राप्यस्योपास्यतायाः आवश्यकत्वाच्च स-र्वेषां ब्रह्मविदां पक्षद्वयेपि प्रतीकालम्बनत्वापत्तेः । उक्तं हि – प्रथमा-ध्याय तृतीयपाद पंचमाधिकरण सप्तमसूत्रभाष्ये 'ब्रह्मप्रेप्सोर्हि जी वात्मनस्स्वरूपंच ज्ञातव्यमेव, स्वयमपि कल्याणगुणएवस न्ननवधिकातिश यासंख्येय कल्याणगुणगणं परंब्रह्मानुभविष्यतीति ब्रह्मोपासन फलान्तर्गत त्वा त्स्वरूप याथात्म्यविज्ञानस्ये' ति । चतुर्थाध्याय चतुर्थपादषष्ठाधिकरण तृतीयसूत्रभाष्ये प्युक्तम् , 'निर्धूतनिखिलविकारं-निखिलहेयप्रत्यनीक कल्याणैकतानं निरतिशयानन्दं परंब्रह्म सविभूतिकं समस्तकल्याणगुण-

मनुभवति मुक्तः,' तद्विभूत्यन्तर्गतत्वेन विकारवर्तिनांलोकानामपि मुक्तभोग्यत्व 'मिति । अपितु-ब्रह्मप्राप्त्यभाव विशिष्ट स्वप्राप्तिप्रयोजक स्वनिष्ठ विलक्षणविषयतानिरूपकत्वसंबन्धेन प्रतीकविशिष्टोपासनाश्रयत्वमेवेह विवक्षितं प्रतीकालम्बनत्वं । तदेकप्राप्तिप्रयोजक तन्निष्ठविलक्षणविषयता शाल्युपासनाश्रयत्वस्यैव तदालम्बनत्वरूपत्वात् । स्वप्राप्तौ ब्रह्मप्राप्त्यभाव वैशिष्ट्यंच समानकालिकत्व सामानाधिकरण्यो भय सम्बन्धेन, ब्रह्मविदां मुक्तिदशायां ब्रह्मप्राप्तौ विद्यमानायामेव तदन्तःपातितया प्रतीकपदार्थप्राप्ते र्विद्यमानतया न प्रतीकालम्बनत्वं तेषामिति वक्तव्यं । इत्थंच परमात्म प्रकृतिवियुक्त प्रत्यगात्मो भय साधारण परमप्राप्यत्वपक्ष परमात्मासाधारण परमप्राप्यत्वपक्षयो र्द्वयोरपि पंचाग्निविदामपि नप्रतीकालम्बनत्वप्रसंगः, ब्रह्मप्राप्तिगर्भाया एव प्रकृतिवियुक्तप्रत्यगात्मप्राप्ते स्तदीयविद्याफलत्वात् , तदर्थमेव तदीयविद्याया स्तत्क्रतुन्यायेन ब्रह्मात्मकत्वेन प्रकृतिवियुक्तप्रत्यगात्मोपासन रूपतया शिक्षणाच्च । प्रतीकालम्बनशब्दघटक प्रतीकशब्दस्य प्रकृतितन्मिश्रमात्र परतया व्याख्यानपरो दाहृत भाष्यादिग्रन्थ स्तदेतत्पक्षद्वयेपि संगतः । द्वितीयपक्षे प्रकृतिवियुक्तप्रत्यगात्मनोपि प्रतीकपदार्थान्तर्भावेपि तत्प्राप्तिदशायां ब्रह्मप्राप्तिनैयत्येन ब्रह्मप्राप्त्यभावविशिष्ट तत्प्राप्तिप्रयोजक तदुपासनाप्रसिद्ध्या ऽत्रत्यप्रतीकशब्दस्य तत्परत्वासम्भवेन तथा व्याख्यानोपपत्तेः । तथाच प्रकृतितत्त्वं तन्मिश्रंवा तदेकप्राप्यतयो पासीनाना मवान्तरपुरुषार्थ तारतम्यसद्भावेपि तदीयपुरुषार्थस्य प्रकृतितत्त्वनिबन्धन पुरुषार्थकोटावेव निविष्टतया तादृशाधिकारिविषयः प्रतीकालम्बनशब्दः प्रकृतितत्त्वनिबन्धन पुरुषार्थभूतैश्वर्यार्थिविषयएव विश्राम्यति । तद्व्यतिरिक्तविषयो ऽप्रतीकालम्बनशब्दश्च तादृशपुरुषार्थविलक्षण प्रत्यगात्मतत्त्वनिबन्धन पुरुषार्थभूत कैवल्यनिष्ठ पंचाग्निविदधिकारिविषयः, ततो ऽपि विलक्षणपरमात्मतत्त्वनिबन्धन पुरुषार्थभूत भगवत्प्राप्तिनिष्ठ परब्रह्मोपासकाधिकारिविषयश्च विश्राम्यति । पंचाग्निविदां परब्रह्मोपासकानांच प्रा-

प्यनित्यत्वेना पुनरावृत्त्यर्हत्वेनैकोक्त्या ग्रहण मिह कृतम् । अतो न कथंचिदपि पंचाग्निविदां प्रतीकालम्बनताप्रसंग इति ॥ १४७ ॥

सू - ॥ १० ॥ विशेषंच दर्शयति ॥ ४ - ३ - १९ ॥

नामादिप्रतीकोपासकान् दृष्टान्तीकृत्य प्रतीकालम्बनत्वाविशेषेण हिरण्यगर्भलक्षण कार्यब्रह्मोपासकानाम प्यर्चिरादिगति तदधीनापुनरावृत्ति ब्रह्मप्राप्तिलक्षणफलाभाव स्समर्थितः प्राक् ॥ १४८ ॥

दृष्टान्ततया ऽभिमतानां नामादिप्रतीकोपासकानां तदभावो ऽसिद्ध इत्याशंकापरिहाराय तेषां तदभावं श्रुत्या दृढीकर्तुं प्रवृत्त मिदमसूत्रम् ॥ १४९ ॥

अस्यार्थः-विशेषंच - नामादिप्रतीकोपासकाना मर्चिरादिगत्यपुनरावृत्ति ब्रह्मप्राप्ती विना तादृशगत्यनपेक्षपरिमितफलप्राप्तिलक्षणं विशेषंच, दर्शयति-प्रतिपादयति, श्रुतिरेवेति ॥ १५० ॥

अत्र विवक्षिता श्रुतिश्च छान्दोग्ये सप्तमप्रपाठके प्रथमखण्डे 'सयोनामब्रह्मेत्युपास्ते यावन्नाम्नोगतं तत्रास्य यथाकाम चारोभवती'त्यादि पंचमखण्डिकाप्रभृतिः, 'प्राणोह्येवैतानिसर्वाणि भवती'त्यादि पंचदशखण्ड चतुर्थखण्डिकान्ता, एवं जातीयकास्थलान्तरास्थिताच ॥ १५१ ॥

अत्र नामादिगोचरमात्रे यथाकामसंचारादिलक्षण परिमितफल प्राप्तिरेव नामादिप्राणपर्यंतप्रतीकोपासकानां श्रूयते, नत्वपरिमित ब्रह्मप्राप्तिः ॥ १५२ ॥

यावच्छब्दादिना फलस्य परिमितत्वंहि स्पष्टीक्रियते ॥ १५३॥

यद्यपि प्राणलक्षणप्रतीकोपासनस्य परिच्छिन्नफलश्रवणं न स्प ष्टतयोपलभ्यते, तथापि - 'प्राणोह्येवैतानिसर्वाणि भवती'त्यादिषु

एतच्छब्दनिर्दिष्ट प्राकृतसकलप्राणिलक्षणा चिन्मिश्रचित्तत्त्वरूपपरि· मित फलप्राप्ति रवगम्यतएव ॥ १५४ ॥

'एषतुवा अतिवदति यस्सत्येनातिवदती ' त्यादि षोडशखण्ड श्रुत्या प्राणोपासकादपि सत्योपासकस्या तिवादित्वं प्रतिपादयन्त्यापि प्राणोपासकस्य परिमितफल भाक्त्व मेव गम्यते ॥ १५५ ॥

यद्यपि सत्यशब्दवाच्य भूमशब्दितपरब्रह्मोपासकस्यापि पंच-विंशखण्डान्ते ऽनवधिकातिशयानन्द ब्रह्मानुभवसर्वलोककामचारादि-लक्षणापरिमित फलप्राप्तिमात्रं श्रूयते, नार्चिरादिगतिः, तथापि सकल ब्रह्मविद्यानिष्ठानां तृतीयाध्याय तृतीयपादस्थे त्रयोदशे ऽ नियमाधि करणे 'य एव मेतद्विदुर्येचामी अरण्येश्रद्धां सत्यमुपासते ते ऽर्चिषम-भिसंभवती ' तिवाजसनेयकश्रुत्या, तद्यइत्थं विदुर्येचमेरण्ये श्रद्धातपइ-त्युपासतेतेर्चिषमभिसंभवतीति छान्दोग्यश्रुत्याचा चिरादिगत्या ब्रह्मप्रा प्तिसमर्थनात , चतुर्थाध्याये तृतीयपादस्थे प्रथमेऽर्चिराद्यधिकरणे सर्वेषामपि ब्रह्मोपासकानां समानप्रकरणन्यायेना चिरादिलक्षणैक-मार्गगामिता स्थापनाच्चे हापि तन्न्यायेन गतिस्सिध्यतीति नविरोध इतिबोध्यम् ॥ १५६ ॥

अयं भावः- अर्चिरादिगते ब्रह्मप्राप्तिफलनियततया श्रुतिभिःप्रति पन्नतया तादृशगत्यनपेक्ष ब्रह्मप्राप्तीतरपरिमितफलानां प्रतीकालंबना नां नतादृशगतिस्संभवति । इत्थंचा व्यवधानेन ब्रह्मप्राप्तिरूपं फ लमधिगंतु येऽधिकारिणः प्रस्थिताः, तानेवार्चिरादिरातिवाहिकगणोन यति, नहिरण्यगर्भोपासकं, तस्यापि प्राणरूपप्रतीकोपासक समशील तया प्रतीकालंबनताया अवर्जनीयत्वादिति ॥ १५७ ॥

बादरिपक्षे चतुर्थपंचम सूत्रोदाहृत श्रुतिस्मृत्यो जैमिनिप-क्षोक्तयैव दिशा निर्वाहो बादरायणस्या प्यभिमतो बोध्यः १५८॥

इदमत्र नवमादिद्विसूत्रया निष्पन्नं बादरायणतात्पर्यं सर्वस्वं । हिरण्यगर्भलक्षणं कार्यब्रह्मोपासीनां स्तादृशं ब्रह्मनयत्यातिवाहिकगण इति बादरिपक्षो न युक्तः, ब्रह्मविद्याप्रकरणेष्वेव श्रूयमाणाया - अर्चिरादिगते स्साक्षात्परब्रह्मप्राप्ति हेतुतयैव तत्र श्रूयमाणत्वात्, क्लि-ष्टकल्पनादिभि स्तादृश श्रुत्यन्यथानयने प्रबलतरबीजाभवात् तादृ शश्रुते रपरब्रह्मविषयत्वे परविद्याप्रकरण विरोधाव् सर्वगतस्यापि ब्रह्मणः गतिशास्त्रबल सिद्धस्य देशविशेषएव निश्शेषाविद्यानिवृत्ति सम्भवस्य दुरपह्नवतया तं विना तत्प्राप्तेरयोगेन मार्गविशेषेण - देशविशेषगतिपूर्वकप्राप्ते रयुक्तत्वाभावाच्च । यथाहि प्रकृतिमण्ड लएव क्वचित्पुण्यदेशे सत्त्वगुणोन्मेषः क्वचित्पापदेशे रजस्तमोगु-णोन्मेषः स्वर्गादिषु क्वचित्सुखैकतानता नरकादिषु क्वचिद्दुःखैकतान ताच लोकवेदसिद्धा नापलपितुं शक्या, तथैव सर्वगतेपि ब्रह्मणि - क्वचित्प्रदेशविशेषे जनानां सर्वविकारहेतु गुणत्रयमय प्रकृतितत्वसं सर्ग तन्मूलाविद्यादि सकलदोषसंपत्तिः - क्वचित्प्रदेशविशेषे शुद्ध सत्त्वतत्त्वसंसर्ग तन्मूलनिश्शेषाविद्यानिवृत्ति निरतिशयज्ञानविकासा-दि सम्पत्तिश्च नापलपितुं शक्यैवेति देशविशेषएव निश्शेषाविद्यानि वृत्ति वर्णनं नासम्भवदुक्तिकम् । परब्रह्मासाधारण नित्यलोकाअपि-च श्रुतिस्मृत्यादिषूद्घुष्यमाणा न तर्कमात्रेणापलपितुं शक्याः, श्रौते-ऽर्थे यथाश्रुतिप्रतिपत्तेरेव न्याय्यत्वात् अन्यथा शास्त्रैकप्रमाणस्य ब्रह्मणो पि तर्कबलेनापलाप प्रसंगाच्च, किम्बहुना - बादरिपक्षोपरि जैमि-न्युपाक्षिप्ता स्सर्वएव दोषा स्सर्वएव स्वपक्षसमाधयश्च सम्भवंत्येव । तस्मा त्परमव्योम विष्णुपदादिशब्दवाच्य स्थानविशेषः, अर्चिरादि ना तत्रगतस्यैवच निश्शेषाविद्यानिवृत्तिः, ब्रह्मप्राप्तिः, अपुनरावृत्ति श्चेति सर्वं प्रामाणिकमेव, अतो बादरिपक्षो ऽयुक्तएव । एवं परब्रह्मोपासकानेवा र्चिराद्यातिवाहिकगणो नयतीति जैमिनि

पक्षोप्ययुक्तः , प्रत्यगात्मोपासकानां पंचाग्निविदाम प्यर्च्चिरादि गति श्रुतेः, प्रत्यगात्मोपासकानां तत्क्रतुन्यायेन प्रत्यगात्मप्राप्तेरेव युक्तत्वेपि ब्रह्मप्राप्तिश्रवणान्यथा नुपपत्त्या तेनैव न्यायेन तेषां पुरुषार्थभूत प्रत्यगात्मप्राप्ते र्ब्रह्मप्राप्तिगर्भता, तदीयप्रत्यगात्मोपासनस्य ब्रह्मोपासनगर्भताच कल्प्यते, यथा- ब्रह्मोपासकानां ब्रह्मप्राप्ति स्तच्छरीरतया प्रत्यगात्मप्राप्तिगर्भा, तदीयब्रह्मोपासनंच प्रत्यगात्मोपासनगर्भं । तृतीयाध्याय तृतीयपादस्थे शरीरे भावाधिकरणे द्वितीयसूत्रे प्रत्यगात्मनोपि मुक्तिदशायां प्राप्यता उपासनदशायां प्राप्याकारविशिष्टस्य तस्यानुसन्धेयताच सर्वब्रह्मोपासक साधारणी निरूपिता, चतुर्थाध्याय प्रथमपादस्थे द्वितीये आत्मत्वोपासनाधिकरणेपि स्वात्मानंप्रत्यात्मतयैव ब्रह्मण उपास्यता निर्णीता, चतुर्थाध्याय चतुर्थपादस्थे द्वितीये ऽविभागेन दृष्टत्वाधिकरणे मुक्तिदशायां परस्ता द्ब्रह्मण स्स्वात्मनो ऽविभागेन प्राप्यताच समर्थयिष्यते । अतो यथा ब्रह्मोपासकानां प्रत्यगात्मनः प्राप्ति रुपासनं चास्ति , तथा प्रत्यगात्मोपासकानामपि ब्रह्मप्राप्त्युपासने प्रत्यगात्मप्राप्त्युपासनान्तर्भूते स्तः। नचैवं सति सर्वेषां ब्रह्मोपासकाना मात्मप्राप्ति ब्रह्मप्राप्त्यो रविशिष्टत्वे परब्रह्मोपासकानेव नयतीति वदता जैमिनिना किमपराद्धम् , तत्पक्षादस्मिन् पक्षे कोपि हि विशेषो नोपलभ्यते , पंचाग्निविदोपिहि यथोक्तरीत्या ब्रह्मोपासके ष्वेवान्तर्भूता भवन्तीति वाच्यम् । उभयेषां सामान्यतो ब्रह्मप्राप्तिफल ब्रह्मोपासननिष्ठत्वसौल्येपि प्रत्यगात्मपरमात्मलक्षण प्राधान्याप्राधान्यव्यत्यासेन प्राप्यतारतम्यस्य दुरपह्नवत्वात् । ब्रह्मोपासकस्य हि ब्रह्मैव प्रधानं प्राप्यम् , प्रत्यगात्मस्वरूपंत्वप्रधानप्राप्यमेव । पंचाग्निविदस्तु प्रत्यगात्मस्वरूपमेव प्रधानप्राप्यम् , ब्रह्मत्वप्रधानप्राप्यमेव । अतः प्राप्यभेदो दुर्वारः । एतदुक्तं भवति । भोग्यभोगोपकरण भोगस्थानादिविधया नानाविधं प्राप्यमस्ति । तत्र भोग्यविधया प्राप्यत्वं प्रधानप्राप्यत्वं। तदितरविधया प्राप्यत्वंचाप्रधानप्राप्यत्वं । परस्य

ब्रह्मणः भोगस्थानविधया प्राप्यत्वन्तू भयाधिकारिसाधारणं । प्रकृतिमण्ड लोर्ध्वदेशावच्छिन्ने समन्ततः प्रदीप्तज्योतीरूपे परस्मिन्नेव ब्रह्मणि स्वस्वभोगप्रतिनियतावान्तरस्थानभेदे उभयेषां स्वस्वभोगानुभवात् । पंचाग्निविदामपि प्रकृतिवियुक्त प्रत्यगात्मलक्षणप्राप्यस्य प्रकृतिमण्ड ले प्राप्तु मशक्यस्य प्रकृतेः परस्तादेव प्राप्तव्यतया तत्रच ज्योती-रूपस्य परस्य ब्रह्मण स्समन्ततः प्रदीप्ततया तदेव भोगस्थानम् । तत्र ब्रह्मनिष्ठानां भोग्यविधया प्राप्यमपि परमेव ब्रह्म, पंचाग्निवि दांतु प्रकृतिवियुक्तप्रत्यगात्मतत्त्वमेव, तथा प्रकृतिमण्डलोर्ध्वदेशाव· च्छिन्नस्य परस्य ब्रह्मणो भोगस्थानविधया प्राप्तिरेव चोभयविधा· धिकारिसाधारणी स एतान् ब्रह्म गमयतीत्यादिषु शास्त्रे ष्वमान-वायत्ता प्रतिपाद्यते । भोग्यविधया स्वाभिमतप्राप्यप्राप्तिस्तु स्वस्वोपास नस्वभावैकनिर्वाह्या । नामानवयत्नाङ्गिना । भोग्यविधया प्रा-प्तिर्नाम स्वादुतमतयानुभूयमान तत्तद्वस्तुसन्निकर्षविशेषलक्षण प्रधानतम प्राप्तिरेव । तादृशीचप्राप्तिः उपासनदशायां यस्यैवप्रधानप्राप्यतयो· पासनं तस्यैव-नान्यस्य, तत्क्रतुन्यायात् । लोकेपि स्वभावतोमधुरेष्व-पीक्षुक्षौद्रगुडादिषुवस्तुषु कस्मैचित्किंचिदेवरोचते, स्वस्ववासनानुगु णरुचिभेदवशाच्च तत्तत्पुरुष स्स्वस्वरुचिपरिगृहीतमेव वस्तु स्वादुतम-मनुभवति, नापरंमधुरतममपि वस्त्वनुभवितुं प्रवर्तते । तस्मात्प्रकृ-तिप्रत्यगात्मपरमात्मना मनुकूलत्व तारतम्येपि प्राथमिक स्वस्वरुचि भेदवशा दधिकारिणां तत्तत्परिग्रहोऽव्यवतिष्ठते । तथाचैश्वर्यार्थिनामीदृशं प्रधानतमप्राप्यत्व मचिद्वस्तुविशेषएवेति विलक्षणाचिद्वस्तुविशेषप्राप्ति-लक्षणमैश्वर्यमेव तेषां पुरुषार्थः, प्रकृतिवियुक्त प्रत्यगात्मोपासकानां पंचाग्निविदां प्रकृतिवियुक्तत्वलक्षण कैवल्य विशिष्टप्रत्यगात्मस्वरूप एव तादृशप्राप्यत्वमिति कैवल्यविशिष्ट प्रत्यगात्मस्वरूपप्राप्तिरेव ते-षां पुरुषार्थः, ब्रह्मनिष्ठानां भगवत्येव तादृशप्राप्यत्वमिति भगव-त्प्राप्तिरेव तेषां पुरुषार्थ, इत्युपासकानां सुकृततारतम्यायत्त तत्त्व-

विशेषविषयक प्राथमिकरुचिवैचित्री निबन्धनेयं पुरुषार्थवैचित्रीक्लृप्तिः। अल्पास्थिरत्वा ल्पास्थिरत्वा नन्तस्थिरत्वादिकं तत्तत्तत्वस्वभावनिबन्धनं। प्रकृतितत्त्वस्य क्षरणशीलतया गुणत्रयमयतयाच तत्प्राप्तिलक्षणस्यैश्वर्यपुरुषार्थस्यानित्यत्व मल्पत्वम् प्राप्यस्यानित्यतया तदर्थिनां पुनरावृत्तिश्च सम्भवति । प्रकृतिवियुक्तप्रत्यगात्मस्वरूपस्य नित्यतया तत्प्राप्तिलक्षणस्य कैवल्यपुरुषार्थस्य नित्यत्वम् प्रत्यगात्मनो ज्ञानानन्दमयतया प्रकृतितत्त्वा त्सुदूरव्यावृत्तत्वेपि परिच्छिन्नस्वरूपगुणतया भगवत स्सुदूरापकृष्टतया तत्प्राप्तिलक्षण परमानन्दा दल्पतमत्वं च सम्भवति । भगवच्छब्दितस्य परब्रह्मतत्वस्य त्रिविधपरिच्छेदरहितस्वरूपतया ऽ त्यद्भुतदिव्यरूपतया ऽ नवधिकातिशया संख्येयकल्याणगुणगणौघ महार्णवतया ऽ परिच्छिन्नोभय विभूत्यैश्वर्यसम्पन्नतयाच तत्प्राप्तिलक्षणस्य परमपुरुषार्थस्य स्थिरत्व मनन्तत्वंच सम्भवति । कैवल्यपुरुषार्थनिष्ठानां पंचाग्निविदां भगवत्प्राप्तिलक्षणपरमपुरुषार्थनिष्ठानां परब्रह्मनिष्ठानां चोभयेषां प्राप्यवस्तुस्थानादिनित्यतानिबन्धन मपुनरावृत्तित्वं त्वेकरूपमेव। अतएव चोभयेषा मपुनरावृत्तिहेतु रर्चिरादिलक्षणा गतिरेका श्रूयते । इत्थं तत्वत्रयस्वभाववैचित्रीवशेनैव तत्प्राप्तिलक्षण पुरुषार्थवैचित्रीसम्भवा त्पंचाग्निविदां ब्रह्मनिष्ठानाश्च प्राप्यपुरुषार्थभेदो ऽ वश्यमेवाभ्युपेयः। अन्यथा सुदूरमपि गत्वा तद्यइत्थं विदु र्येचेमेरण्ये श्रद्धातप इत्युपासत इत्यादिश्रुत्या पंचाग्निविदः परब्रह्मोपासकांश्च विभज्य निर्दिश्या र्चिरादिगति ब्रह्म प्राप्त्यपुनरावृ त्त्युपदेशासांगत्यस्य परिहर्तु मशक्यत्वात। अस्या श्श्रुतेश्च परमप्राप्यभूतै कवस्तुपर्यवसाय्यगांगिभावापन्नोपासननिष्ठ द्विविधाधिकारिविषयत्वं वा कार्यब्रह्मान्तर्भूतभिन्नभिन्नद्विविधप्राप्यपर्यवसायि द्विविधोपासननिष्ठ द्विविधाधिकारिविषयत्वं वा नसम्भवतीति च प्रागेव निरूपितम् । प्राप्यपुरुषार्थभेदमन्तरेणोपासनाकारवैचित्रीमात्रेग तथोपदेश इत्यपिच नसुवचम्। तथा

स्व त्वनेकासां ब्रह्मविद्यानां नानास्थानविशेषणादिभेदभिन्नात्यन्त वि-
लक्षणाकाराणां श्रूयमाणतया तन्निष्ठानां भेदेनानुत्कीर्तनस्य पंचाग्नि-
विदां परं भेदेनोत्कीर्तनस्य च कारणाभावात् । किंबहुना । पंचाग्नि
विद्यायां प्रत्यगात्मस्वरूपमेव तत्तदाकारै रुपास्यतया निर्दिष्टं दृ-
श्यते , ब्रह्मविद्यासुच ब्रह्मैवोपास्यतया निर्दिष्टं दृश्यत इति स्प-
ष्टतरमेव वैलक्षण्यं दृश्यते । श्रुत्या तथा निर्देशश्च तयो स्तत्र प्र-
धानतयोपास्यत्वं प्राप्यत्वं चान्तरेणानुपपन्नः । पूर्वोक्तरीत्या दर्शित
द्विविधाधिकारिविद्यासु प्रत्यगात्मपरब्रह्मोभय विषयकतया अव-
श्यं सत्त्वे प्येकैकस्मिन् प्रकरणे एकैकमात्रस्पष्टनिर्देशस्य तत्रतत्र त-
स्यतस्य प्राधान्येनो पास्यत्व प्राप्यत्वगमकत्वात् । नच तत्तत्प्राप्य
वस्त्वनु भवगत स्वादुता तारतम्यस्य तत्तद्वस्तुगतानुकूलता तारत-
म्यनिबन्धनत्वा दुभयेषा मधिकारिणां प्रत्यगात्म परमात्म लक्ष-
णोभयप्राप्तौ सत्या मुभयेषा मपि परब्रह्मणः प्राप्तिरेव प्रधानत
या निष्पत्स्यते - न प्रत्यगात्मनः , परब्रह्मणएवा नुकूलता प्र-
कर्षवत्त्वेन तत्प्राप्ते रेव स्वादुतमतया ऽनुभवसम्भवात , अतः पं-
चाग्निविदां ब्रह्मविदां च नोक्तरीत्या पुरुषार्थतारतम्यं वक्तुम्
शक्य मिति वाच्यम् । परस्य ब्रह्मण एकस्यैव स्वेच्छाप्रति
नियत देशभेदेषु नानाविधविलक्षणानन्दहेतुपरिकरविशिष्टवेषेण त-
दविशिष्टवेषेणच नानाविधायाः प्राप्ते स्सम्भवेन पुरुषार्थ-
तारतम्यस्य सूपपादत्वात । उपासनप्रीतम् परम् ब्र-
ह्म ह्युपासकानातिवाहिक वर्त्मना प्रकृतिमण्डला " त्परस्ता
त्समन्ततः प्रदीप्तज्योतीरूपं स्वात्मानं प्रापय्य तादृशेस्वात्मानि त-
त्र तत्र तत्तत्पुरुषार्थानुभव प्रतिनियतस्थानेषु तांस्तानुपासकां स्त-
त्तदुपासनानुगुण पुरुषार्थप्राप्तये यथार्हं स्वस्वशक्त्यैव प्रवर्तमानान् वा
सूरिभिरभ्युद्गम्य नीयमानान् वा कृत्वा तंतं पुरुषार्थं मसंकीर्णमेवा-
नुभावयतीति नकश्चिद्विरोधः । परं ब्रह्म व प्रकृतेः परस्ता दतिरोहितं

समन्तत आकाशव त्प्रदीप्तमपि सर्वत्र नैकविधानंदहेतु परिकर-विशिष्टं वर्तते, अपितु - तत्तदुपासकोपासनानुगुण्येन तत्र तत्र-परस्परविलक्षण नानाविध भोग्य भोगोपकरण भोगस्थानादिलक्षण नानापरिकरविशिष्टवेषेण तादृशपरिकरविशिष्टवेषेणञ्च प्रदीप्तं वर्तते । तादृशपरिकरविशिष्टवेषेण वर्तमान ब्रह्मप्रदेशविशेषे विलक्षणानन्दहेतु परिकरविशेषविशिष्टं ब्रह्मप्राप्तिलक्षण परिपूर्ण ब्रह्मप्राप्त्यभावा न्मद्दतिनभासि खद्योतव त्परस्मिन् ब्रह्मणि स्वात्मानुभव प्रतिनियते तादृशप्रदेश विशेषे स्वाच्छन्द्येनं प्रवर्तमानानां प्रकृतिविमुक्तस्वस्वरूपा पन्न प्रत्यगात्मनां स्वात्मानुभवानंदमात्रतृप्तत्वलक्षण कैवल्य मोक्षएव पुरुषार्थः, तादृशपरिकरविशेषविशिष्ट ब्रह्मप्रदेशविशेषे प्रवर्तमानानां परब्रह्मनिष्ठानांच परिपूर्ण ब्रह्मप्राप्ति लक्षण परम मोक्षएव पुरुषार्थ इति पुरुषार्थतारतम्यंहि सूपपादं, प्रकृतिमण्डलात्परस्ता त्समन्ततः प्रदीप्तस्यापि परस्य ब्रह्मणो नैकविधा प्राप्ति दृश्यते । नाहिखल्वर्चिरादि मार्गेणगतानां परब्रह्मोपासकानामपि लोकविशेषप्राप्तिर्लोकविशेषे प्रविष्टोन्मादक नगरोद्यानविमानक्रिडोद्देशविशेषादि प्राप्ति स्सकलेतरपदार्थविस्मारक निरवधिक सुखसन्दोहात्मकानुभव विशेषहेतु भगवद्दिव्यमंगळ विग्रह तच्चरणारविन्द तत्कटाक्ष पातादिप्राप्तिश्चैकरूपा संप्रतिपन्ना । तत्तद्वस्तुगतस्वाभाविकानुकूलत्वाकाराणां तारतम्यंहि स्वतस्सिद्धम् । नहि ब्रह्मस्वरूपगुणविग्रहादिगत मनुकूलतमत्वं विभूतिभूतेषु प्रकृत्यादिषु प्रामाणिकं । यथाच निश्शेषाविद्यानिवृत्ति र्देशविशेष कालविशेषादिसापेक्षा, तथैव तत्तद्वस्तुगतानुकूलत्वातिशयविषयकानुभव विशेषोपि स्थानविशेषतत्तद्वस्तुसन्निकर्षविशेषादिसापेक्ष एव । प्रकृतितत्त्वनिबन्धनै श्वर्यपुरुषार्थिनामपिहि [प्रकृति तत्त्वस्य] सर्वत्रैकत्वेपि न लोकविशेषप्राप्त्यप्सरःप्राप्त्योस्तुल्यरूपतादृष्टा । नहीं द्रलोक एव हिरण्यगर्भैश्वर्य प्राप्तिस्संभवति । तथाच, प्रकृतिमंडल ऐश्वर्यविशेषप्राप्ति र्यथा स्थानभेदसापे-

क्षा, तथा निश्शेषाविद्यानिवृत्तिदेशविशेषेपि पुरुषार्थभेद स्स्थानभेदो लोकभेदश्च सम्प्रतिपन्नएव । तस्माद्देशविशेषावच्छिन्ना तिरोहित ब्रह्म संयोगलक्षणाया स्स्वस्वाभिमतपुरुषार्थभोगाधार विपुलतरस्थानभूत-ब्रह्मप्राप्ते रमानवायत्तायाः पंचाग्निविद्ब्रह्मविदो रविशेषेण प्रतिपादनमात्रेण न तयोः पुरुषार्थभेदोऽपलपितुं शक्यः । यथोक्तलक्षण स्वाद्भुतमानुभूयमान तत्तद्वस्तुविलक्षणमाप्त्योरेव पार्थक्येन तयोः पुरुषार्थत्वसम्भवादिति । परस्य ब्रह्मणो भोगाधारस्थानरूपताच एवमेवैष-संप्रसादोऽस्माच्छरीरा त्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेनरूपेणाभि निष्पद्यते, स उत्तमः पुरुषः, स तत्र पर्येति जक्षत्क्रीडन् रममाण स्स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वा नोपजनं स्मरन्निदं शरीर मिति छान्दोग्याष्टमप्रपाठक द्वादशखण्डगत द्वितीयतृतीयखण्डिकांशभूत श्रुतौ तत्रेति परब्रह्मणो भोगाधारस्थानतया निर्देशा त्सिद्धा । यथोक्तलक्षण विलक्षणात्मप्राप्तीच्छया ऽऽत्मोपासनकरणादेव पंचाग्निविदामात्मोपासकत्वेन व्यवहारः । उक्तलक्षणपरिपूर्ण ब्रह्मप्राप्तीच्छया ब्रह्मोपासनकरणादेवच ब्रह्मनिष्ठानां ब्रह्मोपासकत्वेन व्यवहारश्चोपपद्यते । अन्यथा तादृशव्यवहारभेदकाकारस्यैव दुर्वचत्वात् । प्राधान्येन तत्तदुपासीनेष्वेवहि तत्तदुपासकत्व व्यवहारो मुख्यः । अनयोः पुरुषार्थभेद तदनुभवस्थानभेदादिकंच श्रुति स्मृती तिहास पुराण भगवच्छास्त्रादिषु बहुधा प्रपंञ्चितं नापलपितुं शक्यम् प्रमाण परतन्त्रै रास्तिकाग्रेसरैः । अतः - परंब्रह्मोपासीनानेव नयत्यातिवाहिकगणइति जैमिनिपक्षोप्ययुक्तएव । तथाच परं ब्रह्मोपासीनान् प्रकृतिवियुक्तं प्रत्यगात्मानं ब्रह्मात्मक मुपासीनांश्च नय त्यातिवाहिक गण इति सिद्ध स्सिद्धान्तइति ॥ १५९ ॥

इदमत्र बोद्धव्यम् । अर्चिरादिगतिश्रुतयः कार्यब्रह्मोपासकमात्रविषयावा परब्रह्मोपासकमात्रविषया वा परब्रह्मोपासक प्रकृतिवियुक्त ब्रह्मात्मकप्रत्यगात्मोपासकै तदुभयविषयावेति त्रिशिरस्कविचारे तृतीयपक्षसिद्धान्त स्थापनपर मिदं कार्याधिकरणं ॥ १ ॥

परब्रह्मोपासकानां स्वप्राप्यस्य परस्य ब्रह्मण स्सर्वगतत्वेन त-त्प्राप्तये क्वचिद्गमनानौचित्यात् अर्चिरादिमार्गं गन्तॄणां प्राप्यस्य बहुवचनान्तब्रह्मलोकशब्देन स्थूलवस्तुमय लोकविशेषादिरूपतया-प्रतिपादनात परब्रह्मोपासकानां तथाविधवस्तुप्राप्त्ययोगात हिरण्य गर्भलक्षणकार्यब्रह्मोपासकानामेव तत्सम्भवाच्च हिरण्यगर्भलक्षणकार्यब्र-ह्मोपासकविषयैव गति श्रुतिरिति बादरि तात्पर्यनिष्कर्षः ॥ २ ॥

ब्रह्मशब्द मुख्यवृत्ति प्रमाणायोगात् तद्बलेन समानप्रकरण स्थ बहुवचनान्त ब्रह्मलोकशब्दस्य समानाधिकरणसमासतया ब्र-ह्मपरतासम्भवात् पाशाधिकरणन्यायेन बहुवचनार्था विवक्षासम्भवा त् परब्रह्मासाधारण लोकविशेषाणामपि मुक्तप्राप्यानां प्रामाणिकत-या तद्विषयतया षष्ठीसमासस्यापि सम्भवात् ब्रह्मणस्सर्वगतत्वे प्य-विद्यानिवृत्तिपूर्वक तत्प्राप्ते र्वर्णाश्रमधर्म शौचाचारकालविशेषादि सापे क्षत्ववद् देशविशेष सापेक्षताया अपि प्रमाणप्रतिपन्नाया दुरपह्नवत्वा च्छ्रौतेऽर्थे यथाश्रुत्यैव प्रतिपत्तव्यत्वाच्च परब्रह्मोपासक विषयैव ग-तिश्रुतिरिति जैमिनि तात्पर्यनिष्कर्षः ॥ ३ ॥

अनयो र्बादरिजैमिनिपक्षयोः तद्य इत्थं विदुर्येचमेऽरण्ये श्र-द्धा तप इत्युपासतइत्यादिश्रुतौ अर्चिरादिपथगामिनां द्विधा विभज्य निर्देशः स एनान् ब्रह्म गमयतीति प्राप्यैक्य श्रवणेन कार्यब्रह्म पर-ब्रह्मणो रेकविध प्राप्योपासकेष्वेव पूर्वापरभावापन्नांगांगि भूतोपा सन पर्वद्वयनिष्ठ द्विविधाधिकारि तात्पर्यकतयावा उपासनाकार भेद मात्राधीन द्वैविध्यतात्पर्यकतयावा ऽगत्या नेयइत्येवा भिप्रेतम् ॥ ४ ॥

तद्य इत्थं विदुरित्यादि श्रुतेः पूर्वापरभावापन्नांगांगिभूतो पासननिष्ठ द्विविधाधिकारिपरत्वे तादृश द्विविधाधिकारिणा म्मध्ये एकविधाधिकारिणा मर्चिरादिगत्युपदेशमात्रेण द्विविधाधिकारिणाम-पि तत्सिद्ध्या द्विविधाधिकारिणां विभज्य निर्देशपूर्वक गत्युपदेश

स्य निरर्थकत्वात् उपासनाकार भेदमात्राधीन द्वैविध्याभिप्रायक त्वेच अनेकानां ब्रह्मविद्यानां विविध विचित्र नानास्थानाकार विशेषणादि भेदभिन्नानां सत्त्वेन तन्निष्ठान् पृथक्पृथग्भेदेना निर्दिश्य-पंचाग्निविद्यालक्षणैक विद्यानिष्ठान् परं पृथक् निर्दिश्य तेषा मर्चिरादिगत्युपदेशे कारणाभावा त्पंचाग्निविद्याया इतरपरविद्याभि स्तुल्यप्राप्यकत्वे तासामिवास्याअपि येचेमेरण्ये श्रद्धातप इत्युपासत इत्यनेनैव संग्रह सम्भवेन पृथक् निर्देशस्य कथंचिद-पि प्रयोजन वत्त्वासम्भावस्य दर्शित श्रुतेः सुदूरमपि गत्वा परस्परविभिन्नप्राप्योपास्यक विलक्षणविद्यानिष्ठ द्विविधाधिकारि विषयत्वस्यावश्याभ्युपगन्तव्यत्वात् , सएनान् ब्रह्मगमयतीति प्राप्यैक्य निर्देशस्य उभयसाधारणावान्तर प्राप्यैक्यविषयतयापि निर्वाहसम्भवाच्च तत्र इत्थं विदुरितिनिदिष्टाः पञ्चाग्निविदः कैवल्य पुरुषार्थ फलक प्रकृतिवियुक्त ब्रह्मतमक प्रत्यगात्मोपासननिष्ठा एवाधिकारिणः , येचेमेरण्येश्रद्धातप इत्युपासत इति निर्दिष्टाः भगवत्प्राप्तिलक्षण परमपुरुषार्थफलकः परब्रह्मोपासननिष्ठा अधिकारिण इति स्वीकृत्य-तादृशद्विविधाधिकारिपरत्वमेवास्याश्श्रुते र्वाच्यमिति भगवतो बादरायणस्य तात्पर्यनिष्कर्षः ॥ ५ ॥

दर्शिता र्थानुगुण्येन दर्शिताधिकरणसूत्राभिप्रेतानुमानानां प्रयोगोऽपि बोद्धव्य इति ॥ १६० ॥

इति श्री शारीरक मीमांसा महार्णवांतः पातिनि

श्रीशैलानन्तपूरुष श्रीरङ्गाचार्य विरचित कार्याधिकरणवादकल्लोले

सिद्धांतार्थाभिधान नामा

॥ प्रथमस्तरंगः ॥

Sasthra muktha vali-18.

# KARYADHIKARANA VADA.

( 2nd, and 3rd Tarangàs. )

BY

Widwan. T. A. P. SRIRANGACHARIAR.

Edited By

P. B. ANANTHA CHARIAR. Sanskrit Pandit.

Printed at the

SRI SUDARSANA PRESS.

CONJEEVERAM.

Price Re. 1- 0 - 0

1903.

श्रीरस्तु ।

# कार्याधिकरणवादः

( द्वितीय तृतीय तरंगौ । )

श्रीपदपुरनिवासिना

श्रीशैलानन्तपुरुषवंश्येन

श्रीरंगाचार्येण विरचितः

श्रीकांची प्रतिवादिभयंकरं अनन्ताचार्येण परिशोधितः

श्रीसुदर्शनमुद्राक्षरशालाया

समुद्रित ।

॥ कांची ॥

१९०१.

इदानी मेतन्मूल्यम् - १ - ० - ०

श्रीः ।

श्रीमते रामानुजाय नमः ।

श्रीमदनन्तार्यमहागुरवे नमः ।

श्रीमते वरवरमुनये नमः ।

# कार्याधिकरणवादे द्वितीयस्तरंगः ।

अथात्रसर्वतन्त्र स्वतन्त्र कवितार्किकसिंह वेदान्ताचार्यपक्षः प्रमाण प्राचीनसम्प्रदाया ननुगुणइति प्रतिपाद्यते ॥१॥

अयन्तावदाचार्यो वेङ्कटनाथार्यनामा विश्वामित्रगोत्रोद्भवो भगवद्रामानुजमुनिना निष्कंटकीकृते प्राचीनएव सुसमीचीने परमवैदिकसिद्धान्ते प्राचीनविजातीय मभिनवं कंचनपन्थानं स्वय मुत्प्रेक्ष्य तस्मिन् स्वयं प्रवृत्तस्स्वपाण्डित्य महिमाडम्बरलम्भित विस्रंभांश्च जनां स्तत्रप्रवर्तयं स्तेषांस्वोत्प्रेक्षितेनपथा वेदान्तार्थप्रवचन प्राचुर्य प्रथित वेदान्ताचार्यसंज्ञः- स्वाश्रितानामयमेव भगवद्रामानुजमुन्यभिमतः पन्था इतिच बोधंसंजनयन्नस्मिन् सिद्धान्ते काञ्चिद्वैयाकुलीमापादयामास ॥२॥

अपिचायं प्रायशस्सर्वत्रैव स्वोत्प्रेक्षितेन स्वतन्त्रेणैव वर्त्मना सञ्चारेण सर्वतन्त्रस्वतन्त्रइति-स्वोत्प्रेक्षितवर्त्मानुगुण ग्रन्थग्रथन तदनुकूल तर्ककौशल तन्मूलप्रतिपक्ष प्रतिक्षेपप्रवृत्तिभिः कवितार्किकसिंह इतिच समगीयत ॥ ३ ॥

तेन विरचिता प्रकृताधिकरणार्थ वैयाकुली तावदिह परिह्रियते॥४॥

इदं तावदत्र वेदान्ताचार्यमतं । कैवल्यंनमुक्तिः । तन्निष्ठाश्चप्रतीकालम्बना एव । नच तेषामपुनरावृत्तिः । अस्तुवाकथंचिदपुनरावृत्तिः । तथापि न निश्शेषप्रकृतिसम्बन्ध निवृत्तिरेतेषां सम्भवति । अवर्जनीयैवच कथंचिदपि सूक्ष्मतमप्रकृतिसम्बन्धानुवृत्तिरेषां । नच तेषा मर्चिरादिगतिः । नापिचप्रकृतेः परस्तात्फलानुभवस्थानं । पंचाग्निविच्च ब्रह्मनिष्ठेष्वेवान्यतमः कश्चित् । सचोक्तकेवलादन्य एवेति॥५॥

एवं भूतंचैतन्मतं तत्प्रणीतरहस्यत्रयसार तात्पर्यचन्द्रिका न्याय सिद्धाञ्जनादिषु व्यक्तं ॥६॥

इमा स्तावदत्र वेदान्ताचार्यतदनुबन्धिनां सिद्धान्तिनांच दशविधा विप्रतिपत्तयोभवन्ति ॥ आत्मानुभव लक्षण कैवल्याख्य पुरुषार्थोनश्वरोवा नित्योवा ॥१॥ मार्गान्तरगामि गम्योवा-अर्चिरादिमार्गगामि गम्योवा ॥२॥ निश्शेषप्रकृतिसंसर्ग निवृत्तिलक्षण मोक्षानात्मकोवा- तादृशमोक्षात्मकोवा ॥३॥ तस्यसूक्ष्मतमप्रकृति संसर्गगर्भत्व मुपगम्यैव कथंचिन्नित्यत्व मुपपाद यितुं शक्यंवा नवा ॥ ४॥ तदनुभवस्थानं प्रकृतिमण्डलान्तःपातिनश्वरंवा तद्बहिर्भूतं नित्यंवा ॥५ ॥ पंचाग्निविद्या निष्ठादन्यः कैवल्यनिष्ठोनाम कश्चि दधिकारी प्रामाणिकोवा - सएवसवा ॥६ ॥ पंचाग्निविद्या निष्ठस्य प्रकृति मण्डलान्तः पाति स्थानानुभाव्यमात्म प्राप्तिफलमेकं- तद्बहिर्भूत स्थानानु भाव्यं ब्रह्मप्राप्तिलक्षणं फलमपरंचेति पौर्वापर्यानुभाव्यं फलद्वयंप्रामाणिकंवा नवा॥७॥ पंचाग्नि विद्यानिष्ठ ब्रह्मनिष्ठयोः परमंफलं तुल्यशीलंवा नवा ॥८॥ प्रकृतिमण्डलादूर्ध्वदेशे पुरुषार्थभेदोऽ प्रामाणिकोवा-प्रामाणिकोवा ॥९॥ तत्क्रतुन्यायो ऽयोगव्यवच्छेदपरोवा - अन्ययोगव्यवच्छेदप रोवा ॥ १०॥ इति ॥७॥

अत्रसर्वासु विप्रतिपत्तिषु पूर्वाकक्ष्या वेदान्ताचार्य तदनुबन्धिना मुत्तरकलार्यसंज्ञानां, उत्तरातुलोकाचार्य तदनुबन्धिनां दक्षिणकलार्य संज्ञानामिति विवेकोबोध्यः ॥८॥

अत्र सर्वत्र पूर्वा पूर्वपक्षिणां कक्ष्या साम्प्रदायिक सर्वपूर्वाचार्य श्री सूक्ति श्रुतिस्मृत्यादि प्रमाणजातशारीरक शास्त्रन्यायविरुद्धा, नापिच समीचीनन्यायमूले त्युत्तरासिद्धान्तिनांकक्ष्यैव सर्वतस्साधीयसी ॥९॥

इति श्री शारीरकमीमांसा महार्णवान्तःपातिनि श्रीशैलानन्तपूरुष श्रीरंगाचार्यविरचित कार्याधिकरणनाद कल्लोले वादिप्रति वादि विप्रतिपत्ति विभाननामा द्वितीय स्तरंगः ॥२॥

---

श्रीः

# अथ तृतीयस्तरंगः ।

अथात्मानुभवलक्षण कैवल्याख्यपुरुषार्थो नश्वरोवा नित्यो वेति प्रथमविप्रतिपत्ति विचार्यते ॥ १ ॥

अत्र पूर्वपक्षिणो मन्यन्ते । कैवल्याख्यपुरुषार्थो नश्वर एव, "सर्वे च्यवनधर्माणः प्रतिबुद्धस्तु मोक्षभागि" ति मोक्षधर्मवचनेन प्रति बुद्धेतरेषां सर्वेषा मनित्यपुरुषार्थत्वावगमात् । " जिज्ञासु र्लभते भक्ति" मिति मोक्षधर्मवचनेन जिज्ञासुशब्दितस्य कैवल्यनिष्ठस्य स्वप्राप्य पुरुषार्थप्राप्त्यनन्तरं क्रमेण भगवत्प्राप्तिहेतुभक्तियोगलाभाभिधानेन कैवल्यपुरुषार्थस्य नित्यत्वे तदुत्तरपुरुषार्थान्तर प्रवृत्त्ययोगात् । भगव त्परांकुशदिव्यसूरिणापि श्रीमुखसूक्ताख्य द्राविडब्रह्मसंहितायां प्रथ- मकाण्डद्वितीय श्रीमुखसूक्तपंचमगाथायां कैवल्यपुरुषार्थनिर्देशानन्तरं भगवत्प्राप्तिरूपपुरुषार्थस्य नित्यत्वाभिधानेन तद्व्यवच्छेद्यतया अभिप्रे- तस्य कैवल्यस्यानित्यतायाः एवाभिव्यञ्जितत्वाच्चेति ॥ २ ॥

यथोक्तं वै रहस्यत्रयसारैकोनत्रिंशच्चरमश्लोकाधिकारे मोक्षयि- ष्यामीति पदव्याख्यानभागे – " केवलात्मानुभवो नित्यो नेत्यंश स्सा- क्षान्मोक्षो नेत्यंशश्च – "चतुर्विधा मम जना भक्ता एवहि ते श्रुताः । तेषा मेकान्तिन श्श्रेष्ठा स्तेचैवानन्यदेवताः ॥ अहमेव गति स्तेषां निराशीः कर्मकारिणाम् । येतु शिष्टा स्त्रयो भक्ताः फलकामाहि ते मताः ॥ सर्वे च्यवनधर्माणः प्रतिबुद्धस्तु मोक्षभागि" ति वचनेन सिद्धः ॥ १ ॥ " मुच्येतार्त स्तथारोगा च्चतुर्त्वेमामादितः कथाम् । जिज्ञासु र्लभते भक्तिं भक्तो भक्तगतिं लभे" दित्युक्त्या श्रीगीतायां जिज्ञासु रित्युक्त आत्मनिष्ठोपि क्रमेण ज्ञानीभवे दित्युक्तं भवति ॥२॥

श्रीमुखसूक्ताख्यद्राविडब्रह्मसंहितायां प्रथमकाण्डद्वितीय श्रीमुखसूक्त पंचमगाथायां भगवदनुभवस्य नित्यत्वाभिधानेना प्येतद्व्यवच्छेद्य आत्ममात्रानुभवो नित्यो नेत्यंशो व्यंजितः ॥ ३ ॥ अस्य – षष्ठकाण्ड नवमश्रीमुखसूक्तदशमगाथादिषु नाशराहित्योक्तिरपि चातुर्मास्यादि कर्मफलविशेषेष्वक्षय्यत्वोक्तिवदतिचिरकालस्थायित्वाभिप्राये"ति ॥ ३ ॥

एवं स्तोत्रभाष्ये चतुर्थश्लोकव्याख्याने प्युक्तं – "भोगइह स्वर्ग स्वाराज्यादि सुखानुभवःस्वात्मानंदानुभवश्च ॥ १ ॥ तस्मिन् मुक्तिश-ब्दं केचिदुपचरन्ति ।२। नहि नित्यं किंचित्स्वात्मानंदमात्रानुभव रूपं कैवल्य मस्ति । " चतुर्विधा ममजना भक्ताएव हि ते श्रुताः । ते-षामेकान्तिनः श्रेष्ठा स्तेचैवानन्यदेवताः । अहमेव गति स्तेषां नि-राशीः कर्मकारिणां । येतु शिष्टा स्त्रयोभक्ताः फलकामाहितेमताः । सर्वे च्यवनधर्माणः प्रतिबुद्धस्तु मोक्षभा गि" ति विशेषणा दिति ॥४॥

एष तावत्प्रथमविप्रतिपत्तौ पूर्वपक्ष्यभिमतः पूर्वः पक्षः ॥ ५ ॥
अथात्र सिद्धान्त्यभिमत उत्तरः पक्ष उच्यते ॥ ६ ॥

श्रुत्यादिप्रमाण दिव्यसूरिमुखाविर्भूत द्राविडवेदतदंगोपांगपूर्वा-चार्य श्रीसूक्तिभि र्न्यायतश्च कैवल्यपुरुषार्थस्य नित्यत्वमेवावगम्यत इति तस्य नश्वरत्वकथन मयुक्तमेव ॥ ७ ॥

उदाहृतमोक्षधर्मवचन श्रीपरांकुशादिव्यसूरि गाथयोः कैवल्य-स्या नित्यत्वपरतालेशोपि न विद्यते, प्रत्युत नित्यत्वपरत्व-मेवास्ती त्येतदुत्तरत्र स्वावसरे निपुणतर मुपपादयिष्यामः ॥ ८ ॥

शास्त्रेषुसर्वत्रैश्वर्यकैवल्य भगवत्प्राप्तिरूप पुरुषार्थाधिकारिवर्गत्रैविध्यं प्रतिपाद्यतत्रैश्वर्यपुरुषार्थाधिकारिवर्गस्यधूमादिगत्यापुनरावृत्तिलक्षणानित्य फलगामितायाः कैवल्यभगवत्प्राप्त्यर्थिनो रितरयो र्वर्गयो रर्चिरादिमार्गेणा पुनरावृत्तिलक्षण नित्यफलगामितायाश्च स्फुटतरं प्रतिपादनेन न कैवल्यस्या

नित्यपुरुषार्थरूपता कथंचिदपि सुवचा; तथासति कैवल्यार्थिना मैश्वर्यार्थि वर्ग एवांतर्भावनीयतया तद्बहिर्भूतत्वाभिप्रायक पृथङ्निर्देशायोगाच्च ॥९॥

यदि पुनः कैवल्यमपि पुनरावृत्तिलक्षणानित्यफलमेव स्यात्तदेद-मप्यैश्वर्यपुरुषार्थएवा न्तर्भूतं स्यादिति श्रीगीता सप्तमाध्याय षोडश श्लोकभाष्ये – "आर्तः प्रतिष्ठाहीनो भ्रष्टैश्वर्यः पुनस्तत्प्राप्तिकामः । अर्थार्थी - अप्राप्तैश्वर्यतयैश्वर्यकामः । तयो र्मुखभेदमात्र मैश्वर्यविषय तयैक्या देकएवाधिकारः" इति द्विविधावप्यार्तार्थार्थि रूपैश्वर्यार्थिना वेकस्मिन् वर्गेन्तर्भावयता भाष्यकारेण जिज्ञासुशब्दितः कैवल्या-र्थ्यपि तत्रैव वर्गे ऽन्तर्भाव्येत ॥ १० ॥

नच तथान्तर्भावितः ॥ ११ ॥

प्रत्युता पुनरावृत्तिलक्षण नित्यफलाधिकारि मुमुक्षुत्वसाम्या ज्ज्ञानिजिज्ञास्वो रेकरूपेण संगृह्य निर्देशः क्वचित्क्रियते ॥ १२ ॥

प्रदर्शयिष्यते चेदृशो निर्देश उपरिष्टाद्यथा वसरम् ॥ १३ ॥

तस्मा त्कैवल्यार्थिनो ऽ नित्यफलभूतैश्वर्य पुरुषार्थार्थिवर्ग बहिर्भू तत्वा त्कैवल्यस्य नित्यपुरुषार्थरूपता दुरपह्नवा ॥ १४

एतेन प्राक्चतुर्थवाक्योदाहृत स्तोत्रभाष्यग्रन्थे - भोगइह स्वर्ग स्वाराज्यादिसुखानुभव स्स्वात्मानन्दानुभवश्चेति कैवल्यस्यै श्वर्यपुरु षार्थान्तर्भूतत्वाभिमानि स्वाभिप्रायानुरोधेन भोगशब्दार्थतया व्या-ख्यानं पूर्वपक्षिणां स्वोत्प्रेक्षामात्र विजृम्भितमेवेति वेदितव्यं, पूर्व-व्याख्यातृभिः कैवल्यस्य - भोगापवर्गेत्यत्रा पवर्गशब्दार्थतयैव व्या-ख्यातत्वात ॥ १५ ॥

"भोगः - ब्रह्मादिपिपीलिकान्त बद्ध चेतनवर्गस्य कर्मानुगुण तारतम्यानुभाव्या श्शब्दादयः । अपवर्गः - शब्दादीना मल्पास्थिर त्वादि दोषदर्शनेन भीतानां चेतनानां दुःखनिवृत्तिरूपात्म प्राप्ति

स्सुखैकताना भगवत्प्राप्तिश्चे'' त्येवं रूपाहि प्राचीनस्य श्रीयामुनार्यसूनो श्रीमत्कृष्णसूरे स्तद्विषया व्याख्या ॥ १६ ॥

पूर्वोक्तमधिकारिवर्गत्रैविध्यंच संस्कृत वेद स्मृतीतिहासपुराण श्रीपंचरात्र द्राविडवेदतदंगोपांग पूर्वाचार्य श्रीसूक्तिषु समन्ततः प्रसिद्धम् ॥ १७ ॥

श्रुतौताव द्बृहदारण्यकोपनिष ष्षष्टमाध्याये द्वितीयब्राह्मणे पंचदशखण्डिकायां – 'ते यएव मेतद्विदु' रिति पंचाग्निविदः प्रकृतिवियुक्त प्रत्यगात्मविद्यानिष्ठान् कैवल्यार्थिनः - 'येचामी अरण्ये श्रद्धां सत्यमुपासत' इति परमात्मविद्यानिष्ठान् भगवत्प्राप्त्यर्थिनश्च - पृथङ्निर्दिश्य तेषा मुभयेषां 'तेर्चिरभिसम्भवन्ती' त्यारभ्य – 'तान् वैद्युतात्पुरुषो ऽमानवएत्य ब्रह्मलोकान् गमयति ते तेषु ब्रह्मलोकेषु पराः परावतो वसन्ति तेषां न पुनरावृत्ति' रित्यन्तेना र्चिरादिमार्गेणा पुनरावृत्तिलक्षण नित्यफलप्राप्ति मभिधाय; षोडशखण्डिकायां 'अथ ये यज्ञेन दानेन तपसा लोकान् जयन्ती' ति प्रकृतितत्त्वनिबन्धन विलक्षणभोगरूपैश्वर्यार्थिरूपान् पुण्यकर्मणो ऽधिकारिणो निर्दिश्य तेषां - 'ते धूम मभिसम्भवन्ती -' त्यारभ्य 'ते लोकान् प्रत्युत्थायिन स्तएवमेवा नुपरिवर्तन्त' इत्यन्तेन धूमादिमार्गेणो र्ध्वाधोगमनागमन रूप पुनःपुन रावृत्तिलक्षणा नित्यफलप्राप्तिश्चा भिहिता ॥ १८ ॥

एवं छान्दोग्योपनिषदि पंचमप्रपाठके दशमखण्डे –"तद्य इत्थं विदु र्येचेमे ऽरण्ये श्रद्धातप इत्युपासते तेर्चिष मभिसम्भवन्ती" त्यारभ्य –"स एना न्ब्रह्म गमय त्येष देवयानः पन्था इती" त्यन्तेन प्रथमादिखण्डिकाद्वयेन बृहदारण्यकवदेव पंचाग्निविद्ब्रह्मविद्रूप द्विविधाधिकारिणा मपुनरावृत्तिप्रतिनियतार्चिरादिगतिरूप देवयानाभिधान मुखेनापुनरावृत्तिलक्षण नित्यफलप्राप्ति मभिधाय; "अथ य इमे ग्राम इष्टापूर्ते दत्त मित्युपासते ते धूम मभिसम्भवन्ती" त्यारभ्य खण्डि-

काद्वयेन बृहदारण्यकवदेव पुण्यकर्मशब्दितैश्वर्यार्थ्यधिकारिणां पुन रावृत्तिप्रतिनियत धूमादिमार्गाभिधानपूर्वकं – " तस्मिन् याव त्सम्पात-मुषित्वा ऽथैतमेवाध्वानं पुन र्निवर्तन्त " इत्यादिना खण्डकात्रयेण पुनरावृत्तिलक्षणानित्यफलप्राप्ति रभिधीयते ॥ १९ ॥

अत्र –" स एनान् ब्रह्म गमयत्येष देवयानः पन्था" इति देवयाना भिधान मपुनरावृत्ति लक्षण नित्यफलप्राप्त्यभिप्रायकं , अन्यथावक्ष्य माण पुनरावृत्तिलक्षणा नित्यफलाधिकारि पुण्यकर्मणां पंचाग्निविद्ब्रह्म विदांच परस्परवैलक्षण्या भिधायक प्रकरणानुगुण्या सम्भवात् । अस्यामेवोपनिषदि चतुर्थ प्रपाठके पंचदशखण्डान्ते –" स एनान् ब्रह्म गमयत्येषदेवपथो ब्रह्मपथ एतेनप्रतिपद्यमाना इमंम्मानवमावर्तं नावर्तंते ना वर्तंत" इति देवयानस्या पुनरावृत्तिलक्षण नित्यफलनैयत्यश्रवणाच्च॥२०॥

एवं गीताशास्त्रेपि सप्तमाध्याय षोडशश्लोक प्रभृत्यष्टमाध्यायान्त पर्यन्तग्रन्थेने दृशमेवाधिकारित्रयं पुनरावृत्त्य पुनरावृत्तिलक्षण तत्फ-लवैषम्यं धूमाद्यर्चिरादि मार्गगतिवैषम्यंच स्फुटमेव प्रतिपादितं ॥२१॥

उक्तंहितत्र सप्तमाध्याये–" चतुर्विधाभजन्ते मांजनास्सुकृतिनोर्जुन। आर्तोजिज्ञासुरर्थार्थी ज्ञानीच भरतर्षभे"ति षोडशेन श्लोकेनाधिकारि वै-चित्र्यं ॥२२॥

"आर्तोभ्रष्टैश्वर्यकामः। अर्थार्थी - अप्राप्तैश्वर्यकामः । जिज्ञासुः प्र-कृतिवियुक्तात्म स्वरूपावाप्तीच्छुः । ज्ञानी भगवत्प्राप्तीच्छुरि " ति यद्य प्यधिकारि चातुर्विध्यमत्र प्रतीयते । तथापि प्रथमयोर्द्वयोरपि सुखभेदे नैश्वर्यार्थित्वा विशेषादेक एवाधिकार इत्यैश्वर्यार्थि कैवल्यार्थि भगव त्प्राप्त्यर्थि रूपाधिकारि त्रैविध्यमेवान्यत्र सर्वतः प्रसिद्धमिहाप्यभिधि-त्सितमितिबोध्यं ॥२३॥

प्राग्दशमवाक्योदाहृतै तच्छ्लोकगीताभाष्य ग्रन्थे प्युदाहृतश्रुत्यैक कण्ठ्यमभिप्रेत्यैव यथोक्तलक्षणाधिकारि त्रयपरत्वमस्य श्लोकस्यभाष्य-कारैर्व्यवस्थापितं ॥२४॥

अर्थार्थ्यादिपदेनैव तत्पदबोध्याधिकारिणः प्राप्यः पुरुषार्थऐश्वर्यमिति स्पष्टमवगम्यते ॥२५॥

ज्ञानिनःप्राप्यः पुरुषार्थस्तु "उदारास्सर्वएवैते ज्ञानीत्वात्मैवमेमतं । आस्थित स्सहि युक्तात्मा मामेवानुत्तमां गतिम् ॥ बहूनां जन्मनामन्ते ज्ञानवान् मां प्रपद्यते । वासुदेव स्सर्वमिति स महात्मा सुदुर्लभः" इत्यष्टादशैकोनविंशश्लोकाभ्यां भगवत्प्राप्तिरेवेति स्पष्ट मभिधीयते । अत्र मामेवानुत्तमां गति मित्यनेन – वासुदेव स्सर्व मित्यनेनच – अस्याधिकारिणः परमप्राप्यो भगवानेवेत्यंशस्या भिधानात् ॥ २६ ॥

उक्तंच दर्शिताष्टादशश्लोकगीताभाष्ये - मामेवानुत्तमं प्राप्य मास्थित इति । एकोनविंशश्लोकभाष्ये । वासुदेव एव मम परम प्राप्यं प्रापकं चान्यदपि यन्मनोरथवर्ति - स एव मम तत्सर्वमिति मां प्रपद्यते मा मुपास्त इति ॥ २७ ॥

जिज्ञासोः प्राप्यपुरुषार्थस्तु "जरामरणमोक्षाय मा माश्रित्य यतन्ति ये । ते ब्रह्म तद्विदुः कृत्स्न मध्यात्मं कर्म चाखिल" मित्येकोनत्रिंश श्लोके ऽस्याधिकारिणो वेदितव्यतया ब्रह्मशब्दवाच्य परिशुद्धात्म स्वरूपस्य – फलतया प्रकृतिसंसर्गराहित्यलक्षण कैवल्यात्मकजरामरण मोक्षस्य च निर्देशा त्फलोपास्ययो रैक्यावश्यंभावाच्च प्रकृतिवियुक्ता त्मस्वरूपमेव ब्रह्मशब्दवाच्य मुपास्यम् – तदेव च जरामरणमोक्ष शब्दितं प्राप्य मित्यवगमेन कैवल्यपर्याय जरामरणमोक्षशब्दित प्रकृतिवियुक्तात्मस्वरूपावाप्तिरूप एव सिद्ध्यति ॥ २८ ॥

अत एव तच्छ्लोकभाष्ये – जरामरणमोक्षाय प्रकृतिवियुक्तात्म स्वरूपदर्शनायेति व्याख्यातम् ॥ १९ ॥

षोडशश्लोकभाष्येपि – जिज्ञासुः प्रकृतिवियुक्तात्मस्वरूपावाप्तीच्छुः – ज्ञानमेवास्यस्वरूपमिति जिज्ञासु रित्युक्त मिति जिज्ञासु पदव्याख्यानं कृतम् ॥ ३० ॥

अतोजिज्ञासोः कैवल्यं पुरुषार्थइति सिद्धं ॥३१॥

कैवल्यंहिनाम - प्रकृतिसंसर्ग तन्निबन्धन देवत्वतिर्यक्त्व मनुष्यत्व स्थावरत्वाद्यौपाधिक धर्मप्रहाणेन ज्ञानानन्दमयत्वादि लक्षण स्वस्वरूप याथात्म्येन प्रत्यगात्मनोऽवस्थानमेव ॥३२॥

आत्मप्राप्ति कैवल्यात्मयाथात्म्य प्रकृतिवियुक्तात्म स्वरूप जरामरणमोक्षादिशब्दाश्च पर्याय वाचिन स्तत्रतत्र प्रयुज्यन्ते ॥३३॥

तथाच प्रकृतितत्त्वनिबन्धन विलक्षणशब्दाद्यनुभवलक्षणोभोग रूप ऐश्वर्याख्यः पुरुषार्थः, प्रत्यगात्म तत्त्वनिबन्धन विलक्षणानुभव लक्षणोमोक्षरूपः कैवल्याख्यः पुरुषार्थः, भगवत्तत्त्वनिबन्धन विलक्षणानुभव लक्षणोमोक्षरूपो भगवत्प्राप्त्याख्यः परमपुरुषार्थइति पुरुषार्थत्रैविध्य मैश्वर्यार्थि कैवल्यार्थि भगवत्प्राप्त्यर्थि रूपाधिकारित्रैविध्यंच गीताशास्त्र सिद्धंभवति ॥३४॥

एत एवचाधिकारिणो वेदान्तेषु पुण्यकर्माधिकारि पंचाग्नि विद्याधिकारि परब्रह्म विद्याधिकारि रूपतया विवक्षिताः ॥३५॥

एत एवच शारीरकशास्त्रे कार्यब्रह्मोपासक प्रकृतिवियुक्त ब्रह्मात्मक प्रत्यगात्मोपासक परब्रह्मोपासक रूपतया विवक्षिताः ॥३६॥

श्रुता वैश्वर्यार्थिनां पुण्यकर्माधिकारित्वेन निर्देशः - एतदभीप्सितस्य चतुर्मुखलोकानुभाव्यैश्वर्यस्यापि स्वर्गाद्यैश्वर्यवत्प्रकृति तत्त्व निबन्धन विलक्षणशब्दाद्यनुभव लक्षणभोगाख्यैश्वर्य रूपतायाः कर्म साध्यफलरूपतायाश्च विशिष्टत्वेन पुण्यकर्मानुष्ठान बाहुल्यसापेक्षत्वाभिप्रायः ॥३७॥

प्रसिद्धंहि श्रुतिष्वन्तवत्फलानां कर्मसाध्यत्वं नित्यपुरुषार्थ रूप मोक्षस्य विद्यासाध्यत्वंच ॥३८॥

गीताशास्त्रे तेषां - "चतुर्विधा भजन्तेमा" मिति भगवद्भक्तत्वेन निर्देशश्च ऐश्वर्येष्वप्युत्तमैश्वर्यस्य भक्तियोगं विना केवलकर्मयोगासाध्यतया विद्यासापेक्षत्वाभिप्रायः ॥ ३९ ॥

शारीरकशास्त्रे कार्यब्रह्मोपासकत्वेन तेषां निर्देशश्च प्राप्यतया तदुपासकत्वाभिप्रायः ॥ ४० ॥

अत श्श्रुतिगीताशास्त्रशारीरक शास्त्रविवक्षिताः पुण्यकर्मानुष्ठान बाहुळ्य भगवद्भक्तियोग कार्यब्रह्मोपासनरूपा स्त्रयोप्यंशा ऐश्वर्यार्थिना मपेक्षिताएवेति न तत्तन्निर्देशभेदादधिकारि भेदशंकावकाशः ॥४१॥

शारीरकशास्त्रे कार्याधिकरणप्रथमसूत्रादिषु बादरिपक्षे कार्यशब्दिताण्डाधिपति हिरण्यगर्भलक्षण कार्यब्रह्मणो विलक्षणैश्वर्यविशिष्टस्योपासनं तादृशैश्वर्यप्राप्तिफलकं यथोपन्यस्तम्, तथैव गीताशास्त्रेप्यैश्वर्यार्थिनां ज्ञातव्योपादेयनिरूपणपरेऽ ष्टमाध्यायचतुर्थश्लोके "अधिभूतं क्षरोभावः पुरुषश्चाधिदैवतम् । अधियज्ञोऽह मेवात्र देहे देहभृतां वरे" त्येवं रूपे-पुरुषश्चाधिदैवतमित्यनेन विलक्षणैश्वर्य विशेषविशिष्ट पुरुषविशेषोपासनं तथाविधैश्वर्यप्राप्तिफलकं विधीयत इत्युभयत्रैकविधाधिकारि विवक्षा स्फुटा ॥ ४२ ॥

तथोक्तं तच्छलोकभाष्येपि-"पुरुषश्चाधिदैवतम् -अधिदैवतशब्द निर्दिष्टः पुरुषः, अधिदैवतं· दैवतो परिवर्तमान इन्द्रप्रजापतिप्रभृति कृत्स्नदैवतोपरिवर्तमान इन्द्रप्रजापतिप्रभृतीनां भोग्यजाताद्विलक्षणशब्दादे र्भोक्ता पुरुषः- साच भोक्तृत्वावस्था - ऐश्वर्यार्थिनां प्राप्यतयानुसन्धेये" ति ॥ ४३ ॥

ऐश्वर्यार्थिनां पुण्यकर्माधिकार्यन्तर्गतत्वे नैकोक्त्या श्रुतौ ग्रहण सूचितं पुण्यकर्मानुष्ठान बाहुळ्यसापेक्षत्वमपि - अस्मिन् श्लोके - अधियज्ञोऽह मेवात्रे त्यनेन प्रतिपाद्यते ॥ ४४ ॥

यथोक्तं तद्भाष्ये, "अधियज्ञोहमेव - अधियज्ञशब्दनिर्दिष्टोहमेव, अधियज्ञः - यज्ञैराराध्यतया वर्तमानः । अत्र - इन्द्रादौ मम देहभूते, आत्मतया ऽवस्थितो ऽहमेव यज्ञै राराध्यइर्ता" ति ॥ ४५ ॥

यद्यपि तच्छलोकभाष्ये - महायज्ञादि नित्यनैमित्तिकानुष्ठान वेळायां त्रयाणा मधिकारिणा मनुसन्धेय मेतदित्युक्तम् ॥ ४६ ॥

तथापि - अधियज्ञशब्दनिर्दिष्टं पुण्यकर्मानुष्ठानबाहुळ्यं नाधिकारित्रयसाधारण मिह विवक्षितम् , अपित्वैश्वर्यार्थिना मनुष्ठेयतयेह विवक्षितेषु यज्ञशब्दनिर्दिष्टेषु बहुळेषु पुण्यकर्मस्वाराध्यभूते न्द्रादिदेवतास्वन्तरात्मतया ऽवस्थितस्य परमात्मनएव प्रधानाराध्यतानुसन्धान न्यायस्याभिहितस्य - अधिकारित्रयसाधारणेषु नित्य नैमित्तिक कर्मसु त्रयाणा मप्यधिकारिणां तुल्यताप्रतिपादनमात्रस्येह विवक्षितत्वात , ऐश्वर्यार्थिप्रकरणएव - अधियज्ञोऽहमेवे त्यभिधानस्य तेषां पुण्यकर्मानुष्ठान बाहुळ्य सद्भावसूचकताया अवर्जनीयत्वाच्च ॥ ४७ ॥

एवमस्मिन् गीताशास्त्रे ऽष्टमाध्याये - कैवल्यार्थिनां ज्ञातव्योपादेय निरूपणपरे -" अक्षरं ब्रह्म परमं स्वभावोऽध्यात्ममुच्यते । भूतभावोद्भवकरो विसर्गः कर्म संज्ञित " इति तृतीयश्लोके - उपनिषत्सु पंचाग्निविद्यायां वेद्यतयाऽभिहितानां प्रत्यगात्मस्वरूप तत्सम्बन्धिभूतसूक्ष्म तद्वासनादिकरेतोविसर्गलक्षणपंचमाहुतीनामेव ज्ञातव्यतया ब्रह्माध्यात्म कर्मशब्दै रभिधीयमानत्वात , गीताभाष्ये ऽस्य श्लोकस्य पंचाग्निविद्यावाक्योदाहरणपूर्वकं तादृशविद्यावेद्यपरतयैव व्याख्यातत्वा च्चोपनिषत्प्रसिद्धः पंचाग्निविद्यानिष्ठएवेह जिज्ञासुशब्दितः कैवल्यार्थीति स्फुटतरं प्रत्यभिज्ञायते ॥ ४८ ॥

उपनिषदुक्तरीत्यैव चेहापि जिज्ञासुशब्दित कैवल्यार्थिज्ञानिशब्दित भगवत्प्राप्तिकामलक्षण द्विविधाधिकारिणा मपुनरावृत्तिः - ऐश्वर्यार्थिलक्षणैक विधाधिकारिणां पुनरावृत्तिश्च प्रतिपाद्यते ॥ ४९ ॥

तस्मा च्छारीरक शास्त्रविवक्षितमेवा धिकारित्रय मत्रापि गीता शास्त्रेऽ भिहितम् ॥ ५० ॥

पूर्वपक्षिणां कैवल्यार्थिनः पंचाग्निविद्यानिष्ठा दन्यत्ववादस्तु षष्ठ विप्रतिपत्ति विचारे निराकरिष्यते ॥ ५१ ॥

गीताभाष्ये भाष्यकारै र्गीतार्थसंग्रहे भगवद्यामुनमुनिभि श्चेदृशमेवाधिकारित्रयं पुरुषार्थत्रयं तद्भेदलक्षणञ्च सम्यगेवा सकृद्विशदीकृतम् ॥५२॥

भगवच्छास्त्रे नारदादिभिरप्युक्तम् –" ऐहलौकिकमैश्वर्यं स्वर्गाद्यं पारलौकिकम् । कैवल्यं भगवन्तंच मन्त्रोयं साधयिष्यती "ति ॥५४॥

अत्र पुरुषार्थत्रयाभिधानेन तदर्थिना मधिकारिणामपि त्रैविध्य मुक्तप्रायम् ॥ ५४ ॥

एवं याज्ञवल्क्यस्मृतावपि तृतीयाध्याये दर्शित मधिकारिवर्गत्रैविध्यं स्पष्ट मभिहितम् ॥ ५५ ॥

तत्रहि याज्ञवल्क्येन दर्शितोपनिषदुक्त त्रिविधाधिकारि स्वरूप निरूपणप्रवृत्तेन - " पितृयाणो जवीथ्याश्च यदगस्त्यस्यचान्तरम् । तेनाग्निहोत्रिणो यान्ति स्वर्गकामा दिवंप्रति ॥ येच दानपरा स्सम्य गष्टाभिश्च गुणै र्युताः । तेपि तेनैव मार्गेण सत्यव्रतपरायणाः ॥ तत्राष्टाशीति साहस्रा मुनयो गृहमेधिनः । पुनरावर्तिनो बीज भूता धर्मप्रवर्तकाः ॥" इतिचतुरशीत्युत्तरशततमादि श्लोकत्रयेण - अष्टाशीतिसहस्रसंख्याकैः पुनरावृत्तिलक्षणा नित्यफलहेतुप्रवृत्तिधर्मप्रवर्तक बीजभूतगृहमेधिभिर्मुनिभिः स्वयमपि पुनः पुनरावृत्तिशीलै रधिष्ठितं पुनरावृत्तिहेतु- पितृयाणाख्य म्मार्गं पुण्यकर्माधिकारि शब्दित सकलदिवैश्वर्यार्थिवर्गस्य तन्मार्गगामितां चाभिधाय, " सप्तर्षिनागवीथ्यन्त र्देवयानं समाश्रिताः । तावन्तएव मुनयः स्सर्वारम्भविवर्जिताः ॥ तपसा ब्रह्मचर्येण संगत्यागेन मेधया । तत्र गत्वा वतिष्ठन्ते यावदाभूत सम्प्लव "मिति सप्ताशी त्युत्तरशततमादि श्लोकद्वयेना ष्टाशीति सहस्रसंख्यैरेवा पुनरावृत्तिलक्षण नित्यफलहेतुनिवृत्तिधर्म प्रवर्तकबीजभूतै स्स्वयमपि पुनः पुनरावृत्तिशीलता विधुरै र्विरक्तै र्मुनिभि रधिष्ठित मपुनरावृत्ति देवयानाख्य म्मार्ग मभिधाय; "यतो वेदाः पुराणानि विद्योपनिषद स्तथा । श्लोका स्सूत्राणि भाष्याणि यच्च किञ्चन वाङ्मयम् ॥ " इत्येकोन नवत्युत्तरशततमश्लोकेन पूर्वोक्तमार्गद्वयाभिप्रायिनो द्विविधादेव मुनिसमूहात्तदा तदा प्रवृत्तिनिवृत्तिलक्षण द्विविधधर्मविषय सकलविधशास्त्र प्रवृत्तिमभिधाय; " वेदानुवचनं यज्ञो ब्रह्मचर्यं तपो दमः । श्रद्धोपवा

सःस्वातन्त्र्य मात्मनो ज्ञानहेतवः॥ सद्माश्रमै र्विजिज्ञास्यः समस्तैरेव मेवतु। द्रष्टव्यस्त्वथमन्तव्य श्श्रोतव्यश्च द्विजातिभि "रिति नवत्युत्तर-शततमादिश्लोकद्वयेन मोक्षोपयोगि प्रत्यगात्मस्वरूप याथात्म्यज्ञानो त्पत्तिहेतून् साक्षात्काररूप तदीयविशदज्ञानहेतून् सपरिकरान् श्रव णादींश्चाभिधाय; "यएवमेनं जानन्ति येचा रण्यक माश्रिताः। उ-पासते तप स्सत्यं श्रद्धया परया युताः॥" इति द्विनवत्युत्तरशततम श्लो केन प्रागष्टादशैकोनविंश वाक्योदाहृतो पनिषदुक्तरीत्यैव कैवल्या-र्थिरूप प्रत्यगात्मविद्यानिष्ठ भगवत्प्राप्त्यर्थिरूप परमात्मविद्यानिष्ठान् द्विविधानप्यधिकारिणो देवयानमार्गगामिनो निर्दिश्य; "क्रमा त्ते-सम्भवन्त्यर्चि रहश्शुक्लं तथोत्तरम्। अयनं देवलोकञ्च सवितारं स-वैद्युतम्॥ तत्र तत्पुरुषो दिव्यो ऽमानवो ब्राह्मलौकिकान्। करोति पुनरावृत्ति स्तेषा मिह नविद्यते॥" इति त्रिनवत्युत्तरशततम श्लोकप्रभृति श्लोकद्वयेन देवयानमार्गातिवाहिकान् तै स्तत्त्वां द्विविधाना मप्यधि कारिणां ब्रह्मलोकशब्दितं प्रकृतिमण्डलोर्ध्वदेशं नीताना मपुनरा-वृत्तिंचा भिधाय; "यज्ञेन तपसा दानै र्येहि स्वर्गजितो नराः। धूमं निशां कृष्णपक्षं दक्षिणायनमेवच॥ पितृलोकं चन्द्रमसं वायुं वृष्टि-जल ममहीम्। क्रमात्ते सम्भवन्तीह पुनरेवाव्रजन्तिच॥" इति पंचनवत्युत्त रशततमादि श्लोकद्वयेन पितृयाणाख्यमार्गे गन्तृणां पुण्यकर्माधिका रि शब्दित सकलविधैश्वर्यार्थिना मूर्ध्वाधोनयनहेतून् धूमाद्यभिमानिनः तन्मार्गगामिना मूर्ध्वाधोगमनागमन लक्षणां पुनःपुनरावृत्तिंचाभिधाय; "एतयो र्नविजानाति मार्गद्वितय मात्मवान्। दन्दशूकः पतंगो वा भवेत्कीटो थवा क्रिमिः॥" इति सप्तनवत्युत्तरशततम श्लोकेन मार्गद्वया नभिज्ञानफल मप्यभिधाय निगमितं त्रिविधाधिकारि स्वरूप-निरूपणम्॥ ५६॥

एवं श्रीविष्णुपुराणेपि प्राप्यस्वभावभेदनिबन्धन मीदृशाधिका रिवर्ग वैचित्र्यं दर्शितम्॥ ५७॥

तत्राहि प्रथमांशे द्वाविंशाध्याये सर्वावस्थावस्थितयो श्चेतनाचेतनयो र्ब्रह्मशरीरतया कृत्स्नस्य जगतो ब्रह्मरूपतां प्रतिपादयितुं प्रवृत्तेन भगवता पराशरेण –"एवमेष जगत्स्रष्टा जगत्पाता तथा जगत । जगद्भक्षयिता देव स्समस्तस्य जनार्दनः ॥ " इति चत्वारिंश श्लोकांतेन ग्रन्थेन – गुणत्रयाश्रयणेन क्रियमाणेषु जगत स्सृष्टिस्थितिसंहारेषु प्रवृत्तानां चतुर्धा चतुर्धा विभक्तानां सर्वेषां तत्तत्सृष्टिस्थितिसंहार कर्तॄणां ब्रह्मशरीरतां – चतुर्धा चतुर्धा विभक्तेषु तेषु स्रष्टादिष्वेव गुणत्रयानुगुण प्रवृत्तिकप्रकृतिमिश्र चेतनाचेतनात्मकसर्वभूताना मन्त भावं चाभिधाय, तन्मुखेन गुणत्रयानुगुणप्रवृत्तिक चेतनाचेतनात्मक सर्वभूतानां ब्रह्मशरीरतां निरूप्य, " सर्गस्थित्यन्तकालेषु त्रिधैवं सम्प्रवर्तते । गुणप्रवृत्त्या परमं पदं तस्या गुण म्महत ॥ " इत्येक चत्वारिंशश्लोके – गुणप्रवृत्त्येत्यन्तेन प्रकृतिमण्डलान्तःपाति गुणत्रय वश्यकृत्स्नजगदात्मकस्य परब्रह्मसम्बन्धिनो मूर्तविभागान्तर्भूतस्य रूपस्य निरूपण मुपसंहृत्य; ततः–"परमं पद" मित्यादिना " तत्रान्यज्ञान रोधेने" त्यादि द्विपञ्चाशश्लोकान्तेन ग्रन्थेना मूर्तविभान्तर्गतयोः पर ब्रह्मसम्बन्धिरूपयोः प्रथमं कैवल्यार्थिप्राप्यभूता पुनरावृत्तिलक्षण पुरुषार्थभूत प्रकृतिविनिर्मुक्त प्रत्यगात्मस्वरूपलक्षणं रूपं प्रतिपाद्य ; ततः –" एवं प्रकार ममल " मित्यादि श्लोकद्वयेन – भगवत्प्राप्त्यर्थि प्राप्यभूता पुनरावृत्तिलक्षण परमपुरुषार्थभूतं परमपुरुषदिव्यात्मस्वरूपलक्षणं दर्शितरूपद्वयप्रतिसम्बन्धिभूत वस्तुस्वरूपं प्रतिपाद्य; ततः "द्वे रूपे ब्रह्मण स्तस्य मूर्तं चामूर्तमेव च । क्षराक्षरस्वरूपे ते सर्वभूते ष्ववस्थिते ॥ अक्षरं तत्परं ब्रह्म क्षरं सर्व मिदं जग " दिति सार्धश्लोकेन पूर्वोक्तेषु ब्रह्मसम्बन्धिषु रूपेषु मूर्तामूर्तविभागं क्षराक्षरविभागं – तत्र प्रकृतिमण्डलान्तःपातिनः कृत्स्नस्य मूर्तरूपस्य क्षरत्वं – अमूर्तरूपस्य पर[illegible] [illegible]त्मस्वरूपलक्षणस्या क्षरत्वं चाभिधाय; ततः – व्यवहिताव्यवहितानां मेषां पूर्वनिर्दिष्टानां वस्तूनां कथं परब्रह्मसम्बन्धिरूपत्व मित्याशंकां –" एक[illegible]

ग्ने ज्योत्स्नाविस्तारिणी यथा । परस्य ब्रह्मण श्शक्ति स्तथेद मखिलं जगत् ॥ " इत्यनेन प्रभाप्रभावतो रिव जगद्ब्रह्मणो विशेषणविशेष्य भावलक्षणसम्बन्ध विशेषोपपादनेन समाधाय; " तत्राप्यासन्नदूरत्वा द्बहुत्वस्वल्पतामयः । ज्योत्स्नाभेदो ऽस्ति तच्छक्ते स्तद्वन्मैत्रेय वि- द्यत" इत्यादिना श्लोकत्रयेण परब्रह्मशक्तिभूतस्य कृत्स्नस्य जगत स्सान्निकर्षविप्रकर्षादिनिबन्धन ज्ञानशक्त्यादितारतम्यसद्भावं च निरू- प्य; "तदेत दक्षयं नित्यं जगन्मुनिवराखिलम् । आविर्भाव तिरोभाव जन्मनाशविकल्पव " दिति श्लोकेन प्रस्तुतस्य प्राकृत जगदाख्यमूर्त- रूपस्य स्वरूपतो ऽनित्यतां प्रवाहतो नित्यतांच निरूप्य; ततः - " सर्वशक्तिमयो विष्णु स्स्वरूपं ब्रह्मणो ऽपरम् । मूर्तं यद्योगिभिः पूर्वं योगारम्भेषु चिन्त्यत " इत्यादिना श्लोकत्रयेण भगवत स्स्वासा- धारण मप्राकृतं योगालम्बनशुभाश्रयभूत मन्तरंगतमं मूर्तं रूपान्तरं च्चाभिधाय; " तत्र सर्व मिदं प्रोतमोतं चैवाखिलं जगत् । ततो जातं जग त्तस्मिन् स जग च्चाखिल म्मुन " इति प्रक्रान्तं सर्वस्य जगतो ब्रह्मरूपत्वं निगमितम् ॥ ५८ ॥

अत्रैकचत्वारिंशश्लोकप्रभृति द्विपंचाशश्लोकपर्यन्तभागे कैवल्या- र्थिप्राप्यभूत प्रकृतिविनिर्मुक्तप्रत्यगात्मस्वरूपप्रतिपादनपरे -" योगिनो मुक्तिकामस्य प्राणायामादिसाधनं । साध्यं च परमं ब्रह्म पुन र्ना वर्तते यत " इति पंचचत्वारिंशश्लोकेन -" तत्रान्यज्ञानरोधेन योगिनो यान्ति ये लयम् । संसारकर्षणोप्तौ ते यान्ति निर्बीजतां द्विजे"ति द्विपंचाशश्लोकेन च कैवल्यार्थिना मात्मोपासकानां प्रकृतिवियुक्तं प्रत्यगात्मस्वरूपं प्राप्यम् - तत्प्राप्तिलक्षणं कैवल्यं च मुक्तिः - ता- दृशमुक्ति प्राप्तानां च न पुन स्संसारसम्बन्धलक्षणा पुनरावृत्ति रिति प्रतिपादनात ; ततः - " एवं प्रकार ममलं नित्यं व्यापक म- क्षयम् । समस्तहेयरहितं विष्णवाख्यं परमं पदम् ॥ तद्ब्रह्म परमं योगी पुन र्नावर्तते यतः । अपुण्यपुण्योपरमः क्षीणक्लेशो ऽति

निर्मल " इति त्रिपंचाशादिश्लोकद्वयेन परमात्मलक्षण परब्रह्मोपासकानां भगवानेव परमप्राप्यः – तत्प्राप्तिलक्षणपरममोक्षं प्राप्तानामपि न पुनरावृत्ति रित्यभिधानात् ; प्राकृतकृत्स्नजगदात्मकमूर्तरूपस्य क्षर त्वाविर्भाव तिरोभाव जन्मनाशविकल्पपरत्वाभिधानेन तत्प्राप्तिलक्षणै श्वर्यपुरुषार्थार्थिना मधिकारिणां पुनरावृत्त्यभिधानसिद्धेश्च ; उपनिष त्सु गीताशास्त्रे चोक्तया रीत्यैव जिज्ञासुपंचाग्निविदादिशब्दितान् प्रत्यगात्मोपासकान् परमपुरुषनिष्ठ परब्रह्मोपासकादिशब्दितान् पर मात्मोपासकांश्च भेदेन निर्दिश्य तत्प्राप्यभेदा पुनरावृत्त्यादिकं मैश्वर्या र्थिनां पुनरावृत्त्यादिकं च सर्वं प्रतिपादितं भवति ॥ ५९ ॥

अत्रानयोः कैवल्यभगवत्प्राप्त्यर्थिनो र्द्वयो रधिकारिणो रविव क्षितत्वे – " योगिनो मुक्तिकामस्ये" त्याद्युदाहृत पञ्चचत्वारिंशाद्विपंचाश श्लोकयोः कैवल्यमुक्तिकामस्या त्मयोगिनः प्राप्यस्वरूपापुनरावृत्त्योः पृथगभिधानं , पुनः – एवं प्रकार ममल मित्याद्युदाहृत त्रिपञ्चा शादिश्लोकद्वये भगवद्योगिनः प्राप्यस्वरूपा पुनरावृत्त्योः पृथ गभि धानं च न कथंचि दप्युपपद्यते ॥ ६० ॥

दर्शितविष्णुपुराणघट्टस्य दर्शितप्रत्यगात्मस्वरूप परमात्मस्वरूप लक्षणप्राप्यभेद तदर्थ्यधिकारिद्वयपरत्वंच – वेदार्थसंग्रहे परमव्योमा दिशब्दाभिधेय स्थानविशेषसमर्थनप्रकरणे दर्शितविष्णुपुराणघट्टे – एकचत्वारिंशश्लोकस्थस्य 'परमं पद' मित्यस्य प्रकृतिवियुक्तात्मस्वरू पपरतां, त्रिपंचाशश्लोके – 'समस्तहेयरहितं विष्ण्वाख्यं परमं पद' मित्युत्तरार्धस्थस्य परमं पद मित्यस्य भगवत्स्वरूपपरतां च व्याचक्षा णै र्भाष्यकारैरेव स्पष्ट मुपदर्शितम् ॥ ६१ ॥

अयं च वेदार्थसंग्रहग्रन्थः प्रथमतरंगे सप्तचत्वारिंशदुत्तरशत तम वाक्य उदाहृतः ॥ ६२ ॥

श्रीविष्णुचित्तार्यैरपि दर्शितविष्णुपुराणघट्टं तथैवव्याकुर्वाणैः – तत्रान्यज्ञानरोधेनेत्यादि त्रिपंचाशश्लोकावतारिकायां आत्मयोगिना मन्तिमप्रत्ययेना वश्यं भाव्यं – अन्यथा पुनरावृत्ते रित्याहेति – तद्ब्रह्म परमं योगी पुन र्नावर्तते यत इत्याद्युदाहृत चतुष्पंचाशश्लोक व्याख्याने – योगी भगवद्योगी – अस्याप्यन्तिमप्रत्ययेन भगवति लीनवृत्ति र्द्रष्टव्येतिच प्रतिपादयद्भिः – आत्मयोगिनो भगवद्योगिनश्च परस्परविलक्षणा अधिकारिणः – तेषां स्वस्वोपासनानुगुणान्तिमस्मृत्या स्वस्वप्राप्यलाभ इति निरूपणेना स्य घट्टस्य गीताशास्त्रोक्त जिज्ञासुज्ञानिलक्षण द्विविधाधिकारिपरत्वमेव स्पष्ट मुपदर्शितम् ॥ ६३ ॥

उपदर्शितं च गीताशास्त्रेणा स्य समानप्रकरणत्व मन्तिमस्मृति प्राप्यस्वरूपादीना मेकरूपतया प्रतिपादनात् ॥ ६४ ॥

एवं सर्वत्र शास्त्रेषु दर्शितलक्षणा स्त्रिविधा एवा धिकारिणः प्रतिपाद्यन्ते ॥ ६५ ॥

आचार्यैरपि तथैव प्रतिपाद्यन्ते ॥ ६६ ॥

गीतार्थसंग्रह द्वादशश्लोके – ऐश्वर्याक्षरयाथात्म्य भगच्चरणार्थिना मिति – चतुश्श्लोक्यन्तर्गत तृतीयश्लोके – संसृत्यक्षरवैष्णवाध्वस्त्रितिच यामुनमुनिभि र्भेदनिर्देशः कृतः ॥ ६७ ॥

भाष्यकारै रपि गीतासप्तमाध्यायाष्टाविंशश्लोकभाष्ये – जरामरण मोक्षाय महते चैश्वर्याय मत्प्राप्तयेच दृढव्रता इति – अष्टमाध्यायावतरणिकाभाष्ये-ऐश्वर्याक्षरयाथात्म्य भगवत्प्राप्त्यपेक्षयोपासनभेदमिति – चतुर्दशाध्यायान्तिमश्लोकभाष्ये – गुणात्ययस्य तत्पूर्वकाक्षरैश्वर्यभगवत्प्राप्तीनां चेति – शरणागतिगद्येच – सर्वकामांश्च साक्षरानिति च तत्तदधिकारिपुरुषार्थानां पृथङ्निर्देशः स्पष्टतरं कृतः ॥ ६८ ॥

श्रीवत्सांकमिश्रैरपि वरदराजस्तवैकाशीतितमश्लोके – भोगा इमे विधिशिवादिपदंच किंच स्वात्मानुभूति रिति या किल मुक्ति रुक्ता ।

सर्वं त दूष जळजोष महं जुषेय इत्त्वाद्रिनाथ तव दास्यमहारसज्ञ इत्येवं रूपे – ब्रह्मलोकैश्वर्यपर्यन्तैश्वर्याणां भोगशब्देन – आत्मानु भूतिशब्दित कैवल्यस्य मुक्तिशब्देन – भगवद्दास्यशब्दित भगव त्प्राप्ते र्महारसहेतुपरमपुरुषार्थत्वेन च निर्देशं कुर्वद्भि स्त्रिविधपुरुषा-र्थस्वरूप तत्तारतम्य तदधिकारिभेदा स्स्पष्टं दर्शिताः ॥ ६९ ॥

तदात्मजै श्रीपराशरभट्टाचार्यै रपि श्रीगुणरत्नकोशे ऽष्टपंचाशे श्लोके " ऐश्वर्य मक्षरगतिं परमं पदं वा कस्मैचि दञ्जलिभरं वहते वितीर्य" ति निर्देशेन – श्रीरंगराजस्तवोत्तरशतके पंचाशीतितमश्लो-केन "प्रत्यंचं स्वं पंचविंशं पराच स्संचक्षाणा स्तत्त्वराशे र्विविच्य। युं जानाश्च तंभरायां स्वबुद्धौ स्वंवा त्वां वा रंगनाथाप्नुवन्ती" त्येवं रूपेण – सहस्रनामभाष्ये – मुक्तानां परमागति रिति नामनिर्वचन प्रकरणस्थेन – परमेति विशेषणेन मुक्तानामेव केषांचि दर्वाचीना गति र्गम्यते – गीयतेच निर्मुक्तजरामरणात्मकैवल्यलक्षणा – जरामरण मोक्षाय मा माश्रित्य यतन्ति य इति – संसारपरमपदयो र्मध्ये तेषां स्थानंच - योगिना ममृतं स्थानं स्वात्मसन्तोषकारिणा मिती ति ग्र-न्थेन चैश्वर्यकैवल्यभगवत्प्राप्तिरूप पुरुषार्थस्वरूपभेद तदधिकारि भेदादिकं दर्शितम् ॥ ७० ॥

एवं दिव्यसूरिसूक्तिष्वपि परश्शतस्थले ष्वेवंभूता निर्देशा द्रष्टव्याः ॥ ७१ ॥

तस्मा त्त्रिविधाधिकारिणो निर्दिश्य तत्रैकविधाना मधिकारिणा मनित्यभोगशब्दितैश्वर्याख्य फलप्राप्ते रन्येषां द्विविधाना मधिकारिणा मपवर्गशब्दित नित्यफलप्राप्ते श्चाभिहितत्वा त्तत्र नित्यफलप्राप्त्यधि कार्यन्तर्गततया प्रकृतिवियुक्तप्रत्यगात्मोपासकानां कैवल्यार्थिना मभिधीयमानत्वाच्च तत्प्राप्यभूतः कैवल्याख्य पुरुषार्थो नित्य एव, अन्यथा तदर्थिना मैश्वर्यलक्षणा नित्यपुरुषार्थनिष्ठेभ्यः पृथङ्निर्देशानां

मुक्तादिशब्दै र्व्यावृत्तनिर्देशानां भगवत्प्राप्त्यर्थि परब्रह्मोपासके स्तुत्यतया ऽनावृत्तिनिर्देशानां चायोगात ॥ ७२ ॥

कैवल्यपुरुषार्थस्या नित्यत्वे स्वार्थार्थिनो स्वान्तरविशेषसद्भावे ऽप्यनित्यपुरुषार्थभूतैश्वर्यार्थित्वाविशेषेणै कविधाधिकारिकोटिनिवेशाच्च स्कैवल्यार्थिनो प्यैश्वर्यार्थिकोटि निवेशो हि दुष्परिहार स्स्यात् ॥ ७३ ॥

अनावृत्तिश्रुतिबलादेव हि - अनावृत्ति श्शब्दा दनावृत्ति श्शब्दा दिति सूत्रकारेणापि परब्रह्मप्राप्तिलक्षण पुरुषार्थस्य नित्यता समर्थिता ॥ ७४ ॥

साचे दनावृत्तिश्रुति रन्यथासिद्धि सुवेया तदा सम्प्रतिपन्नमोक्ष रूपपरमपुरुषार्थस्यापि नित्यता न सिध्येदेव ॥ ७५ ॥

अनावृत्तिश्रुति श्चोभयेषा मधिकारिणां सर्वत्र साधारणी दृश्यते॥७६॥

प्राप्यवस्तु तदनुभवस्थानादिनित्यत्वादपि परमपुरुषार्थवदेवा सावपि पुरुषार्थो नित्यः ॥ ७७ ॥

तदनुभवस्थाननित्यत्वंच पंचमविप्रतिपत्तिविचारे स्थापयिष्यते ॥ ७८ ॥

दिव्यसूरिभि स्सर्वैः पूर्वाचार्यै श्चैककण्ठै र्द्राविडवेद तदंगोपांग तद्भाष्यादिषु मुक्तकण्ठ मसन्दिग्धै रन्यथासिद्धिगन्धानर्है रनेकै र्निर्देशैः - अयं कैवल्याख्यपुरुषार्थो भगवत्प्राप्तिलक्षण पुरुषार्थव न्नित्य एव - नित्यतायां न किंचि दनयो वैषम्यं - अल्पत्वानल्पत्वाभ्यां स्वरूपानुगुणत्व तदननुगुणत्वाभ्यामेव चानयो वैषम्यमिति समन्ततः प्रतिपाद्यते ॥ ७९ ॥

श्रीपरांकुशदिव्यसूरिणा ताव दस्य कैवल्याख्य पुरुषार्थस्य स्वरूपं द्राविडब्रह्मसंहितायां प्रथमकाण्डे द्वितीयश्रीमुखसूक्ते पंचम

गाथायां, सप्तमश्रीमुखसूक्ते प्रथमगाथायां – चतुर्थकाण्डे प्रथमश्रीमुख सूक्ते दशमगाथायाम्, नवमश्रीमुखसूक्ते दशमगाथायाम् – षष्ठकाण्डे नवमश्रीमुखसूक्ते दशमगाथायाम् – सप्तमकाण्डे पंचमश्रीमुखसूक्ते दशमगाथायाम् – अष्टमकाण्डे ऽष्टमश्रीमुखसूक्ते षष्ठादिगाथात्रितये, दशमश्रीमुखसूक्ते द्वितीयगाथायाम् – एवं स्थलान्तरेषु प्रबन्धान्तरेषु च सम्य क्प्रतिपादितं दृश्यते ॥ ८० ॥

तत्र सर्वत्र नित्यत्वमेवा स्या वगम्यते ॥ ८१ ॥

द्राविडभाष्यकारैः प्राचीनैः कुरुकेशार्यवेदान्तयोगिकृष्णपाद सू र्युत्तरवीधिकृष्णगुरु वादिकेसरिरम्यजामातृमुनि प्रभृतिभि स्सर्वै रपि स्वस्वभाष्येषु सुप्रतिष्ठापितो ऽय मर्थः ॥ ८२ ॥

एवं भट्टनाथादिदिव्यसूर्यन्तैरपि स्पष्टतर मुक्तलक्षण एवायं पुरुषार्थ स्तत्र तत्र स्वप्रबन्धेषु निरूपितः ॥ ८३ ॥

किं बहुना । श्रीभाष्यकारैरेव श्रीगीताभाष्ये कैवल्यपुरुषार्थो नित्यएवेति मन्दमतीनामपि सुज्ञान स्स्फुटतरमेव निरूपित इति न प्रमाणान्तरगवेषण मपेक्षित मास्तिकानाम् ॥ ८४ ॥

एतेच ग्रन्था यथावसर मुपरिष्टा दुदाहरिष्यन्ते ॥ ८५ ॥

तत्र द्राविडवेद तद्भाष्यादिग्रन्था श्चास्मिन् संस्कृतग्रन्थे साजा त्येनानुरूपघटनासिध्यर्थ मपरिचितद्राविडवेदाना मपि प्रतिपत्तृणां सुखप्रतिपत्त्यर्थं च प्रायश स्संस्कृतवाण्या प्रतिसंस्कृत्यै वोदाहरिष्यन्ते ॥ ८६ ॥

यत्पुनः – सर्वे च्यवनधर्माण इति मोक्षधर्मवचनशकलमेव सम न्तत उदाहृत्य सर्वमपि शास्त्रं व्याकुल न्त्येते स्वतन्त्राः ॥ ८७ ॥

तदेव ताव त्प्रथमं विचार्यते ॥८८॥

तत्तु परस्सहस्रान्यथासिद्धि संवलितं न कथं चिदपि कैवल्यस्या नित्यता साधकं भवितु मर्हति ॥८९॥

अथात्र प्रथमं पाठविप्लव तन्मूलक निरूपककृतयोजनाभेदादि प्रदर्शनार्थं दर्शितमोक्षधर्मवचनपूर्वोत्तरसन्दर्भपाठभेदादिकं लिख्यते॥९०॥

एतद्वचन घटितं हि प्रकरणं भारते शान्तिपर्वणि द्विचत्वारिंश दधिकत्रिशततमे श्री नारायणीयोपाख्याने ऽ ष्टमे चाध्याये "चतुर्विधा ममजना भक्ता एवहिमेश्रुताः । तेषा मेकान्तिनः श्रेष्ठा येचैवा नन्य देवताः ॥ अहमेव गति स्तेषां निराशीः कर्मकारिणां । येतु शिष्टा स्त्रयोभक्ताः फलकामाहितेमताः । सर्वे च्यवनधर्मास्ते प्रति· बुद्धस्तु श्रेष्ठभाक् ॥ ब्रह्माणं शितिकण्ठश्च यश्चान्या देवतास्मृताः । सम्बुद्धचर्या स्सेवन्तो मामे वैष्यन्ति यत्परं । भक्तं प्रतिविशेषस्त एषपार्थानु कीर्तितः " इत्येतादृश पूर्वोत्तर सन्दर्भशा लयद्यत नकोशेषु ॥९१॥

अत्र ये चैवानन्य देवताइति स्थाने तेचैवानन्य देवता इति पाठान्तरं ॥१॥ एवं – चतुर्विधा इत्यर्धानन्तरं – आर्तो जिज्ञा सुरर्थार्थी ज्ञानीचेति पृथक्पृथ गित्यर्धमधिकं क्वचिदुपलभ्यते ॥२॥ एवं – सर्वे च्यवनधर्मास्ते प्रतिबुद्धस्तु श्रेष्ठभागित्यस्यस्थाने - सर्वेच्यवनधर्माणः प्रति बुद्धस्तु मोक्षभागिति - संबुद्धचयास्सेवंत इत्याद्यर्धस्थाने - प्रतिबुद्धा- नसेवन्ते यस्मात्परिमितं फलमितिच पाठः कैश्चिदुदाहृतः क्वचिदुप लभ्यते ॥ ३ ॥ इत्येवं ताव दिह पाठभेद उपलभ्यते तत्तद्ग्रन्थे षूदाहृतः ॥ ९२ ॥

इत्थं पाठभेद दर्शनेन दर्शित मोक्षधर्मवचन जातस्य ' चतु र्विधाभजन्तेमा'मित्यादि गीता सप्तमाध्याय ग्रन्थ समानप्रकरणतां – 'येत्वन्य देवताभक्ता यजन्ते श्रद्धया ऽ न्विताः । तेपि मामेव कौन्तेय यजन्त्यविधिपूर्वकं । अहंहि सर्वयज्ञानां भोक्ताच प्रभुरेवच ।

नतुमा मभिजानन्ति तत्त्वेनातश्च्यवन्तिते । यान्तिदेवव्रता देवान् पितॄन्यान्ति पितृव्रताः । भूतानियान्तिभूतेज्या यान्ति मद्याजिनोपि मा'मिति नवमाध्याय त्रयोविंशश्लोकादि प्रवृत्तग्रन्थ समान प्रकरणतांच यथायथ माचार्याः परिजगृहुः ॥९३॥

तत्र नवमाध्याय समान प्रकरणतावादिनस्त्वेव मन्यन्ते । तदेत न्मोक्षधर्मवचनजातं देवतान्तरभक्त भगवद्भक्त परंस दर्शित नवमा ध्याय समानप्रकरणमेव ॥१॥ यान्ति देवव्रता इति श्लोकोक्तदेवभक्त पितृभक्त भूतभक्त भगवद्भक्त रूपाधिकारिचतुष्टयपरतया चतुर्विधा भमजना इति चतुर्विधत्वोत्कीर्तनमपि संगच्छते ॥२॥ चतुर्थाधिकारिणा मेकान्ति प्रतिबुद्ध शाब्दितानां 'ते चैवानन्यदेवता' इत्यनेन 'ब्रह्माणं शितिकण्ठं चे'त्यादिश्लोके 'प्रतिबुद्धानसेवन्त' इत्यनेनच देवतान्तर सेवनराहित्ये नेतरत्रिविधाधिकारि व्यावृत्तता प्रतिपादनमपि नव माध्याय समान प्रकरणतामेवा स्यग्रन्थस्या वगमयति ॥३॥ सप्तमा ध्याय दर्शित प्रकरणोपात्तानां चतुर्विधानाम प्यधिकारिणां चतुर्वि धाभजन्ते मामिति भगवद्भक्ततताया एव प्रतिपादनात्, केषां चिद्देव तान्तर भक्तत्वा प्रदर्शनाच्च न तत्समान प्रकरणत्व मस्य सम्भवति॥४॥ किञ्च - सर्वे च्यवनधर्माण इत्यनेन - नतुमामभिजानन्ति तत्त्वेना त श्च्यवन्तित इत्यस्य प्रत्यभिज्ञापनाच्च नवमाध्याय समान प्रकरणत्व मवगम्यते ॥५॥ संबुद्धचर्यास्सेवन्त इति पाठदर्शनम प्यस्यैवोत्तम्भकं, देवतान्तरान्तर्यामि तया भगवतएवा राध्यत्व ज्ञाना ज्ञानाभ्या मपुन रावृत्ति पुनरावृत्तिसम्भव प्रतिपादनस्य प्रकरणद्वयाभिप्रेतत्वात् ॥६॥ दर्शित नवमाध्यायग्रन्थ भाष्यम प्यत्र प्रत्यभिज्ञापकं दृश्यते ॥७॥ तत्र चतुर्विंशश्लोकावतरणिकायां अतस्त्रैविद्या इन्द्रादि शरीरस्य परमपुरु-षस्याराधनान्येतानि कर्माणि आराध्यश्चसएवेति नजानन्ति - तेच परिमितफलभागिन श्च्यवन स्वभावाश्च भवन्तीत्यनेन - यस्मात्पारि-मितं फलमिति - सर्वे च्यवनधर्माण इतिच मोक्ष धर्मवचनैक कण्ठ्य

मेवास्य भाष्यकारै र्भाषित मित्यव गम्यते ॥८॥ एवं - यान्ति देवव्रता इत्यादि पंचविंशश्लोकावतारिकायामपि अहोमहदिदं वैचित्र्यं - यदेकस्मि न्नेव कर्मणि वर्तमाना स्संकल्पमात्र भेदेन केचि दत्यल्प फलभागिन श्च्यवन स्वभावाश्च भवन्ति - केचनानवधिकातिशयानन्द परम पुरुष प्राप्तिरूप फलभागिनो ऽ पुनरावर्तिनश्च भवन्तीत्याहेत्यनेन - तद्व्याख्याने येतुतै रेव यज्ञै र्दैव पितृ भूत शरीरकं परमात्मानं भगवन्तं वासुदेवं यजामह इति मां यजन्ते ते म द्याजिनो मामेव यान्ती त्यनेनच - सम्भु द्धचर्या स्सेवन्तो मामे वैष्यन्ति यत्परमिति पाठभेदस्य - च्यवनधर्माण इत्यस्यच प्रत्यभिज्ञापनं सम्यक्कृत मवगम्यते ॥९॥ एवं – चतुर्विधा मम जना भक्ताएवहि ते श्रुता इत्यत्र – ते भक्ता एव हि श्रुता इति कथं चिद्भक्तत्व समर्थनवाग्भङ्गीस्वारस्य पर्यालोचनेपि – तेपि मामेव कान्तेय यजन्त्यविधिपूर्वक मिति नवमाध्याय स्थायाः – देवतान्तर भक्तानां भगवद्भक्तत्व समर्थन शैल्या एव प्रत्यभिज्ञा जायते ॥१०॥ तस्मा दिद म्मोक्षधर्मवचन जातं भगवद्भक्ताना मेवा पुनरावृत्तिलक्षण मोक्ष स्सम्भवति देवतान्तर भक्तानान्तु सुदूरमपि गत्वा पुनरावृत्ति लक्षणं च्यवनधर्मत्वमवर्जनीय मेवे त्येतदर्थ प्रतिपादन परंस न्नवमा ध्याय समान प्रकरणमेव – नतु भक्तावान्तर विभागपरेण – चतु र्विधा भजन्तेमामित्यादि सप्तमाध्याय ग्रन्थेन समान प्रकरणमिति सिध्यतीति ॥९४॥

ईदृश निर्वाहक्रमश्च – श्रीमत्कृष्णपादसूरितनयेन ज्ञानाधि राज सूरिणा रहस्यत्रयार्थ कारिकाख्यग्रन्थे चरमश्लोक प्रकरणान्ते 'चतु र्विधा ममजना इत्ये तदपि संगतं । देवता पितृभूताना म्ममभक्ता श्चयेजनाः । तेषाम्मद्याजिनश्श्रेष्ठा स्त्रयोप्यन्ये ऽ न्यदेवताः । अतश्च्यवन धर्माण इति तस्यार्थवर्णना' दित्यभिहितः ॥९५॥

रहस्यत्रय तात्पर्यदीपिकाकारैरपि मूलमन्त्राधिकारान्ते दर्शित मोक्षधर्मवचनजात मुक्ताभिप्रायकतयापि योजितं ॥९६॥

अस्य वचनजातस्य सप्तमाध्याय समान प्रकरणतावादिनस्त्वेव मन्यन्ते । चतुर्विधा ममजना इत्यादि मोक्षधर्मवचन जातस्य गीता सप्तमाध्याय समान प्रकरणत्वमेव युक्तं - अधिकारि चातुर्विध्य कीर्तनस्य तत्रैकविधाधिकारिश्रैष्ठ्यवर्णनस्ये तराधिकारित्रयव्यावृत्त तादृशैकविधाधिकारिगत भगवदेक प्राप्यकत्व लक्षण श्रैष्ठ्य बीज प्रदर्शनस्यच प्रकरणद्वयैककण्ठ्य प्रत्यभिज्ञापकत्वात् ॥१॥ यान्ति देवव्रतादेवा नित्यादि नवमाध्याय श्लोकोक्तानां देवादिभक्ताना मर्था च्चतुर्विधत्वेपि तत्र तदकथनेन चतुर्विधत्वे तात्पर्यविरहात् - तादृशाना मनेकविधत्व सम्भवेन चातुर्विध्य व्यवस्थि त्ययोगाच्चा न्यत्र चतुर्विधत्वेन निर्दिष्टाधिकारि चतुष्टय विषयत्व मेवास्य स्वारसिकं ॥२॥ अतएवच - चतुर्विधा ममजना इत्याद्यर्धानन्तरं- आर्तोजिज्ञासुरर्थार्थी ज्ञानीचेति पृथक्पृथगिति क्वचित्पाठोपि दृश्यमान स्संगतो भवति ॥३॥ इत्थश्च - तेषां ज्ञानी नित्ययुक्त एक भक्ति र्विशिष्यत इति गीता सप्तमाध्याय प्रकरणस्थ ज्ञानि श्रैष्ठ्यपर सप्तदशश्लोके ज्ञानि श्रैष्ठ्य हेतुतया ऽ भिधीयमान नित्ययुक्तत्वैक भक्तित्व प्रतिकोटिभूत मितराधिकारिणा मश्रैष्ठ्य बीजतया तत्र विवक्षितं नित्ययुक्तत्वादि राहित्य पर्यवसन्नं च्यवनधर्मत्व मेवे हापीतराधिकारिणा मश्रैष्ठ्य बीजतया ऽ भिधीयते ॥४॥ पुनरावृत्ति मत्त्वलक्षणं च्यवनधर्मत्वन्तु नेह विवक्षितं - तथा सति गीताशास्त्रे ज्ञानि जिज्ञास्वो रुभयो रपुनरावृत्ति मत्त्व स्यैश्वर्यार्थिन एक स्यैव पुनरावृत्तिमत्त्वस्यचा भिधानेन - इह प्रतिबुद्ध शब्दित ज्ञानीतराधिकारि द्वयस्य पुनरावृत्तिमत्त्वा भिधाने परस्पर विरोधापत्तेः ॥५॥ इदं किलात्राभि प्रेतं - श्रेष्ठाधिकारिणो भगवत एव परमप्राप्यतया तत्कैङ्कर्यादि लक्षण तदुपासनात्मक धर्मानुष्ठान सहित तत्सहवास रूप स्तेनसहयोग स्तमधिकारिणंप्रति स्वयं पुरुषार्थभूतो यावदात्मभा व्यनुवर्तत इति सोधिकारी नित्ययुक्तइत्युच्यते । इतरयोस्तु विल-

क्षणा चित्तत्व प्रकृतिवियुक्तात्मस्वरूपलक्षण भगवदितर प्राप्य तदनुभव लक्षणै श्वर्यकैवल्यरूप पुरुषार्थान्तरपरतया दर्शितधर्मानुष्ठान लक्षणयोगस्य स्वाभिलषित पुरुषार्थान्तर साधनमात्रतयैवा पेक्षितत्वेन नदीतरणानन्तरं प्लवपरित्यागव त्स्वाभिलषित प्राप्तयनन्तरं प्रहाणादेव तादृश धर्मो निवर्तत इति च्यवनधर्मत्वं नित्ययुक्तत्व प्रतिकोटि भूत न्तयो रभिधीयत इति ॥६॥ तथाच – च्यवनधर्माण इत्यनेन – च्यवनः कालविशेषे निवर्तनशीलः – धर्मः – अपेक्षित श्रेयस्साधन भूतः कैंक र्यादिरूपोपासनलक्षण स्स्वामि प्रीतिहेतु र्व्यापारः – येषान्ते च्यवन धर्माण इत्यर्थकेन सेव्य सेवकभाव लक्षण धर्मनिवृत्तिरूपो नित्य योगाभावएवे ह्यभिधीयत इति नात्र कैवल्यार्थिनः पुनरावृत्ति प्रति पादनगन्धः ॥७॥ अतएव चात्र – च्यवनधर्माण इति धर्मपदप्रयोग सार्थक्यं – अन्यथा – नतु मा मभिजानन्ति तत्त्वेनातश्च्यवन्तित इत्य त्रेव च्यवनशब्द मात्रेणैव पुनरावृत्ति लाभेन् धर्मशब्द वैयर्थ्यात् ॥८॥ ज्ञानिन स्तदितरयोश्च प्रधानतम परस्पर व्यावर्तक धर्मतया गीताशास्त्रे बहुषु स्थले ष्वसकृ दभिधीयमानं नित्ययुक्तत्व तद्राहित्यरूपं परस्पर वैलक्षण्य मिहा प्यवश्य मभिधातव्य मेवेति तदभिधान मेवोचितं ॥९॥ गीता सप्तमाध्यायस्थ दर्शित प्रकरण गतस्य - तेषां ज्ञानी नित्ययुक्त एकभक्ति र्विशिष्यत इत्यादि सप्तदश श्लोकस्य भाष्ये भाष्यकारैः – तेषां ज्ञानी विशिष्यते - कुतः - नित्ययुक्त एक भक्तिरितिच - तस्य हि मदेकप्राप्यस्य मया योगो नित्यः - इतरयोस्तु यावत्स्वाभिलषित प्राप्ति मया योगः - तथा - ज्ञानिनो मय्येकस्मिन्नेव भक्तिः - इतरयोस्तु स्वाभिलषिते तत्साधनत्वेन मयिच - अत स्सएव विशिष्यत इति भाष माणै स्तदिदं सर्व वैलक्षण्यं स्पष्टमेव निरूपितं ॥१०॥ अत्राभिधीय मानो योग स्सेव्यसेवक भावेन सहवर्तन लक्षणो गुणानुभव कैंकर्यरूपधर्म एव पर्यवस्यति – परमात्मनो विभुत्वेन यथा कथंचि

त्संयोगादिलक्षणस्य तदीयान्यादृशयोगस्य व्यावर्तकत्व कादाचित्कत्वा द्ययोगात् ॥ ११ ॥ अत एव – सततं कीर्तयन्तो मां यतन्तश्च दृढ़ व्रताः । नमस्यन्त श्च मां भक्त्या नित्य युक्ता उपासत इति गीता नवमाध्याय चतुर्दशश्लोकभाष्ये – नित्ययुक्ताः – नित्ययोगं कांक्षमाणाः– आत्मान्तं महास्यव्यवसायिन इति व्याकुर्वाणै र्भाष्यकारै रेव भाषितम् नित्ययुक्तशब्दार्थघटकयोगस्य यावदात्मभाविनित्यकैंकर्य पर्यवसन्न तच्छ्लोकोक्त परिचर्यायुक्त सततसद्भावास्वरूपत्वम् ॥१२॥ ये तु सर्वाणि कर्माणि मयि सन्न्यस्य मत्पराः । अनन्येनैव योगेन मां ध्यायन्त उपासत इति द्वादशाध्याय षष्ठश्लोकभाष्येपि – मत्पराः – मदेकप्राप्याः – अनन्येनैव योगेन – अनन्यप्रयोजनेन योगेन – मां ध्यायन्त उपासते – ध्याना र्चन प्रणाम स्तुति कीर्तनादीनि स्वय मेवा त्यर्थप्रियाणि प्राप्यसमानि कुर्वन्तो मा मुपासत इत्यर्थ इति योग शब्दो गुणानुभवकैंकर्यलक्षणधर्मपरो व्याख्यातः ॥ १३ ॥ तथा च – सेव्यसेवकभावलक्षणो यो धर्म स्साधनानुष्ठानदशायां स्वस्वप्राप्य प्राप्तिसाधनत्वेन त्रयाणा मधिकारिणां साधारणो ऽपेक्षितः – स धर्मो ज्ञानिनः प्रापकरूपः प्राप्यरूपश्चे त्यत स्स्वय मेवा यं पुरुषार्थभूत स्सन् प्राप्यदशाया मपि याव दात्मभावी ज्ञानिनो न च्यवते – अन्ययो स्त्वय मैश्वर्यकैवल्यपुरुषार्थयो स्स्वयं साधनमात्रभूत स्सन् साध्य निष्पत्तौ च्यवत इत्यय मंशो ऽत्राभिधीयते सर्वे च्यवनधर्माण इ त्यनेनेति नात्र कश्चि द्विरोधः ॥ १४ ॥ एष धर्मो ज्ञानिनः प्रापक रूपः प्राप्यरूपश्चेती दृशं वैचित्र्यं गीताशास्त्रे ऽसकृ दुच्यते ॥१५॥ यथोक्तं नवमाध्यायद्वितीयश्लोके – प्रत्यक्षावगमं धर्म्यं सुसुखं कर्तु मव्यय मिति – द्वादशाध्यायान्त्यश्लोके – ये तु धर्म्या मृत मिदं यथो क्तं पर्युपासत इति च ॥ १६ ॥ एव मन्यत्रापि नित्ययुक्तादिशब्दै रिद मेवा भिहितं द्रष्टव्यम् ॥ १७ ॥ दर्शितनवमाध्याय द्वितीयश्लोक भाष्ये – धर्म्यं धर्मा दनपेतं – धर्मत्वं हि निश्श्रेयससाधनत्वम् –

स्वरूपेणैवात्यर्थप्रियत्वेन तदानी मेव मद्दर्शनापादनतया च स्वयं निश्श्रेयसरूप मपि निरतिशय निश्श्रेयसरूपात्यन्तिक मत्प्राप्तिसाधन मित्यर्थ इति – दर्शितद्वादशाध्यायान्तिमश्लोकभाष्ये – धर्म्यं वा मृतं चेति धर्म्यामृतं – ये तु प्राप्य समं प्रापकं भक्तियोगं – यथोक्तं – मय्यावेश्य मनो ये मा मित्याद्युक्तेन प्रकारेणो पासते – ते भक्ता अतितरां मम प्रिया इति च भाषमाणै र्भाष्यकारैर पीदृशं वैचित्र्यं स्फुटमेव व्याख्यातम् ॥ १८ ॥ तस्मा दिहोच्यमानं च्यवन धर्मत्वं न पुनरावृत्तिमत्त्वरूपं – अपि तु यथोक्तरूप मेवेति सम्य गवधार्यताम् ॥ १९ ॥ अह मेव गति स्तेषां निराशीः कर्मकारिणां । ये तु शिष्टा स्त्रयो भक्ताः फलकामा हि ते मताः ॥ सर्वे च्यवन धर्माण इ त्यत्रैव वचने – अह मेव गति रित्याद्यर्धेनै कान्तिनां भगव दितरफलान्तराभिसन्धिरहित कर्मकारित्वपूर्वकं भगवदेकप्राप्यत्व मभिधाय – हि यस्मात – ते फलकामाः – भगवदितर स्वस्वाभिमत फलान्तरकामा मताः – तत एव हेतोः – ते सर्वे च्यवनधर्माण इत्युक्त्या दर्शितगीताभाष्योक्तएवार्थ श्च्यवनधर्मत्वरूप स्स्पष्ट मुच्यत इत्यवगम्यते ॥ २० ॥ अत्र अह मेव गति स्तेषा मिति भग वदेकप्राप्यत्वं ज्ञानिना मभिधाय तत्प्रतिकोटितया ऽन्येषा मभिधीय मान मिदं फलकामत्वं भगवत्प्राप्तीतरप्रयोजनविशेषकामत्वरूपमेव – तन्निमित्तीकृत्या भिधीयमान मिदं च्यवनधर्मत्वं दर्शितनित्ययुक्तत्वा भावरूप मेवेति हि स्पष्ट मेवोपलभ्यते – च्यवनधर्मत्वस्य पुनरावृत्तिमत्त्वरूपत्वे फलान्तरकामताया स्तद्धेतुत्वासम्भवात् – भगवदुपासनादिलक्षणस्वरूपानुगुण धर्मविशेषच्युतिरूपत्वे च फलदशाया मुपायानुवृत्त्यनावश्यकत्वेन फलान्तरप्राप्तिदशायां तदुपायमात्रतया ऽभिमत भगवत्सेवनलक्षणधर्मनिवृत्त्यवश्यंभावेन फलान्तरकामताया स्तद्धेतुत्व सम्भवाच्च ॥ २१ ॥ नच – सर्वे च्यवनधर्माणः प्रतिबुद्धस्तु मोक्षभा गिति प्रतिबुद्धाधिकारिणो ऽपुनरावृत्तिलक्षण मोक्षरूपफलाभिधान

दर्शनेन तत्प्रतिकोटितया प्रतिबुद्धेतराधिकारिविषयस्या भिधीयमान मिदं च्यवनधर्मत्वं पुनरावृत्तिमत्त्वरूपं किं न स्या दिति वाच्यम् - सर्वे च्यवनधर्मा स्ते प्रतिबुद्धस्तु श्रेष्ठभागित्येव तत्र पाठदर्शनात - तत्पाठे च - तेषा मैकान्तिन श्श्रेष्ठा इत्युपक्रान्त श्रेष्ठत्वस्यैव - श्रेष्ठभागित्यन्तेनोपसंहारदर्शनेन भगवत्प्राप्तिलक्षणस्वरूपानुगुण परमपुरुषार्थ स्यैव श्रेष्ठफलरूपतया तद्भाजां प्रतिबुद्धानां निरुक्तधर्मविशेष प्रच्युतिविरहेण तत्प्रतिकोटितया प्रतिबुद्धेतरेषां निरुक्तधर्मविशेष प्रच्युतिमत्त्वरूप च्यवनधर्मत्वस्यैवा भिधानौचित्येन दर्शितशंकानव काशात - समानप्रकरणदर्शित गीताग्रन्थानुगुण्येन दर्शितपाठस्यैव प्रामाणिकत्वाच्च ॥ २२ ॥ इद मत्रावधेयम् - समानप्रकरणदर्शितगीता ग्रन्थे चतुर्विधाधिकारिमध्ये ज्ञानिशब्दनिर्दिष्टाधिकारिणः - तेषां ज्ञानी नित्ययुक्त एकभक्ति र्विशिष्यत इत्यादिना श्लोकत्रयेण नित्य युक्तत्वैकभक्तित्व भगवदेकानुत्तमगतिकत्व परमप्राप्यप्रापकादि सर्व प्रकार वासुदेवप्रपन्नत्वादिभि रधिकार्यन्तरेभ्य श्श्रेष्ठत्वदुर्लभत्वा दिकमुक्तं - प्रत्युत तत्र जिज्ञासुशब्द निर्दिष्टाधिकारिणोऽपुनरावृत्ति लक्षण प्रकृतिवियुक्तात्मस्वरूप प्राप्तिरूपमोक्षः फल मुच्यते स्पष्टं - अपुनरावृत्तिश्च ज्ञानि जिज्ञास्वो रुभयो स्तुल्यरूपैव प्रतिपाद्यते - अन योर्वैषम्यन्तु स्वस्व प्राप्यभूत परमात्म प्रत्यगात्मनो स्सुमेरुसर्षप सह स्रांशुखद्योतादिव त्स्वतस्सिद्धातिमात्रोत्कर्षापकर्षलक्षण तारतम्य मात्रनिबन्धन मित्यपि स्फुटमुच्यते - अर्चिरादिगतिश्चोभयो स्साधारणी प्रतिपाद्यते -नच मोक्षभिन्न पुरुषार्थस्य स्वागतिः क्वचिदुच्यते-नवा मोक्षो प्यनित्यः - एवं समानप्रकरणे महता ग्रन्थेन विशदतमं दर्शिताधि कारि चतुष्टयस्वरूप फलगतया ह्यभिधानेन तद्विरोधेनेह - सर्वे च्यव नधर्माणः प्रतिबुद्धस्तु मोक्षभागितिपाठः प्रामादिकः प्रक्षिप्तोवेति सम्भावनीयो वर्तते - नचासौ पाठो ऽयतनकोशेषु क्वचिदपि दृश्यते - दृश्यतेच - सर्वे च्यवनधर्मास्ते प्रतिबुद्धस्तु श्रेष्ठभागित्येव सर्वत्रपाठः-

अनुगुणश्चायं पाठो गीतादि समान प्रकरण ग्रन्थस्य स्वीयपूर्वोत्तर सन्दर्भस्यच - अस्यचाय मर्थः - प्रतिबुद्धेतराधिकारिवय प्राप्य प्रकृति तत्त्व प्रत्यगात्मतत्त्वरूप पुरुषार्थेभ्यः परमात्मतत्त्वरूप श्रेष्ठ पुरुषार्थ भाक् प्रतिबुद्धः - अतो ऽस्याधिकार्यन्तरेभ्य श्श्रैष्ठ्यं पूर्वोक्तमिति तदिदं प्रतिबुद्धाधिकारि पुरुषार्थश्रैष्ठ्यं गीताशास्त्रे ष्वष्टमाध्याये पञ्चदशश्लोक प्रभृति द्वाविंशश्लोकपर्यन्त ग्रन्थे तत्तदधिकारि प्राप्य वस्तु विनाशित्वा विनाशित्वोत्कर्षापकर्ष प्रतिपादनपरे प्रथमत ऐश्वर्यार्थि कैवल्यार्थि प्राप्य वस्तु तदुत्कर्षापकर्ष तारतम्याभिधानानन्तरं ज्ञानि प्राप्यस्य सर्वोत्कृष्ट पुरुषार्थरूपता प्रतिपादनपरेण - पुरुष स्सपरःपार्थभक्त्यालभ्य स्त्वनन्ययेत्यादि द्वाविंशश्लोकेन स्पष्टमुच्यते - अतएवोक्तं तच्छ्लोकाव तरणिकाभाष्ये ज्ञानिनः प्राप्यन्तु तस्मादत्यन्त विभक्त मित्याहेति कैवल्यार्थि भगवत्प्राप्त्यर्थिनोः प्राप्यतारतम्यमात्रं · उक्तश्च तदुत्तर श्लोकावतरणिकाभाष्ये - ' अथात्मयाथात्म्यविदः परमपुरुष निष्ठस्य च साधारणी मर्चिरादिकां गतिमाह । द्वयोर प्यर्चिरादिकागतिःश्रुतौ श्रुता । साचापुनरावृत्ति लक्षणे ' त्यनयो रुभयोर प्यविशेषे णार्चिरादि गतिमत्त्व मपुनरावृत्ति मत्त्वंच - एवं सति कथ मिह प्रतिबुद्धेतरेषां सर्वेषा मविशेषेण पुनरावृत्तिमत्त्व मभिधीयेत · तस्मात् सर्वे च्यवन धर्मास्ते प्रतिबुद्धस्तु श्रेष्ठभागित्येव पाठस्या द्यनकोशेषु सर्वत्र दृश्यमानत्वा त्तस्यैवच प्रमाणान्तर समान प्रकरण स्व प्रकरण पूर्वोत्तर सन्दर्भादीना मनुगुणत्वाच्चा न्यादृशःपाठः प्रामादिकः प्रक्षिप्तोवेति सम्भाव्यते - ततो न तेन कैवल्यार्थिनः पुनरावृत्ति मत्त्व शंकापि सुकरेति ॥२३॥ अस्तु वा कथंचि दयमपि पाठः प्रामाणिकः ॥२४॥ तथापि · शब्दस्य स्व प्रतिपाद्य मुख्यतमार्थएव प्रथमं प्रवृत्ते रत्रत्य मोक्षशब्दस्य भगव त्प्राप्ति लक्षण मुख्यमोक्ष परतया तत्र निरुक्त धर्म विशेष प्रच्युति विरहेण तदुपादन मुखेन यथोक्त रीत्यैव प्रतिबुद्धस्य श्रैष्ठ्य मिहा भिधित्सित मिति न प्रमाणान्तर समान प्रकरणादि विरुद्धार्थ परता

अस्य प्रकरणस्य केन चि त्सुवचा ॥ २५॥ इदं पुन रत्र बोद्धव्यं - मोक्ष शब्दो हि प्रतिबन्धक निवृत्ति मात्र परः - नत्वपुनरावृत्ति परः- मोक्षशब्देन प्रतिबुद्धस्या पुनरावृत्तिमत्वे साक्षात्प्रतिपाद्यमाने सत्येवच- च्यवनधर्माण इत्यनेन तत्प्रतिकोटितया प्रतिबुद्धेतरेषां पुनरावृत्तिमत्वं स्वरसतः प्रतीतंस्यात् - नचेह तदस्ति – परन्तु मोक्षेसति पुनरावृत्ति राहित्यस्य वस्तुतो विद्यमानतया मोक्षशब्देन परम्परया तत्प्रतिपादन सिद्धि मभिप्रेत्य तत्प्रतिकोटितया च्यवनधर्माण इत्यनेन पुनरावृत्तिः प्रतिपाद्यत इति वक्तव्यं – तथा सति - परम मोक्षे निरुक्तधर्मविशेष प्रच्युतिराहित्यस्यापि वस्तुतो विद्यमानतया मोक्षशब्देन परम्परया तत्प्रतिपादन सिद्धिमेवा भिप्रेत्य तत्प्रतिकोटितया प्रतिबुद्धेतरेषां निरुक्तधर्मविशेष प्रच्युतिमत्वमेव प्रमाणान्तराद्यानुगुण्येन स्वरसतः प्रतिपादयितुं शक्यं – मोक्षशब्दस्यच भगवत्प्राप्तिलक्षण मुख्यमोक्ष एव प्रथमतरं प्रवृत्ति र्युक्ता – प्राधान्यातिशयात् - सा विद्या या विमुक्तय इति विद्याशब्दस्य प्राधान्यातिशयेन मोक्षविद्यापरतया प्रवृत्तिन्यायात्- एते वै निरयास्तात स्थानस्य परमात्मन इत्युक्तन्यायेन तत्वज्ञानां तद्दृष्ट्या न्यस्य मोक्षशब्देन व्यपदेशानर्हत्वात – कैवल्य हेतु भगव त्संकल्पस्यापि भगवत्प्राप्तिविशेष प्रतिबन्धकत्वा विशेषेण मुक्तिर्मोक्षो महानन्द इत्यादि कोश सिद्ध रूढि शक्यतावच्छेदक ह्रासेनच मोक्षशब्दस्या स्मिन्नेवार्थे प्रवृत्ति निमित्त पौष्कल्य सद्भावाच्च - अतः – प्रतिबुद्धस्तु मोक्षभागिति प्रतिबुद्धस्य कैवल्यार्थिनोपि व्यावृत्ततया निर्देश उपपद्यत इति ॥ २६ ॥ ते चैवानन्यदेवता इति प्रतिबुद्धान सेवन्त इतिच प्रतिबुद्धानां देवतान्तर सेवन राहित्येने तर व्यावृत्त तया ऽभिधानन्तु - इत रेषां भगवद्भक्तानामप्यत्र विवक्षिताधिकारिणां परिमित फलान्तर सङ्गित्व निबन्धनं किञ्चि द्देवतान्तरसेवन मवर्ज नीयं - कात्स्न्येन परिमित फलत्यागिनां प्रतिबुद्धानामेव तन्नास्ती त्यभि प्रायकं ॥२७॥ एतद्वचन प्रामाण्यादेव च परिमित फलस्य देवतान्तर

सेवन नियतत्व मभ्युपगम्यते ॥२८॥ अत एवोक्तं वेदान्ताचार्यैरपि श्रीपाञ्चरात्र रक्षायां तृतीयाधिकारे परमैकान्तिपद व्याख्यानावसरे - एवं परिमितविषयत्यागिनां परिमित देवतान्तरत्यागो नियतोभवति - कांक्षन्तः कर्मणां सिद्धिं यजन्त इह देवताः । क्षिप्रंहि मानुषेलोके सिद्धिर्भवतिकर्मजा । ब्रह्माणं शिति कण्ठंच याश्चान्या देवतास्स्मृताः । प्रतिबुद्धानसेवन्ते यस्मात्परिमितं फलमिति परिमित फलसंग तद् भावाभ्यां देवतान्तर सम्बन्धासम्बन्ध प्रतिपादनादिति ॥२९॥ वस्तु तस्तु - तच्चैवा नन्यदेवता इत्यनेन प्रतिबुद्धानां तत्प्रकरण विवक्षिता- धिकार्यन्तरेभ्यो देवतान्तनसेवन राहित्येन व्यावृत्तता न विवक्षिता - अपितु भगव दनन्यप्राप्यत्वेनैव - अहमेव गतिस्तेषां निराशीः कर्म कारिणा मित्युत्तरेणार्थेन - अनन्यदेवता इत्यस्या नन्यप्राप्यविषयतया ऽ नुपदमेव विवृतत्वात् - अन्या - स्वप्राप्यादन्या - देवता - प्रापकतया स्वोपास्यादेवता - येषान्ते ऽ न्यदेवताः - ते न भवन्ती त्यनन्यदेवताइति व्युत्पत्त्या - अनन्या - स्वप्राप्यादभिन्ना - देवता - प्रापकतया स्वोपास्या देवता - येषान्तें ऽ नन्यदेवता इति व्युत्पत्त्यावा भगव दनन्यप्राप्यत्वस्य शब्देनैव स्वरसतोलाभात् - भगवन्त मुपास्य तेन विलक्षणा चित्तत्त्व प्रकृतिवियुक्त प्रत्यगात्म तत्त्वरूप प्राप्यान्तर साधनपरै रैश्वर्यार्थि कैवल्यार्थि व्यावर्तकतया भगवदनन्यप्राप्यत्वस्या व्याहतत्वाच्च ॥३०॥ ब्रह्माणं शितिकण्ठं चेत्यादिश्लोके - प्रतिबुद्धानसेवन्त इत्यभिधानन्तु न प्रतिबुद्धानां देवतान्तर सेवनराहित्येन तत्र विवक्षिताधिकार्यन्तर व्यावृत्ति प्रदर्शनाभिप्रायकं - अपितु नैमित्तिकेषु तेषामपि देवतान्तर सेवनस्य प्रसक्तत्वेन भगवदेक प्राप्याणां तेषां तादृश देवतान्तरस्य तत्सेवन रूपधर्मस्यच प्रापककोटिमात्र निविष्टतया प्राप्यदशाया मनुवृत्ति विरहेणा न्य देवतात्वं च्यवनधर्मत्वंचा वर्जनीय मित्याशंकायाः- ब्रह्माणं शितिकण्ठं चेत्यादिना - भक्तं प्रतिविशेषस्त एष पार्थानुकीर्तित इत्यन्तेन ग्रन्थेन - नित्य नैमित्तिकेष्वपि कर्मसु प्रतिबुद्धानां परिमित

फलहेतु देवतान्तरसेवनं नास्त्येव - तत्रापि तत्तदन्तर्यामिणः परमात्मन एव तै स्तै श्शब्दै र्विवक्षितस्य तेषा माराध्यत्वात् - नचायं प्रतिबुद्धाना मेव विशेषः - अपितु देवतान्तर भक्तेभ्यो व्यावृत्तः कृत्स्नस्यैव भगवद्भक्तस्यायं विशेष इत्येवं परिहारमात्र तात्पर्यकमेव - सम्बुद्ध चर्यास्सेवन्त इत्यादि तत्रत्य पाठान्तरेण - नतुमामभिजानन्ति तत्त्वेना तश्च्यवन्तित इत्यनेन गीतावचनेन चैकार्थ्यात् ॥३१॥ सम्बुद्धचर्या स्सेवन्त इत्यादे श्चायमर्थः - सम्बुद्धचर्याः - सर्वान्तरात्मभूत परमात्म याथात्म्य ज्ञानगर्भ कर्मयोगनिष्ठाः प्रतिबुद्धाः ब्रह्मादीन् - तदन्तर्या मिणं परमात्मानमेव साक्षादाराध्य मनुसन्धाय - ब्रह्मार्पणं ब्रह्म हवि र्ब्रह्माग्नौ ब्रह्मणाहुतं । ब्रह्मैवतेन गन्तव्यं ब्रह्म कर्म समाधिनेति गीता चतुर्थाध्याय चतुर्विंश श्लोकोक्त न्यायेन - साक्षादाराध्यादिभूतं परमात्मानंप्रति पीठादिमात्र स्थानीयतया सेवमानाः - सर्वस्मात्परं यत् - तत्परब्रह्मभूत माविष्यन्तीति ॥३२॥ इत्थञ्च चतुर्णामप्यधिकारिणां भगवदेकभक्तत्वेपि नक्षतिः ॥३३॥ तथाच - मोक्षधर्मप्रकरणेपि - आर्तो जिज्ञासुरर्थार्थी ज्ञानीचेति पृथक्पृथगि त्यर्धस्यापि क्वचित्पाठदर्शना दनेकैः प्रत्यभिज्ञापकैः प्रकरणद्वयैककण्ठ्यावगमाच्च दर्शित मोक्षधर्म वचनजातं दर्शित गीता सप्तमाध्यायवचन समान प्रकरणमेवाभ्युपगन्तुं युक्तमिति ॥९७॥

अयं सप्तनवतितमवाक्योक्त योजना भेदकल्पः - अधिकारिणां चतुर्विधत्व कीर्तनस्वारस्यं - आर्तो जिज्ञासुरर्थार्थी ज्ञानीचेति पृथ क्पृथगित्यर्धस्यापि क्वचित्पाठदर्शनंचो पजीव्यप्रवृत्तः ॥९८॥

दर्शितार्धश्लोक सद्भाव पाठश्च तत्त्वदीपे द्वय प्रकरणे वादिकेसरि सौम्यजामातृमुनिभिः - तत्त्वत्रयरहस्य तृतीयप्रकरण व्याख्याने वरवर मुनिभि श्चोदाहृतो दृश्यते ॥९९॥

प्राक्चतु र्नवतितमवाक्योक्त योजनाभेदकल्पस्तु - तेचैवा नन्य देवता इति पदस्वारस्यं - प्रतिबुद्धा न सेवन्त इत्यस्य प्रतिबुद्धानां

प्रकरणपठितेतर त्रिविधाधिकारिव्यावृत्तिप्रतिपादकता स्वारस्यञ्चोप-जीव्य दर्शिताधिकार्थं पाठानादरेणप्रवृत्तः ॥ १०० ॥

वयन्तु मन्यामहे । दर्शितमोक्षधर्मवचनजातस्य दर्शित गीता सप्तमाध्याय वचनोक्ताधिकारि चतुष्टयविषयत्वेपि 'च्यवनधर्माण' इत्य-स्य पुनरावृत्तिमत्त्वार्थकत्वस्वीकारेपि च स्वरसतएवा विरोधेनसन्द र्भ निर्वाहस्सम्भवति । दर्शितमोक्षधर्मवचनजाते दर्शित गीतासप्तमा ध्यायप्रकरणेच भगवद्भक्तेष्वेव कस्यचिदितरेभ्यो व्यावृत्ते भगवद्भक्तानां देवतान्तरभक्तेभ्यो व्यावृत्तेश्चोभयोरेव प्रतिपिपादयिषितत्वेन यथायथं तत्तदंशानां तत्तद्विषयत्वसम्भवात् ॥ १ ॥ दर्शित नवमाध्यायप्रक रणस्य दर्शित सप्तमाध्यायप्रकरणशेषत्वेना नयोरुभयो रेकप्रकरणत्वेन न भिन्नप्रकरणत्वानुसन्धानं युक्तम् ॥ २ ॥ यत स्सप्तमाध्याय प्रकरणप्रतिपिपादयिषितार्थस्यैव विशदनिरूपणपरं दृश्यते नवमाध्याय प्रकरणम् ॥ ३ ॥ तथाहि – गीतासप्तमाध्याये दर्शितप्रकरणस्य भगवद्भक्तेषु ज्ञान्याख्याधिकारिणो भगवद्भक्तान्तर देवतान्तरभक्तरूप कृत्स्नाधिकार्यतरापेक्षया श्रैष्ठ्यं परमदुर्लभत्वञ्च प्रधानप्रतिपाद्यम् ॥ ४ ॥ इदं ज्ञानीतरसकलाधिकारिणां स्वरूपस्वभावप्रतिपादनपूर्वकं ज्ञान्यपेक्षया ऽपकर्षप्रतिपादनं ज्ञानिदशाया दुस्तर बहुतर विरोधिनिवर्तनपूर्वक प्राप्त व्यता प्रतिपादनं चान्तरेण प्रतिपादयितुं न शक्यते ॥ ५ ॥ अत स्सर्वेषां भगवद्भक्तानां देवतान्तरभक्तानां च स्वरूपस्वभावादिव-र्णनमिह प्रस्तुतमेव ॥ ६ ॥ अतएव – गीता सप्तमाध्याये 'चतु र्विधाभजन्तेमा' मित्यादि षोडशश्लोके चतुर्विधभगवद्भक्ता न्निरूप्य 'तेषां ज्ञानी' त्यादि सप्तदशश्लोकप्रभृति श्लोकत्रयेण ज्ञानिनस्स्वेतर सकलभगवद्भक्तेभ्य श्रैष्ठ्यम्प्रतिपाद्य, तत्रैकोनविंशश्लोके–'समहात्मासु दुर्लभ' इति तस्य दुर्लभत्वमपि प्रस्तुत्य, 'कामै स्तै स्तै र्हृतज्ञानाः प्रपद्यन्ते ऽन्यदेवता' इत्यादि विंशश्लोकमारभ्य – 'येषां त्वन्त गतंपापं जनानां पुण्यकर्मणां । ते द्वन्द्वमोह निर्मुक्ता भजन्तेमां दृढव्रताः ॥'

इत्यष्टाविंशश्लोकान्तेन ग्रन्थेन – तै स्तैः कामै र्हृतज्ञानतया तत्तत्सि द्ध्यर्थं देवतान्तराण्येव प्रपद्यमानाना मनादिपापवासनाबल मो मुह्यमा-नतया भगवत्प्रभावमजानतां लोकानां स्वहवाभगवद्भजनौन्मुख्यगन्ध एवनविद्यते – अपि त्वनेक जन्मार्जित सुकृतसंचयेन ये क्षीणपापा स्त एव भगवन्तं प्रपद्यन्तइति भगवद्भक्तदशायाएव दुर्लभत्वप्रतिपाद् नमुखेन ज्ञानिदशाया स्सुदुर्लभत्वं, देवतान्तर भक्ताना मन्तवत्फल तया ऽनन्तफलानां भगवद्भक्तानां तेभ्यो व्यावृत्तत्वं च प्रतिपा द्यते ॥ ७ ॥ तत्र – " अन्तवत्तु फलन्तेषां तद्भवे दल्प मेध-साम् । देवान् देवयजोयांति मद्भक्तायान्ति मामपी " ति त्रयोविंशश्लोके देवतान्तरभक्त भगवद्भक्ताना मन्तवत्फलत्वानन्तफ लत्वाभ्यां वैषम्य मुच्यते ॥ ८ ॥ एतदेवच वैषम्यं – नवमा ध्याये – " त्रैविद्यामां सोमपाः पूतपापा " इत्यादि विंशश्लोक प्रभृतिना – यान्तिदेवव्रता देवा नित्यादि पंचविंशश्लोकान्तेन ग्रन्थेन विशदतरमुच्यत इति नदर्शित सप्तम नवमाध्याय ग्रन्थयोर्भिन्न प्रकरणता ॥ ९ ॥ इत्थंच दर्शित सप्तमनवमाध्याय ग्रन्थप्रतिपा दितं भगवद्भक्त देवतान्तर भक्तरूप सकलेतराधिकारिभ्यो ज्ञा न्यधिकारिणः श्रैष्ठ्यमेव दर्शित मोक्षधर्मप्रकरणेनापि प्रतिपाद्यत इति नात्र विरोधगन्धः ॥ १० ॥ दर्शित मोक्षधर्मवचनजातेच 'चतुर्विधा ममजना ' इत्यनेन 'चतुर्विधाभजन्तेमा' मित्युक्त चतुर्वि-धभक्त निर्देशएव क्रियते ॥ ११ ॥ 'तेषा मेकान्तिन श्रेष्ठा ' इतिच ' तेषां ज्ञानीनित्ययुक्त ' इत्यादि वज्ज्ञानिनिर्देशः ॥ १२ ॥ येचै-वानन्यदेवता स्तेषा मेकान्तिनश्श्रेष्ठाइति योज्यम् ॥ १३ ॥ येचेमे भगवदनन्यदेवताएव चतुर्विधाभक्तानिर्दिष्टा स्तेषा म्मध्य एकान्तिन एवश्रेष्ठा इतितदर्थः ॥ १४ ॥ ' यचैवानन्यदेवता ' इत्येवपाठस्सं प्रति सर्वत्र दृश्यते ॥ १५ ॥ ' तेचैवा नन्यदेवता ' इति पाठेपि तच्छ-ब्दः पूर्वतच्छब्द समानविषयएव ॥ १६ ॥ चकारैकान्तिना

मपि समुच्चयेनतु सर्वेषा मप्यनन्यदेवताकत्वबोधः ॥ १७ ॥ अत्र तेनैवानन्यदेवता इति चतुर्णामनन्यदेवताकत्व वर्णनं 'उदाराःसर्वएवैत' इति गीतानिर्देश समानविषयम् ॥१८॥ "सर्वएवै ते मामेवोपासत इत्युदारा " इत्युदारत्वमनन्यदेवत्व पर्यवसन्नमेव तत्रभाषितम् ॥१९॥ तथाच – चतुर्णामनन्यदेवत्वे प्येकान्तिनएव तत्र श्रेष्ठा वक्ष्यमाणा-नन्यप्रयोजनत्वेने त्युभयत्रैकरूपेणैव श्रैष्ठ्यमुपपादितं भवति॥२० ॥ अत्रा नन्यदेवता भक्तशब्दाभावा त्प्रागुक्तरीत्या अनन्यदेवता इत्य स्यानन्यप्राप्यपरतापिवा सुवचा ॥ २१ ॥ सर्वथा – चतुर्विधाभजन्ते मा मित्यत्र चतुर्विधाममजना इत्यत्र च विवक्षितानां चतुर्णामप्य-धिकारिणां भगवदेक भक्तत्वमेवाभिमतम् ॥ २२ ॥ तथाच– चत्वा रोपि भगवदनन्यदेवताएवेति यद्यप्युत्कृष्टाएव, तथापि – तेषा मप्ये-कान्तिनएष श्रेष्ठाः, यतोनिराशीः कर्मकारिणा मेकान्तिनां भगवाने-व परमप्राप्यः, इतरेषां त्रयाणान्तु भगवतइतरदेवफलम् ततः, इत्यय मर्थः तेषा मेकान्तिन श्रेष्ठा इत्यादिना 'फलकामाद्दितेमता' इत्य न्तेनार्धत्रयेण गीतावदेवेहापि प्रतिपाद्यत इति सिद्धम् ॥ २३ ॥ इत्थंच – गीताशास्त्रे 'उदारास्सर्वएवैत' इत्यादि श्लोकवदत्रापि भगवदे-कपरमप्राप्यत्व भगवदितरपरमप्राप्यत्वाभ्यामेव ज्ञानितादितराधिकारि त्रयव्यावृत्तिः प्रतिपादितेतिनात्र पुनरावृत्तिमत्त्वा पुनरावृत्तिमत्त्वाभ्यां वैषम्यं विवक्षितम् ॥ २४ ॥ इत्थं भगवद्भक्तेष्वेव प्राप्यवैषम्यमूलां ज्ञानिन इतराधिकारित्रयाद्व्यावृत्ति मभिधाय–'सर्वे च्यवनधर्माण'इत्यादिना सार्ध श्लोकद्वयेन देवतान्तरभक्तेभ्यो भगवद्भक्तस्य व्यावृत्ति रभिधीयते ॥२५॥ तदिदं गीताशास्त्रेपि–'कामै स्तै स्तै र्हृतज्ञानाः प्रपद्यन्तेऽ न्यदेवताः ।' इत्यारभ्य –"अन्तवत्तु फलं तेषां तद्भवे दल्पमेधसाम् । देवान् देवयजो यान्ति मद्भक्ता यान्ति मा मपि" त्यन्तेनोच्यते ॥ २६ ॥ एत देव च नवमाध्याये विंशादिश्लोकत्रयेण प्रथमं संग्रहेणाभिधाय तत स्त्रयोविंशादिश्लोकत्रयेण तदेव फलवैषम्यहेतूपन्यासपूर्वकं विपुल

मिति न सप्तमनवमाध्यायग्रन्थयो भिन्नप्रकरणता, ज्ञानिश्रैष्ठ्यप्रतिपादनशेषत्वेनैकप्रकरणत्वात् ॥ २७ ॥ इत्थं च 'सर्वे च्यवनधर्माण' इत्यत्र सर्वपदं सर्वदेवतान्तरभक्तपरं, ज्ञानिन स्स्वेतरभगवद्भक्तेभ्यो व्यावृत्ते रनुपदमेव निरूपिततया देवतान्तर भक्तेभ्यो व्यावृत्ते रेव निरूपणीयर्णायतया ऽवशिष्टत्वात् ; समानप्रकरण गीतासप्तमाध्याये भगवद्भक्तान्तरेभ्यो व्यावृत्तिप्रदर्शनानन्तरं देवतान्तरभक्तेभ्यो व्यावृत्ते रेवं निरूपणदर्शनात् , इहापि – ब्रह्माणं शितिकण्ठं चेत्यादिवाक्यशेषे परिमितफलकत्व पर्यवसन्न च्यवन धर्मकत्वापरिमित फलकत्वपर्यवसन्न मोक्षफलकत्वयो र्देवतान्तरसेवकत्व तदसेवकत्वविशिष्ट भगवदुपासकत्व निबन्धनताप्रतिपादनपूर्वकं प्रतिबुद्धानां निरुक्तच्यवनधर्मत्व हेतुदेवतान्तरसेवकत्वाभाव प्रतिपादनमुखेन देवतान्तरभक्तेभ्यो व्यावृत्ते रेव प्रतिपादनाच्च ॥ २८ ॥ किंच - " सर्वे च्यवनधर्माणः प्रतिबुद्धस्तु मोक्षभागि" ति वचनव्यक्ति पर्यालोचने – प्रतिबुद्ध एव मोक्षं प्राप्तु मर्हति – प्रतिबुद्धेतरे सर्वे च्यवनधर्माण एवेत्यर्थप्रतीत्या ऽत्रत्यसर्वशब्दस्य प्रतिबुद्धेतर परताया एव स्वारसिकत्वात् , ब्रह्माणं शितिकण्ठं चेत्यादिश्लोकेन प्रतिबुद्धशब्दस्या नन्यदेवता याजिविषयत्वेन व्याख्यातत्वाच्च, प्रतिबुद्धेतरपरतया ऽवगम्यमानो ऽयं सर्वशब्दो देवतान्तरभक्तपर एव ; नतु प्रस्तुतज्ञानीतर भगवद्भक्ताधिकारि त्रयपरः, तथा सति – ब्रह्माणं शितिकण्ठं चेत्यादिश्लोके देवतान्तरासेवकत्वेन प्रतिबुद्धाना मितरव्यावृत्तिप्रतिपादनासांगत्यात् ॥ २९ ॥ आर्तादय श्चत्वारोपि भगवदनन्यभक्ता इतिहि प्रागेव निरूपितम् ॥ ३० ॥ मोक्षधर्मवचनस्थैकान्तिप्रतिबुद्धशब्दौ नैकधर्मावच्छिन्नविषयौ –प्रथमस्य प्रयोजनान्तरानवलम्बि भगवदेकप्राप्यकाधिकारिपरतया - अह मेव गति रित्यादिना - द्वितीयस्या नन्यदेवतायाजिपरतया – ब्रह्माणं शितिकण्ठं चेत्यादिना च पृथ क्पृथग्व्याख्याना देकविषयत्वे पृथ क्पृथग्व्याख्याना नावश्यकत्वाच्च ॥ ३१ ॥ इत्थं च • च्यवनं प्रच्युतिः स्वप्राप्यफल

भोगविनाशेन पुनरावृत्तिः, धर्मः – अवर्जनीयतया प्राप्तं विशेषणं – येषां ते च्यवनधर्माण इति व्युत्पत्त्या च्यवनधर्माण इत्यस्यावर्जनीयपुनरावृत्तय इत्यर्थकतया - ' सर्वे च्यवनधर्माणः प्रतिबुद्धस्तु मोक्षभागि ' त्यनेन भगवद्भक्त एव मोक्षभा ग्भवति - तदितरे सर्वे देवतान्तरभक्ता अवर्जनीयच्यवना एव भवन्तीत्युक्तं भवति, देवतान्तरभक्त भगवद्भक्तानां परस्परव्यावृत्त्यभिधानस्थलेषु सर्वत्र पुनरावृत्त्यपुनरावृत्तिरूपवैलक्षण्यस्यैवा भिधीयमानतया ऽत्रापि तस्यैव प्रतिपिपादयिषितत्वात् ॥ २२ ॥ यथोक्तं गीतायां सप्तमाध्याये – " कामै स्तै स्तै र्हृतज्ञानाः प्रपद्यन्ते ऽन्यदेवताः । तं तं नियममास्थाय प्रकृत्या नियता स्स्वया ॥ यो यो यां यां तनुं भक्तश्श्रद्धया ऽर्चितु मिच्छति । तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम् ॥ स तया श्रद्धया युक्त स्तस्याराधन मीहते । लभते च ततः कामा न्मयैव विहितान् हितान् ॥ अन्तवत्तु फलं तेषां तद्भवेदल्पमेधसाम् । देवान् देवयजो यान्ति मद्भक्ता यान्ति मामपि ॥ " इति विंशादिचतुश्श्लोक्या ॥ २३ ॥ एवं नवमाध्याये प्युक्तं–" त्रैविद्या मां सोमपाः पूतपापा यज्ञै रिष्ट्वा स्वर्गतिं प्रार्थयन्ते । ते पुण्य मासाद्य सुरेन्द्रलोक मश्नन्ति दिव्यान् दिवि देवभोगान् । ते तं भुक्त्वा स्वर्गलोकं विशालं क्षीणे पुण्ये मर्त्यलोकं विशन्ति । एवं त्रयीधर्म मनुप्रपन्ना गतागतं कामकामा लभन्ते ॥ अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते । तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम् ॥ येत्वन्यदेवता भक्ता यजन्ते श्रद्धयान्विताः । तेपि मामेव कौन्तेय यजन्त्यविधिपूर्वकम् । अहं हि सर्वयज्ञानां भोक्ता च प्रभु रेव च । नतु मा मभिजानन्ति तत्त्वेनात श्च्यवन्ति ते ॥ यान्ति देवव्रता देवान् पितॄन् यान्ति पितृव्रताः । भूतानि यान्ति भूतेज्या यान्ति मद्याजिनोपि मा " मिति विंशादिश्लोकषट्केन ॥ २४ ॥ अत्र – त्रैविद्यामा मिति श्लोके मामित्युक्ति

रिन्द्रादिशरीरकभगवत्परा, यष्टृभि र्भगवत्पर्यन्तता मिन्द्रादिशब्दाना मवगम्या यजनेपि स्वशरीरभूतेन्द्रादियजनस्य वस्तुत स्स्वयजने पर्यवसन्नता मनुसन्दधतो भगवतस्स्वाभिप्रायमात्र मूलेत्यवधेयम् ; येत्वन्यदेवताभक्ता इति श्लोके भगवतैवास्यार्थस्य स्पष्टीकृतत्वात ॥३५॥ अत्रच सप्तमाध्याये विंशादि श्लोकत्रयेण देवतान्तरोपासकानां तत्तत्फलभाक्त्व मभिधाय, त्रयोविंशश्लोक पूर्वार्धेन तादृशफलस्यान्तवत्त्व मभिधाय, ततः कथं देवतान्तरभक्ताना मन्तवत्फलत्व मित्याशंका परिहारायोक्तं –" देवान् देवयजोयान्तिमद्भक्तायान्ति मामपी" ति ॥३६॥ एवं कथनेच नश्वरभोगदेवतान्तरप्राप्तिः पुनरावृत्तिफला – तद्विपरीतलक्षण भगवत्प्राप्तिस्त्व पुनरावृत्ति फलेति सिद्ध्यति ॥३७॥ तदिदं स्पष्टमुक्त मष्टमाध्याय षोडशश्लोके –" आब्रह्म भुवनाल्लोकाः पुनरावर्तिनोर्जुन । मामुपेत्यतुकौन्तेय पुनर्जन्म नविद्यत " इति ॥ ३८ ॥ नवमाध्यायेपि विंशैक विंशश्लोकाभ्यां देवतान्तरयाजिनां फलभोग प्रकारं पुनः पुनरावृत्तिचाभिधाय द्वाविंशश्लोके भगवद्भक्तानां – योगक्षेमं वहाम्यहमित्य पुनरावृत्तिरभिहिता ॥३९॥ अत्रश्लोके –"अहम्म त्प्राप्तिरूपं योगमपुनरावृत्तिरूपं क्षेमंचवहामी"ति व्याकुर्वताभाष्यकृता क्षेमशब्दो ह्य पुनरावृत्तिपरो भाषितः ॥४०॥ तदुपरि त्रयोविंश चतुर्विंशश्लोकाभ्यां सर्वान्तरात्मभूत भगवत्तत्त्व याथात्म्यज्ञान पूर्वकमुपासनस्याकरणं करणंच पुनरावृत्ताव पुनरावृत्तौच हेतुरित्यभिधाय, ततः पूर्ववदेव देवाद्युपासकानां देवादिप्राप्ति प्रतिपादनमुखेन पुनरावृत्ति मत्त्वं भगवद्याजिनां भगवत्प्राप्ति प्रतिपादनमुखेना पुनरावृत्तिमत्त्वंचोपपादितं ॥४१॥ अयं भावः – उपासके यथावदुपासितादि देवता स्व समान भोगत्वलक्षणं सायुज्यं दद्यात – नाधिकम सामर्थ्यात , इत्थंच देवता पितृभूतादीनां परिच्छिन्न कालवर्ति परिमितभोगतया तत्सायुज्यलक्षणा तत्प्राप्तिः पुनरावृत्तिरूपैव विश्राम्यति , भगवतस्तु त द्विपरीतलक्षणतया तत्प्राप्तिर पुनरावृत्ति लक्षणैव विश्राम्यतीति ॥४२॥

तदिदमुक्तं सप्तमाध्याय त्रयोविंशश्लोकभाष्ये –" इन्द्रादयोहि परिच्छिन्न भोगाः परिमितकालवर्तिनश्च – तत्सायुज्यं प्राप्तास्तैस्सहप्रच्यवन्ते – मद्भक्ता अपितेषामेव कर्मणा म्मदाराधनरूपतां ज्ञात्वा परिच्छिन्न फल संगन्त्यक्त्वा मत्प्रीणनैक प्रयोजना मां प्राप्नुवन्ति - नच पुनर्निवर्तन्ते 'मा मुपेत्यतु कौन्तेय पुनर्जन्म नविद्यत' इति हिवक्ष्यत " इति ॥४३॥ नवमाध्याय पश्चविंशश्लोक भाष्येप्युक्तं- "देवादिव्रता देवादीन् प्राप्य तै स्सहपरिमितं भोगं भुक्त्वातेषां विनाशकाले तै स्सहविनष्टा भवन्ति - मद्याजिनस्तु मा मनादिनिधनं सर्वज्ञं सत्यसंकल्प मनवधि कातिशया संख्येय कल्याणगुणगण महोदधि मनवधिकातिशयानन्दं प्राप्य नपुनर्निवर्तन्त इत्यर्थं" इति ॥४४॥ इत्थं गीताशास्त्रे भगवद्भक्ते ष्वेव कस्यचिदधिकारिण इतरेभ्यः प्राप्यान्तरपरेभ्यो भगवदेक प्राप्यत्व रूपवैषम्याभिधानानन्तरं देवतान्तरभक्त भगवद्भक्तानां वैलक्षण्याभिधानस्थले पुनरावृत्तिमत्त्वा पुनरावृत्तिमत्त्व रूपवैषम्यस्या सकृदभिधान दर्शना त्तत्समानप्रकरणे ऽस्मिन् मोक्षधर्मवचनेपि तद्व देवप्राप्यान्तरपरत्व भगवदेकप्राप्यत्व लक्षण भगवद्भक्तावान्तर वैषम्या भिधानानन्तरं केषांचि त्पुनरावृत्तिमत्त्वा पुनरावृत्तिमत्त्व रूपवैषम्य वर्णनं देवतान्तरभक्त भगवद्भक्तविषयं स्वरसत स्सुवचमिति नात्र- सर्वे च्यवनधर्माण इत्यस्य पुनरावृत्तिम दर्थकत्वेपि कैवल्यार्थिनः पुनरावृत्ति प्रतिपादनपरत्व निर्बन्ध उपलभ्यते ॥४५॥ ननु –"सर्वे च्यवनधर्माणः प्रतिबुद्धस्तु मोक्षभागि"त्यत्र प्रतिबुद्धशब्दोऽ नन्यदेवता याजि भगवद्भक्तमात्रपरोवा ज्ञानिमात्रपरोवा ? आद्ये- पुनरावृत्तिमत्त्वेना वश्य संग्राह्य स्यैश्वर्यार्थिनः - सर्वे च्यवनधर्माण इत्यत्र प्रतिबुद्धेतर कृत्स्न विषयेण सर्वशब्देना संग्रहप्रसंगः, प्रतिबुद्धशब्देन गृहीतस्य तस्यमोक्षभाक्त्व कथनविरोधश्च स्यातां । द्वितीये- ज्ञानीतर कृत्स्न विषयेण सर्वशब्देन कैवल्यार्थिनोपि ग्रहणसम्भवेन तस्यपुनरावृत्ति प्रतिपादन मनायस्या सिद्धं भवेतीतिचेन्न; - ऐश्वर्यार्थिनः पुनरावृत्ते

र्वणनीयत्वे तद्वर्णनस्य समानप्रकरण गीताशास्त्रा थैककण्ठ्यानुरोधेन भगवद्भक्तावान्तर वैलक्षण्यनिरूपणावसरएव प्रसक्ततया देवता-न्तरभक्त भगवद्भक्त वैलक्षण्याभिधान प्रकरणेतस्या प्रसक्तत्वात् । प्रमाणान्तरैः प्रकरणान्तरे भगवद्भक्तावान्तर वैलक्षण्यस्य विस्तृ श विशदनिरूपणावसरएव तत्सिध्या संक्षेपतो निरूपणावसरे ऽत्र स्पष्ट तद्वर्णना सिद्धावपि क्षत्यभावात् । अपिचेह विवक्षितस्य च्यव नधर्मत्वस्या वर्जनीय च्यवनकत्वस्य स्वोपास्य देवताप्रसादापरिहार्य पुनरावृत्तिकत्वपर्यवसायिन ऐश्वर्यार्थि साधारण्यविरहेण निरुक्तरूपे णैश्वर्यार्थिसंग्रहस्यासम्भवेना विवक्षितत्वात्, प्रतिबुद्धस्तु मोक्षभागि त्येकवचननिर्देशेन प्रतिबुद्धेष्वपि कस्यचि देव मोक्षभाक्त्वसम्भवस्य प्रतिपिपादयिषितत्वेनै श्वर्यार्थिनो मोक्षभाक्त्वाभावे विरोधाभावाच्च प्रथमपक्षे बाधकाभावात् ॥ ४६ ॥ एतदुक्तम्भवति – चतुर्विधभ क्ताना मवान्तरवैचित्रीनिरूपण प्रकरणएव तदन्तःपातिन ऐश्वर्या-र्थिनः पुनरावृत्तिनिरूपणं प्रसक्तम् , नतु देवतान्तरभक्तानां भ-गवद्भक्तानां च वैलक्षण्य निरूपणप्रकरणे, अतः – सर्वेच्यवनध र्माणः प्रतिबुद्धस्तु मोक्षभागित्यत्र तत्प्रसंगएवनास्ति । ततःपूर्व- " चतुर्विधा ममजना"– इत्यारभ्य –"फलकामाहितेमता " इत्यन्तस्य भगवद्भक्तावान्तर वैलक्षण्य निरूपणप्रकरणत्वेपि तत्र तादृशवैलक्षण्य स्य संक्षेपतएव निरूपणदर्शनेन विशदनिरूपणं नास्ति । अतएव एकान्तिशब्दितानां ज्ञानिनां तदितरेषां च परं भगवदेकप्राप्यत्व तदि तरप्राप्यत्वाभ्यां वैलक्षण्यं प्रतिपादितं, नत्वैश्वर्यार्थि कैवल्यार्थिनां पर-स्परवैलक्षण्यं तत्प्राप्यस्वरूपंच । अतस्तत्सर्वं गीतादौ तद्विशदनि-रूपणप्रकरणएव बोध्यमिति नेह तद्विवक्षा । अपिच – उपासकानां च्यवनं स्वीयापेक्षा विशेषलक्षण स्वदोषमूलं स्वोपास्यदेवता साम र्थ्यवैकल्य लक्षणदेवता दोषमूलंचेति द्विप्रकारमस्ति । तत्र प्रथमं स्वोपास्यदेवताया मोक्षलक्षण नित्यफलप्रदान सामर्थ्ये सत्यपि भंगुर

क्षुद्रफलविषय स्वकामनाविशेषानुगुण तत्प्रसादलभ्यफल विनाशावश्य भावि पुनरावृत्तिरूपं । इदश्च स्वापेक्षाविशेष दोषमूलमेवेति तत्प्रहा णेन वर्जयितुं शक्यतया नावर्जनीयं च्यवनम् । द्वितीयन्तु - स्वोपा स्य देवतासाध्यपरिपूर्णोत्तम फलप्रार्थनेसत्यपि देवताया नित्यफलदान सामर्थ्यवैकल्येन तत्प्रसादलभ्या नित्यफलनाशावश्यभावि पुनरावृत्ति रूपं। इदंस्वोपास्य देवतासामर्थ्य वैकल्यदोषमूलं देवताप्रसादतोऽप्य परिहार्यमेवेत्य वर्जनीयमेव च्यवनं । "सर्वे च्यवनधर्माण"इत्यत्र धर्मपदं- च्यवनमेषां धर्मोऽवश्यभावि विशेषणमिति रीत्या च्यवनस्य निरुक्त रूप मवर्जनीयत्व मवगमय देव सफलं। अत्र धर्मपद विवक्षितं च्यवनस्या वश्यभाव्यवर्जनीय विशेषणत्व मेव- गीता नवमाध्याये - चतुर्विंश श्लोकावतरणिकाभाष्ये " तेच परिमित फलभागिन श्च्य वन स्वभावाश्च भवन्ती "ति, पंचविंश श्लोकावतारिका भाष्ये- "केचिद् त्यल्पभागिन श्च्यवनस्वभावाश्च भवन्ती"ति च भाषमाणा भाष्य कारा निर्दिशन्ति । स्वभावशब्दो ह्यवर्जनीय विशेषण पर्यायः, उपास्य देवतासामर्थ्य वैकल्यमूल मैश्वर्यार्थिलक्षण भगवद्भक्त व्यावृत्त मव र्जनीय च्यवनमेवच " सर्वे च्यवनधर्माण " इत्यत्र विवक्षितं, धर्मपद प्रयोगस्वारस्यात् । अन्यथा - प्रतिबुद्धस्य कथं च्यवनधर्मत्वं नास्ती त्यादिशंका परिहाराय प्रवृत्ते "ब्रह्माणं शितिकण्ठं चे"त्या द्युत्तरश्लोके- प्रतिबुद्धानां परिमितफलमात्र दानशक्त देवतोपासकत्वाभावा न्न च्यवनधर्मत्वमिति परिहार कथनस्यासांगत्यापत्तेः; स्वापेक्षा विशेष लक्षण दोषमूलदर्शित प्रथमप्रकार च्यवनस्य प्रतिबुद्धेष्वपि संभवेन तदभावस्य देवतान्तरसेवकत्वाभावेन साधनासम्भवाच्च । इत्थं च निरुक्तरूपस्य च्यवनधर्मत्वस्य सकलभगवद्भक्त व्यावृत्तस्यैवेह विवक्षितत्वेन नैश्वर्यार्थिलक्षण भगवद्भक्तसंग्राह्यता विवक्षितेति न तदसंग्रहो दोषः । एवं "सर्वे च्यवनधर्माण " इत्यत्र सर्वपद प्रयोगा त्प्रतिबुद्धेतरत्वावच्छेदेन निरुक्तरूप च्यवनधर्मत्वस्य-

"प्रतिबुद्धस्तु मोक्षभाक्" इत्यत्रैकवचनान्त प्रतिबुद्धशब्दप्रयोगस्वारस्या त्प्रतिबुद्धत्वसामानाधिकरण्येन मोक्षभाक्त्वस्य च प्रतिपादनस्यैवेहा भिमतत्वदर्शनेन नैश्वर्यार्थिलक्षण भगवद्भक्तस्य मोक्षभाक्त्वप्रति पादनप्रसंगमूळो विरोधः, तादृशभगवद्भक्तस्येह प्रतिबुद्धशब्देना विवक्षितत्वेन क्षतिविरहात् । प्रतिबुद्धत्वावच्छेदेनेह मोक्षभाक्त्वा विवक्षणं च - गीतासप्तमाध्याये "मनुष्याणां सहस्रेषु कश्चि द्यतति सिद्धये । यतता मपि सिद्धानां कश्चि न्मां वेत्ति तत्त्वत" इति तृतीयश्लोकेन "बहूनां जन्मना मन्ते ज्ञानवान् मां प्रपद्यते । वासु देव स्सर्व मिति स महात्मा सुदुर्लभ" इत्येकोनविंशश्लोकेन च्चो क्तरीत्या प्रतिबुद्धा अपि सर्वे न मोक्षभाजो भवन्ति - तेष्वपि तादृशो ऽधिकारी क्वचि त्कश्चि देक एव भवतीति तद्दुर्लभत्वा भिप्रायेणै श्वर्यार्थिनां तदभावाभिप्रायेण चेति नात्र कश्चि द्विरोध इति ॥ ४७ ॥ इत्थं च कैवल्यार्थि भगवत्प्राप्त्यर्थिनो रुभयो रपीह विवक्षितत्वसम्भवेन तयो र्द्वयो रेवा पुनरावृत्तिलक्षणमोक्ष भाक्त्वं प्रतिपादितं भवतीति स्वसमानप्रकरणगीताशास्त्र समाना र्थक मेवेदं मोक्षधर्मवचनम् ॥ ४८ ॥ यद्वा - प्रतिबुद्धशब्द इहा नित्यफलविरक्त मुमुक्षुभगवद्भक्तविषय स्सन्नैश्वर्यार्थिमात्र व्यावृत्त एव, अनित्यफलविषया न्मोक्षरूप नित्यफलदान समर्थासमर्थ परा परदेवता तत्त्वविषयाच्च व्यामोहात्प्रतिबुद्धत्वस्यैव. प्रतिबुद्धशब्द प्रवृ-त्तिनिमित्तत्वात्, "ब्रह्माणं शितिकण्ठं च"त्या द्युत्तरश्लोकेन तथैव विवरणाच्च ॥४९॥ इत्थंच – भगवद्भक्त देवतान्तरभक्त रूपाणां सर्वे-षामेवैश्वर्यार्थिनां "सर्वे च्यवनधर्माण" इत्यत्र प्रतिबुद्धेतर कृत्स्नविषयेण सर्वशब्देन संगृहीतानां पुनरावृत्तिमत्त्व मविशेषेणोक्तं भवतीति न भगवद्भक्त भूतैश्वर्यार्थिनां पुनरावृत्त्य कथन न्यूनता ॥ ५० ॥ नापि वा कैवल्यार्थिना मपुनरावृत्त्यकथनन्यूनता, अनित्यफल विरक्तमुमुक्षु भगवद्भक्तविषयेण प्रतिबुद्धशब्देन कैवल्यार्थिभगवत्प्राप्त्य

र्थिना मुभयेषा मपि संग्रहा न्मोक्ष भाक्छब्देनोभयेषा मपुनरावृत्ति लक्षणमोक्षप्रतिपादनसिद्धे श्च ॥ ५१ ॥ एवं च प्रतिबुद्धत्वावच्छेदेन मोक्षभाक्त्वस्य प्रतिपिपादयिषितत्वेपि न विरोधः ॥ ५२ ॥ न चैवं सति देवतान्तरासेवकत्वेन प्रतिबुद्धाना मैश्वर्यार्थिभ्यो ऽखिलेभ्यो व्यावृत्त्यभिधान मसंगतं, भगवद्भक्तभूतैश्वर्यार्थिभ्यो निरुक्त रूपेण व्यावृत्त्ययोगादिति वाच्यम् ; " ब्रह्माणं शितिकण्ठं च" त्यादि श्लोके " प्रतिबुद्धा नसेवन्त" इत्यस्य प्राप्यप्रापकसाधारणोपासन लक्षणाश्रयण सामान्यराहित्यार्थकतया भगवद्भक्तभूतैश्वर्यार्थिनां प्रापकतया भगवदुपासकत्वेपि प्राप्यभूतैश्वर्यस्य ब्रह्मादिपदप्राप्तिरूपत्वेन प्राप्यतया देवतान्तरोपासकत्वस्या वर्जनीयतया देवतान्तरानाश्रयित्व लक्षण तदसेवकत्वेन प्रतिबुद्धानां सकलैश्वर्यार्थि व्यावृत्त्यभिधानस्य संगतत्वात् ॥५३॥ इद मत्र बोध्यं – ऐश्वर्यार्थिषु भगवद्भक्तानां प्रापकतया भगवदाश्रयित्वस्य, देवतान्तरभक्तानां प्रापकतया देवतान्तराश्रयित्वस्य च व्यावृत्तस्य सत्त्वे प्यैश्वर्यस्य ब्रह्मादिपदप्राप्ति रूपतया प्राप्यतया देवतान्तराश्रयित्व मुभयेषां तुल्यम् । अत एव गीताष्टमाध्याये – ऐश्वर्यार्थिप्राप्य प्रकृतितत्त्वनिबन्धन पुरुषार्थ भूतभोगैश्वर्यस्य नश्वरत्वेन पुनरावृत्तिप्रतिपादनपरे " आब्रह्मभुवना ल्लोकाः पुनरावर्तिनो ऽर्जुने"त्यादि षोडशश्लोक मारभ्यैकोनविंशश्लोक पर्यन्तेन ग्रन्थेन ब्रह्मादिपदानां ब्रह्मादीनां चोत्पत्तिविनाशकाल व्यवस्थावर्णनं संगच्छते । ऐश्वर्यस्य ब्रह्मादिपद तदधिपति चतुर्मुखादिप्राप्तिरूपत्वाभावे तु तेषा मिह नश्वरत्ववर्णन मप्रस्तुत मसंगतं स्यात् । स्वस्यैव चतुर्मुखादिभावेन प्राप्ते रैश्वर्यरूपत्वेपि तथा विधावस्थाप्राप्यत्वाय तथाविधावस्थापन्न देवतान्तरस्य प्राप्यतयोपासन मावश्यक मेव । अन्यथाहि तथाविधावस्थाप्राप्ति रेव न सम्भवति, तत्क्रतुन्यायात् । अन्तत स्स्वस्यैव तथाविधावस्था

पन्नस्य प्राप्यतयोपासनेपि तथाविधावस्थापन्नस्य स्वस्यैव देवतान्तर रूपतया तथाविधस्वोपासनप्राप्ती देवतान्तरोपासनप्राप्तिरूपे एव भवतः । अत एव शारीरकशास्त्रेपि कार्याधिकरणे हिरण्यगर्भ लक्षणकार्यब्रह्मोपासकत्व मैश्वर्यार्थिनो बादरिपक्षोपन्यासमुखेन प्रति पाद्यते । नच भगवद्भक्तान्तःपातिना मैश्वर्यार्थिनां स्वासाधारण दिव्यमंगळविग्रहविशिष्टस्य भगवत एवोपासन मन्तिमस्मरणं च विहितं दृश्यते । यथोक्तं गीताष्टमाध्याये ऽष्टमादिश्लोकत्रये – "अभ्यासयोगयुक्तेन चेतसा नान्यगामिना । परमं पुरुषं दिव्यं याति पार्थानुचिन्तयन् ॥ कविं पुराण मनुशासितार मणोरणीयां समनुस्मरे द्यः । सर्वस्य धातार मचिन्त्यरूप मादित्यवर्णं तमसः परस्तात् ॥ प्रयाणकाले मनसा चलेन भक्त्या युक्तो योगबलेन चैव । भ्रुवो र्मध्ये प्राण मावेश्य सम्य क्सतं परं पुरुष मुपैति दिव्यम्" इत्येवं रूपे "आदित्यवर्णं तमसः परस्ता दि" त्यसा-धारणदिव्यमंगळविग्रहनिर्देशः कृतः । उक्तं हि तत्र भाष्ये "आदित्यवर्णं तमसः परस्तात् - अप्राकृतस्वासाधारण दिव्यरूप मिति । परमं पुरुषं दिव्य मिति " सतं परं पुरुष मुपैति दिव्यं " इति च भग वत एव निर्देशः कृतः, तत्कथ मेषां हिरण्यगर्भादिलक्षणदेवता न्तरोपासकत्व मुच्यत इति वाच्यं; सकलेतरदेवताजातभोग्यजात विलक्षणशब्दादिभोक्तृत्व दशाविशिष्ट चतुर्दशलोकगर्भाण्डाधिपति हिरण्यगर्भशरीरकस्य तदीयहृदयकमलनिविष्ट स्वासाधारणाप्राकृत दिव्यमंगळविग्रहसमेतस्य चतुर्मुखान्त स्सन्निपत्य तन्मुखेन दर्शित विलक्षणप्राकृतशब्दादीन् भुंजानस्य तत स्तादृशभोक्तृत्व दशा लक्षणविलक्षणैश्वर्य सम्पन्नस्य भगवत उपासनस्य तत्र विवक्षित तया तदसाधारणाप्राकृतदिव्यरूपनिर्देशे प्यैश्वर्यार्थिनां तत्र विशेषणी भूतदेवतान्तरोपासकताया अवर्जनीयत्वा दप्राकृतरूपविशिष्ट भगव द्रूपविशेष्यांशस्य प्रापकत्वमात्रेणो पास्यतायाः हिरण्यगर्भाकार

भूत विलक्षणशब्दादिभोक्तृत्व लक्षणविलक्षणैश्वर्यरूप विशेषणांश·
स्यैव प्राप्यतयोपास्यताया श्च विवक्षितत्वेन विरोधाभावा च्च।
तदिदं गीताभाष्ये भाष्यकारै रेव तत्र तत्र स्पष्ट मुपदर्शितम् ।
यथोक्त मष्टमाध्याय चतुर्थश्लोकभाष्ये " पुरुषश्चाधिदैवतं – अधि
दैवतशब्दनिर्दिष्टः पुरुषः, अधिदैवतं - दैवतोपरिवर्तमानः · इन्द्र
प्रजापतिप्रभृति कृत्स्नदैवतोपरिवर्तमान इन्द्रप्रजापतिप्रभृतीनां भोग्य
जाता द्विलक्षणशब्दादे र्भोक्ता पुरुषः, स्वाच भोक्तृत्वावस्था
ऐश्वर्यार्थिभिः प्राप्यतयाऽनुसन्धेये " ति । अत्राधिदैवतपुरुष इति निर्दिष्ट
श्चतुर्मुखशरीरक तदीयहृदयकमलनिविष्टा प्राकृतासाधारण रूपदर्शित
लक्षणपरमपुरुष एव, नतु परमपदनाथादिः, तस्य क्षरप्राकृतशब्दादि
भोक्तृत्वदशायाः प्रमाणसंप्रदाया सम्प्रतिपन्नत्वात् । इन्द्रप्रजापतिप्रभृती
त्यत्र प्रजापतिशब्दश्च चतुर्मुखादर्वाचीनप्रजापतिपरएव । अष्टमश्लोक
भाष्येपि " परमं पुरुषं दिव्यं मां वक्ष्यमाणप्रकारं चिन्तयन् मामेव
याति, आदिभरत मृगत्वप्राप्तिव दैश्वर्यविशिष्टतया मत्समानाकारो
भवती" त्यैश्वर्यदशायाः प्राप्यत्वमभिहितं । दशम श्लोकभाष्येपि "दिव्यं
पुरुषंयोनुस्मरेत – सतमेवोपैति – तत्समानैश्वर्योभवतीत्यर्थ" इत्यैश्वर्य
दशाया एव प्राप्यत्व मुक्तं । सा चैश्वर्यदशा चतुर्मुखाकारेणाण्डा
धिपत्य प्राप्तिलक्षणैव । अत एवोक्तं – श्रीभट्टनाथ दिव्यसूरि प्रबन्ध
प्रथम श्रीसूक्त पंचमगाधाभाष्ये कृष्णपादसूरिभिः " देवतानामैश्वर्यस्य
कृत्स्नस्योपरितनमण्डाधिपत्यं खल्वैश्वर्यस्यो परितनसीमा, ताभि र्ब्रह्मादि
भिरीश्वरस्याश्रयण प्रकारउच्यते'अण्डाधिपतयेनम' इति ह्ये तत्पदप्राप्तये
साधनमन्त्रः, तादृशाण्डैश्वर्यं विशिष्टतया खलु सर्वेश्वरस्यानुसन्धानं -
'व्याहरन्मा मनुस्मरन् ' इत्युक्तरीत्या –एतन्मन्त्रस्याभिधानं मन सैश्वर्यं
विशिष्टतयानुसन्धानं चैव ह्याश्रयणप्रकारस्थिति"रिति । अत्रदेवताना
मित्यादिना भाष्यकारोक्ता धिदैवतशब्दार्थं प्रत्यभिज्ञाप्य तादृशपद
विवक्षितैश्वर्यस्याण्डाधिपत्य रूपताया अभिधाना च्चतुर्मुखैश्वर्य रूपतै-
वाभिहिता भवति । भगवद्भक्त भूतैश्वर्यार्थि प्रकरणेषु प्रायशस्तेषां

हिरण्यगर्भैश्वर्यं प्रेप्सुतावर्णनन्दात्रर्थिनो स्संकोच प्रसंगाभावेन सीमा भूतैश्वर्य प्रेप्सुताया एव प्रायश स्सम्भवाभिप्रायकम् , न त्वितरैश्वर्यार्थित्वा सम्भवाभिप्रायकम् ; तथा सति श्रीभारत शान्तिपर्वण्येक चत्वारिंश दधिकत्रिशततमे श्रीनारायणीयोपाख्याने सप्तमेचाध्याये ब्रह्मादीनां सर्वेषामेव देवानां भगवन्तमुद्दिश्य परमन्तपोनुष्ठाय तत स्स्वस्वपद प्राप्तिलक्षणैश्वर्यं प्राप्तिप्रातिपादन विरोधापत्तेः । तथाच-प्रकृतिमण्डलान्तः पातिषु सत्यलोकादिपदेषु तत्तत्पदाधिपत्य प्राप्ति स्तत्तत्पदाधिपतिभिस्सह समानभोगतयान्यूनभोगतया वा सहाव-स्थानं चेत्ये तत्सर्वं भगवतस्तत्तद्देवतान्तराणांच सकाशा ल्लब्धं तत्तत्पदाधिपति देवतान्तरप्राप्तिलक्षणैश्वर्यं एवान्तर्भवतीत्यैश्वर्यार्थिनां सर्वेषां प्राप्यतया देवतान्तरोपासनं तत्प्राप्तिश्चावर्जनीये एव, अन्त तस्तत्तद्दशाविशिष्ट स्वात्मनएव देवतान्तररूपतया तथाविधस्वा-त्मानुसन्धनमात्रयो स्सत्वात ; तदेतत्सर्वमभिप्रेत्यैव भगवता गी-ताष्टमाध्याये - ऐश्वर्यार्थिनां प्राप्य विनाशाधीन पुनरावृत्त्युपपादनघट्ट- "आब्रह्म भुवना ल्लोकाः पुनरावर्तिनोऽर्जुने" त्याद्यभिधानाच्चेति ॥५४॥ तथा चैश्वर्यार्थिनां पुनरावृत्ति कैवल्यार्थि भगवत्प्राप्त्यर्थिनोश्चा पुनरावृत्तिं प्रतिपादयदिदं मोक्षधर्मवचन प्रकरणं गीताशास्त्रसमानक-ण्ठमेवेति नकिञ्चिदिह विरोध उपलभ्यते ॥ ५५ ॥ अथवा - प्र-तिबुद्धशब्दो देशतः कालतो वस्तुतोवा परिच्छिन्नफलविषयाद्व्यामो हादुत्तीर्ण विषयस्सन् " तेषामेकान्तिन श्रेष्ठा" इत्यत्र स्थितैकान्तिश ब्देनसमानविषयएव, "सर्वेच्यवनधर्मास्त" इति पाठे पूर्वनिर्दिष्ट चतु-र्विधाधिकारिघटक ज्ञानीतर त्रिविधाधिकारि परामर्शितच्छब्दस्वा-रस्याद्बहुवचनविरोधेन द्विविधाधिकारिमात्र परामर्शे स्वारस्या स-म्भवात ; "ब्रह्माणं शितिकण्ठं च" त्याद्युत्तरश्लोके परिमितं फल-मित्यस्य कालपरिच्छिन्नमात्रविषयत्व लक्षणसंकोचास्वारस्यात ; त्रिविधपरिच्छिन्नविषयत्वे प्रतिबुद्धासःधारणधर्मतया तच्छ्लोकवैय-

क्षितस्य परिमितफलविरक्तत्वस्य कैवल्यार्थिव्यावर्तकतालाभस्वारस्याच्च ॥ ५६ ॥ गीतार्थसंग्र हैकादशश्लोके – " भक्तभेदः प्रबुद्धस्य श्रैष्ठ्यं सप्तमउच्यत " इति प्रतिपादयद्भि र्भगव द्यामुनमुनिभिरपि गीतासप्तमाध्याये ज्ञानिशब्देन निर्दिष्टस्याधिकारिणः प्रतिबुद्धशब्द पर्यायप्रबुद्धशब्देन निर्देशाद्दर्शितमोक्षधर्म वचनप्रकरणस्थित प्रतिबुद्धशब्दोज्ञानिपरइति- ज्ञानिगतोत्कर्षस्य श्रैष्ठ्यमितिशब्देन निर्देशात, "तेषामेकान्तिनश्श्रेष्ठा"इति · "प्रतिबुद्धस्तु श्रेष्ठभागि" तिच दर्शितमोक्ष धर्मवचनप्रकरणोक्तं श्रेष्ठभात्त्वलक्षणं श्रैष्ठ्यमेव " उदारा स्सर्वएवैते ज्ञानीत्वात्मैव मे मत " मित्यत्र गीतासप्तमाध्याये विवक्षितमिति च दर्शितमोक्षधर्मवचन गीताशास्त्रप्रकरणयोरेकविषयत्वं सम्यक्प्रत्यभिज्ञापितम् ॥ ५७ ॥ इत्थमेकान्ति प्रतिबुद्धशब्दयोरेकविषयत्वे सति च प्रागनन्यदेवता इत्युक्तस्यैकान्तिविशेषणस्यैव "ब्रह्माणंशितिकण्ठंचे" त्यादिनाविवरणं स्वारसिकम्भवति ॥ ५८ ॥ इत्थंच- "तेषां ज्ञानीनित्ययुक्त एकभक्तिर्विशिष्यते । प्रियोहिज्ञानिनोऽत्यर्थ महं सच ममप्रियः । उदारास्सर्वएवैते ज्ञानीत्वात्मैव मे मतम् । आस्थितस्सहियुक्तात्मा मामेवा नुत्तमांगतिम् ॥ " इति गीतासप्तमाध्याय सप्तदशाष्टादशश्लोक विवक्षिततदितराधिकारित्रय वैलक्षण्यमेवेहाभिधित्सितम् ॥५९॥ तत्राहि ज्ञानिनोभगवदेकप्राप्यत्वमूलकं नित्ययुक्तत्व मेकभक्तित्वंचेति विशेषणद्वयमस्ति, प्राप्यान्तरपरस्य तन्नास्तीत्येतदेव वैलक्षण्यमभिमतम् ॥ ६० ॥ तदेवच दर्शित मोक्षधर्मप्रकरणे प्यभिधित्सितम् ॥ ६१ ॥ इदमत्रावधेयम् –नित्ययुक्तत्व मेवच श्रेष्ठभागिति मोक्षभागितिचपाठभेदेना भिधीयते। एकभक्तित्वमेवच "अनन्यदेवता" इत्यनेन " ब्रह्माणं शितिकण्ठं चे " त्यादिना चोच्यते । नित्ययुक्तत्व प्रतिकोटि भूतमेवच च्यवनधर्मत्वं । एकभक्तित्व प्रतिकोटि भूतमेवच ऽन्यदेवतत्व मितराधिकारित्रयस्य विवक्षितमिति ॥ ६२ ॥

इदं पुनरत्रावधेयं - विलक्षण भोगशक्ति युक्तचेतन विशेषत्व स्यैव देवतात्वरूपत्वात्, तस्य ब्रह्मादिभ्योपि विलक्षण भोग शक्ति युक्त प्रकृतिवियुक्त प्रत्यगात्मस्वरूपे कैमुतिकन्यायसिद्धत्वात्, तक्रतु न्यायेन प्राप्यस्या प्युपासनीयत्वा च्चैश्वर्यार्थिनां प्रकृति मिश्र चेतन विशेषात्मक ब्रह्मादि देवतान्तरेष्विव कैवल्यार्थिनां प्रकृति वियुक्त प्रत्यगात्मस्वरूप लक्षण देवतान्तरे प्राप्यतयोपासनस्य सत्त्वा त्प्राप्यतया देवतान्तरोपासकत्व लक्षण मन्यदेवतत्वं ज्ञानीतराधिकारि-त्रय साधारणम् । प्राप्यतया देवतान्तरानुपासकत्व लक्षण मनन्य देवतत्वं ज्ञानिनोऽसाधारणमेव । इत्थंच " तेषामेकान्तिनश्श्रेष्ठा ये-चैवा नन्यदेवता" इति "ब्रह्माणं शितिकण्ठंच याश्चान्यादेवतास्मृताः । प्रतिबुद्धानसेवन्ते यस्मात्परिमितं फल" मितिच देवतान्तरानुपासकत्वस्य ज्ञानीतराधिकारित्रय व्यावृत्त ज्ञानिधर्मतया प्रतिपादनं साधुसंगच्छते । "तेचैवा नन्यदेवता"इतिपाठोपि नास्मिन् कल्पे क्लेशेन समन्वेतव्यः । "याश्चान्यादेवतास्स्मृता" इत्यनेन यथोक्तरीत्या प्रकृतिवियुक्त प्रत्य-गात्मस्वरूपमपि संगृहीतं भवति । प्रकृतिवियुक्त प्रत्यगात्मप्राप्ति मूलानन्दस्यापि भगवत्प्राप्ति मूलानन्दादत्यल्पतया " यस्मात्परिमितं फल"मिति च साधुसंगच्छते । ज्ञापितंचेदं गीताष्टमाध्याय द्वाविंश श्लोकावतारिकाभाष्ये "ज्ञानिनः प्राप्यन्तु तस्मादत्यन्त विभक्त मित्या ह"इति भाषमाणै र्भाष्यकारैरपि ॥ " ऐकान्त्यं भगवत्येषां समान मधि-कारिणा"मिति गीतार्थसंग्रहाष्टाविंशश्लोके भगवद्यामुनमुनिवचनं"उदारा स्सर्वएवैत"इति गीतासप्तमाध्यायाष्टादशश्लोकभाष्ये"सर्व एवै ते मामेवो पासत इत्युदारा" इति भाष्यकारवचनं च प्रापकतया देवतान्तरानु-पासकत्व लक्षणानन्यदेवतत्व विषयमिति न विरोधः । व्यक्तमेवेदं त च्छ्लोक भाष्य एव" ये मत्तो यत्किंचिदपि गृह्णन्ति ते ममसर्वस्वदायिन" इत्यनेन ग्रन्थेन ॥ एवं च्यवन धर्मत्वमपि ज्ञानीतराधिकारित्रितय साधार णमेवेहविवक्षितं, सेव्यसेवकभावेन प्रसक्तसम्बन्धात्स्वतः परमप्राप्यभूता त्परस्मा द्ब्रह्मणोभगवतःप्राप्यान्तराश्रयणेन प्रच्युतेस्त्रयाणामविशिष्टत्वात् ।

च्यवनंहिनाम प्रसक्तसम्बन्धादुपरितनवस्तुनः केनचिद्धेतुना तादृशसंसर्गप्रहाणपूर्वका र्वाचीनवस्तुप्राप्तिः । स्वप्राप्य प्रापकतया से व्यसेवकभावेन भगवन्त मेवोपासीनेषु चतुर्विधे ष्वधिकारिषु ज्ञानिनो भगवदेकप्राप्यास्तमेव परमप्राप्यं प्रेप्सन्त उपासनदशायामिव फलदशायामप्य निवृत्तसेव्यसेवकभावलक्षण तत्संसर्गतया यावदात्मभाव्यनुवृत्त तादृशभगवत्संसर्गा नित्ययुक्ता उच्यन्ते । इतरे त्वधिकारिण ऐश्वर्यकैवल्यलक्षण प्राप्यान्तरपरतया स्वस्वप्राप्यप्राप्तये सेव्यसेवकभावेन भगवन्तमेवोपासीना स्वस्व प्राप्यप्राप्त्यनन्तरं नदीनिस्तरणानन्तरं प्लवपरित्यागव दुपासनदशास्थितसेव्यसेवकभावलक्षण भगवत्संसर्गप्रहाणेन भगवतः प्रच्यवनात्, "सर्वेच्यवनधर्माण" इत्यविशेषेण निन्द्यन्ते । इदमेवच केषांचिन्नश्वरप्राप्यान्तरभजनरूपं सत्प्राप्यविनाशेन पुनरावृत्तिरूपं भवति , केषांचित्स्थिरप्राप्यान्तर भजनरूपंस त्प्राप्यविनाशाभावेना पुनरावृत्तिरूपं भवतीति विशेषेपि परमप्राप्यभूता द्भगवतः प्रच्युतत्व मविशिष्टमेव ज्ञानीतरेषां सर्वेषां । इत्थश्च 'च्यवनधर्माण' इत्यस्य - च्यवनं यथोक्तलक्षणा भगवतः प्रच्युतिः, धर्मो येषां त इत्येवार्थसिद्ध्या नात्र कैवल्यार्थिना मैश्वर्यार्थितुल्य प्राप्यपुरुषार्थविनाशाधीन पुनरावृत्तिप्रतिपादनगन्धइति ॥ ६३ ॥

ज्ञानिनां नित्यतया ऽन्येषां तत्तत्प्राप्यसिद्धिपर्यंत मनुवृत्त्य पश्चान्निवर्तमानतयाच्च गीतासप्तमाध्याय सप्तदशश्लोकभाष्येऽभिहित उपासकानां भगवतासह योग स्सेव्यसेवकभावलक्षणएव नान्यादृशकेवलसंयोगादिरूपइति , अयं योगः प्रापकतया प्राप्यतयाचा भिमतत्वादेव ज्ञानिनां नित्यतयाऽनुवर्ततइति, " सर्वे च्यवनधर्मा स्ते प्रतिबुद्धस्तु श्रष्ठभा" गितिपाठएवच स्वारसिकइति, "सर्वे च्यवनधर्माणः प्रतिबुद्धस्तु मोक्षभागि" तिपाठेपि मोक्षशब्दस्य भगवत्प्राप्तिप्रतिबन्धक सर्वविनिर्मोक्षविषयस्य भगवत्प्राप्तिलक्षण परममोक्षएव मुख्यतमत्वेन तद्विषयतया "प्रतिबुद्धस्तु मोक्षभागि"त्यत्र प्रतिबुद्धस्य कैवल्यार्थिव्यावृ

स्ततयापि निर्देश उपपद्यतइति च प्रागेवोपपादितम् ॥ ९४ ॥ अर्थपंचकरहस्ये लोकाचार्यैरपि कैवल्य मचित्सम्बन्धनिवृत्तिमात्रेण मोक्ष इति केचि द्व्यपदिशन्तीति वदाद्भि स्तस्य मुख्यतममोक्षरूपत्वा भावएवख्यापितः ॥ ९५ ॥ दर्शितमोक्षधर्मवचनप्रकरण स्पष्टशार्थ कत्वमेव स्वप्रकरणसमानप्रकरणसकलपूर्वाचार्यश्रीसूक्त्यनुगुणं ॥ ९६ ॥ "आर्तो जिज्ञासु रर्थार्थी ज्ञानीचेति पृथक्पृथ"गित्याधिकारिचतुष्टयपाठमंगी कुर्वतां वादिकेसरि रम्यजामातृमुनि वरवरमुनिप्रभृतीनामपि चेद मेवा भिप्रेत मित्यवगम्यते ॥ ९७ ॥ "भक्त म्प्रति विशेष स्त एष पार्थानुकीर्तित" इतिवाक्यशेषस्यापि भक्तावान्तरविशेषकीर्तनपरत्वमेवस्व स्वारसिकं ॥ ९८ ॥ तथाच दर्शितमोक्षधर्मवचनप्रकरणस्य प्रा गुक्तेषु कल्पेषु केना प्येकेनकल्पेन शास्त्रान्तरोक्तकैवल्यार्थ्यं पुन रावृत्त्यविरोधेन पूर्वोक्तार्थपरतायाएव स्वरसतोलाभेन न कथंचि दपि कैवल्यार्थिना मैश्वर्यार्थितुल्य पुनरावृत्तिप्रमाणता सिद्ध्यतीति सर्वथापि नात्र विरोधगन्ध इति ॥ १०१ ॥

यः पुनः - "सर्वे च्यवनधर्माणः प्रतिबुद्धस्तु मोक्षभागि"तिवचनस्य- ज्ञान्येकएव मोक्षभाक्-तदन्येऽधिकारिण आर्तार्थार्थिजिज्ञासुरूपास्त्रयोपि स्वप्राप्यपुरुषार्थ विनाशेन कालविशेषे ऽ वर्जनीय पुनरावृत्तय इति पूर्वपक्ष्यभिमतो ऽ र्थः ॥ १०२ ॥

सतु न कथं चिदपि सम्भवति – समानप्रकरण गीताशास्त्रे महताग्रन्थे नैश्वर्यार्थिनां प्राप्यभूतैश्वर्यस्य ब्रह्मादिपद प्राप्तिरूपस्य कालविशेषे ऽ वश्य विनाशित्वेना वर्जनीय पुनरावृत्तिकतां प्रतिपाद्य ज्ञानिनां प्राप्यभूत भगवत्तत्त्वस्य विनाश प्रसंगाभावेन पुनरावृत्त्यभावं प्रतिपाद्य तथैव कैवल्यार्थिना मपि जिज्ञासु शब्दितानां प्राप्यभूत प्रकृतिवियुक्त प्रत्यगात्मतत्त्वस्या विनाशित्वेना पुनरावृत्तिं प्रतिपाद्य तत ऐश्वर्यार्थिनां पुनरावृत्ति हेतु धूमादिगतेः ज्ञानिनां जिज्ञासूनांचा पुन-

रावृत्ति रेव विंरादिगतेश्च स्फुटतरं प्रतिपादनेन तद्विरोधस्य दुष्प-रिहरत्वात् । एवं सर्वत्र श्रुतिस्मृति ष्वैश्वर्यार्थि लक्षणैकं विधाधिकारिणां पुनरावृत्ते स्तदन्य द्विविधाधिकारिणा मपुनरावृत्तेश्च प्रतिपादन दर्शनेने हैकविधाधिकारिमात्रस्या पुनरावृत्ति प्रतिपाद्य तदितरेषां सर्वेषामविशेषेणपुनरावृत्तिप्रतिपादनेसकलशास्त्रविरोध प्रसंगाच्च ॥१०३॥

गीताशास्त्रे ह्यष्टमाध्याये " आब्रह्म भुवनाल्लोकाः पुनरावर्तिनोर्जुने" त्यादि षोडशश्लोका द्येकोनविंशश्लोकान्तग्रन्थे नैश्वर्यार्थिनां प्राप्यभूत ब्रह्मादिपदैश्वर्यविनाशेना वर्जनीयं पुनरावृत्तिमत्त्वं प्रतिपादितं ॥१०४॥

"मामुपेत्य पुनर्जन्म दुःखालय मशाश्वतं । नाप्नुवन्ति महात्मान स्संसिद्धिं परमांगता" इति पंचदशश्लोकेन - " मामुपेत्यतु कौन्तेय पुन र्जन्म नविद्यत " इति षोडशश्लोकोत्तरार्धेनच परमकारणभूत भगवत्तत्त्वस्य कदाचिदपि विनाशप्रसंगाभावेन तदेकप्राप्यानां ज्ञानिनां प्राप्यविनाशप्रसंगाभावेना पुनरावृत्तिः प्रतिपादिता ॥ १०५ ॥

" परस्तस्मात्तुभावो ऽन्योऽव्यक्तोऽव्यक्ता त्सनातनः । यस्स सर्वेषु भूतेषु नश्यत्सु न विनश्यति ॥ अव्यक्तोक्षर इत्युक्त स्तमाहुःप रमांगतिम् । य म्प्राप्य ननिवर्तन्ते तद्धाम परमं मम ॥ " इति विंशैकविंशश्लोकाभ्यां जिज्ञासुशब्दितानां कैवल्यार्थिनामपि प्राप्यभूत प्रकृतिवियुक्तप्रत्यगात्म तत्त्वस्याविनाशित्वेना पुनरावृत्तिमत्त्वं प्रस्फुटं प्रतिपादितम् ॥ १०६ ॥

एवं पंचदशाध्यायेपि - " ततःपदं तत्परिमार्गितव्यं यस्मिन्गता ननिवर्तंति भूय " इति चतुर्थश्लोके - " गच्छन्त्यमूढाः पदमव्यय न्त " दिति पंचमश्लोके - " यद्गत्वाननिवर्तंते तद्धामपरमम्मम " ति षष्ठश्लोकेच प्रकृतिविनिर्मुक्त प्रत्यगात्मस्वरूपस्य नित्यत्वा प्रतिपादन पूर्वकं तत्प्राप्तिकामानां पुनरावृत्त्यभावएव प्रतिपादितः ॥ १०७ ॥

तस्मात " सर्वेच्यवनधर्माणः प्रतिबुद्धस्तु मोक्षभागित्यादि " वचन घटितमोक्षधर्मप्रकरणस्यैकान्ति प्रतिबुद्धशाब्दित ज्ञानिलक्षणैकविधाधिकारिमात्रस्या पुनरावृत्ते स्तादितराधिकारिणां त्रयाणां पुनरावृत्तेश्च प्रतिपादनपरता नकथंचिदपि सम्भवति, दर्शितान्यथा सिद्धिगन्धानर्हां तिस्फुटार्थक कैवल्यार्थ्य पुनरावृत्तिप्रतिपादकसमानप्रकरणगीतादि ग्रन्थविरोधात । इह तत्तत्फलार्थिनां तत्तत्प्राप्यस्य विनाशादेव पुन रावृतेः प्रतिपिपादयिषिततया प्रकृतिवियुक्त प्रत्यगात्मतत्त्व लक्षण प्राप्यस्याक्षरशब्दवाच्यस्य कदाचिदपि नाशप्रसंगाभावेन तदर्थिनां जिज्ञासूनां प्राप्यविनाशाधीन पुनरावृत्ते रसम्भावितत्वाच्च ॥ १०८ ॥

किञ्च – " सर्वे च्यवनधर्माण " इत्यस्य प्रतिबुद्धेतराधिकारि सामान्योद्देशेन पुनरावृत्ति प्रतिपादनपरत्वे पंचाग्निविदां श्रुत्यादि प्रतिपन्नस्या पुनरावृत्तिमत्त्वस्य भवतामपि सम्प्रतिपन्नतया तद्वचन विरोधो भवतामपि दुरुद्धर एवस्यात् ॥ १०९ ॥

एवं पंचाग्निविदामपि मोक्षभाक्त्वस्य भवतां सम्प्रतिपन्नतया प्रति बुद्धस्या विशेषेण मोक्षभाक्त्वेन सकलेतरव्यावृत्त्यभिधानमसंगतं ॥११०॥

नचात्र प्रतिबुद्धशब्दः पंचाग्निविदां परमपुरुषनिष्ठानांच साधारणइति नात्र कश्चिद्विरोधइति वाच्यं; – " तेषां ज्ञानी नित्ययुक्त एक भक्ति विंशिष्यत " इति, " आस्थित स्सहि युक्तात्मा मामेवा नुत्तमां गति " मितिच गीताशास्त्रेणै कभक्तित्वेन भगवदेकप्राप्यत्वेनच्चा भिहितस्य ज्ञानिनः परमपुरुष निष्ठताया एवावगमेन तद्विभक्ता त्प्रकृति वियुक्त प्रत्यगात्म लक्षण प्राप्यान्तरनिष्ठाच्च पंचाग्निविदो व्यावृत्तत्वा त्तत्स्थानीयस्य दर्शित मोक्षधर्मवचन प्रकरण एकान्तिप्रतिबुद्धशब्दा भिहितस्याधिकारिणोपि तेषा मेकान्तिनश्रेष्ठा स्तेचैवानन्यदेवता' इति 'अह मवगतिस्तेषां निराशीः कर्मकारिणा' मितिच तद्वदेवानन्यदेवतात्वलक्षणै-

कभक्तित्वेन भगवदेकप्राप्यत्वेनच प्रतिपन्नस्य पंचाग्निविद्यावृत्ततायाः दुरपह्नवतया प्रतिबुद्धशब्दस्योभयसाधारण्यासम्भवात् ॥ १११ ॥

भगवदेकप्राप्यत्वलक्षणं परमपुरुषनिष्ठत्वं पञ्चाग्निविद्यावृत्त मिति तु गीताष्टमाध्याये त्रयोविंशचतुर्विंशश्लोकावतारिकायां "अथा त्मयाथात्म्यविदः परमपुरुषनिष्ठस्य च साधारणी मार्चिरादिकां गति माहे"त्यभिदधता भाष्यकारेणैव सुव्यक्त मुक्तम् ॥ ११२ ॥

षड्विंशश्लोकभाष्ये "द्विविधानां ज्ञानिना" मिति निर्देश स्तु चतुर्विंशश्लोके -"तत्र प्रयाता गच्छन्ति ब्रह्मब्रह्मविदो जना" इत्येकोक्त्या जिज्ञासुज्ञानिरूप द्विविधाधिकारिणा मेकोक्त्या ऽर्चिरादिगति विधानार्थं ब्रह्मप्राप्तिप्रयोजकविद्यावत्त्वेन मूलोक्तजिज्ञासुज्ञानिरूपद्वि-विधाधिकारि क्रोडीकारानुवादमात्रं, अन्यथा पूर्वोक्तजिज्ञासुभिन्न ज्ञानिन एव पंचाग्निविदादिरूपेण द्विविधत्वपरत्वे तस्यैकभक्तित्व भगवदेकप्राप्यत्वाभिधानविरोधापत्तेः; पंचाग्निविदः प्रकृतिवियुक्त प्रत्यगात्मलक्षणप्राप्यान्तरनिष्ठत्व तन्मूलद्विभक्तत्वयो र्भवता मपि सम्प्रतिपन्नत्वात; जिज्ञासुभिन्नस्य ज्ञानिनो द्विविधत्वेन पूर्वं क्वाप्य नुक्तत्वेनेह तथा तदनुवादायोगात्; पंचाग्निविदो जिज्ञासुभिन्नत्वे तस्येहाप्रस्तुततया मूले भाष्ये च तस्य गत्यभिधानस्य प्रस्तुत जिज्ञासो र्गत्यकथनस्य चासम्बद्धत्वप्रसंगात् । गीताष्टमाध्यायपंचदश श्लोकावतारिकाभाष्येण "अतः पर मध्यायशेषेण ज्ञानिनः कैवल्या-र्थिन श्चापुनरावृत्ति मैश्वर्यार्थिनः पुनरावृत्तिं चाहे" त्येवंरूपेणाध्याय शेषस्य दर्शिताधिकारित्रयविषयताया एवोक्तत्वेन तदतिरिक्ताधि कारिविषयत्वासम्भवात, पूर्वप्रक्रान्तजिज्ञासुत्याज्योपादेयविषयाष्टमा ध्यायतृतीयश्लोके - अक्षरं ब्रह्मपरम मित्यादिके पञ्चाग्निविद्याया एव जिज्ञासूपादेयविद्यात्वेन प्रतिपाद्यमानताया स्तद्भाष्ये व्यक्तत्वेन पञ्चा ग्निविद एव जिज्ञासुरूपताया स्स्पष्टत्वात; गीताष्टमाध्यायत्रयोविंश चतुर्विंशश्लोकव्याख्यानावसरे गीतार्थसंग्रहाख्यव्याख्यायां -"ज्ञानिनां

जिज्ञासूनां चापुनरावृत्तिमार्ग " मिति पङ्क्त्या, " ज्ञानिनः परं ब्रह्म गच्छन्ति – जिज्ञासवो विविक्तात्मस्वरूपं ब्रह्म गच्छन्तीति विवेक " इति पङ्क्त्याच तत्रत्यार्चिरादिगत्यभिधानस्य ज्ञानिजिज्ञासुविषयत-यैव श्रीयामुनाचार्यपादै र्व्याख्यातत्वेन तद्विरोधप्रसंगाच्च ॥ ११३ ॥

तस्मा त्प्रस्तुतो जिज्ञासुरेव पंचाग्निवित् – सच न प्रतिबुद्ध शब्देनेह विवक्षितः – अपितु सर्वशब्देनेत्येवोपगन्तव्यम् ॥ ११४ ॥

तथाच च्यवनधर्मत्वस्य पुनरावृत्तिरूपत्वे श्रुत्यादिभि रपुन रावृत्तिमत्त्वेन प्रतिपन्नस्य पंचाग्निविदः पुनरावृत्तिमत्त्वप्रतिपादन विरोधो दुष्परिहर एव ॥ ११५ ॥

यदपि मन्यन्ते पूर्वपक्षिणः – पंचाग्निविद्यानिष्ठस्य प्रकृतिमण्डळे क्वचि दात्मानुभवः पूर्वं भवति – तस्मा दपगतस्य तस्य पश्चादेव ब्रह्मप्राप्तिः – आत्मानुभवा दपगमाभिप्रायकतया च्यवनधर्मत्वाभिधान मुपपद्यत इति ॥ ११६ ॥

उक्तं हि तै र्गीताष्टमाध्याय त्रयोविंशादिश्लोकभाष्य तात्पर्यचन्द्रि कायाम् –" पंचाग्निविदोपि ब्रह्मप्राप्ति रस्त्येवेति स्वीकर्तव्यम् – तत्र प्राप्तौ ज्ञानिनां परमात्मा स्वविशिष्टो भोग्यः – अक्षरयाथात्म्य निष्ठानां स्वस्वरूप मेव पूर्वं भोग्यं – वस्वादिपदप्राप्तिपूर्वकब्रह्मप्राप्ति साधनमधुविद्यान्याया दन्ततो ब्रह्मप्राप्ति" रिति, " आत्ममात्रानुभव सुखस्या स्थिरत्वादेव च्यवनधर्मत्व मुच्यते - न तावता पुन स्संसारप्रसंग " इति च ॥ ११७ ॥

त देत दत्यन्त मुपहास्यं, ईदृशकथाकल्पनायाः प्रमाणेषु पूर्वाचार्यश्रीसूक्तिषु वा क्वाप्याकरक्लेशादर्शना दतिप्रसंगभयेनाती न्द्रियार्थे स्वैरं कल्पनायोगाच्च स्वोत्प्रेक्षामात्रविजृम्भिताया अस्याः प्रमाणशरणै रंगीकारायोगा दीदृशकल्पनाया स्सर्वथैवानुपपन्नताया वक्ष्यमाणत्वात् । तादृशच्यवनधर्मत्वस्य मोक्षभाक्त्व एव पर्यवस

ष्ठतया प्रत्युत श्लाघाहेतुभूतस्य निन्दाहेतुत्वासम्भवात । "सर्वे च्यवनधर्माण" इति प्रतिबुद्धेतरेषां सर्वेषां च्यवनधर्मत्वेन निन्दाया एवेह विवक्षितत्वात् । पंचाग्निविदा मपि मुख्यमोक्षस्याभ्युपगमेन - 'प्रतिबुद्धस्त्वि' ति तु शब्देन मोक्षभाक्त्वेन प्रतिबुद्धस्य स्वेतरसकल व्यावृत्तत्वाभिधानासंगते दुर्वारत्वाच्च ॥ ११८ ॥

किञ्च - पंचाग्निविदो ज्ञान्यविशिष्ट भवदभिमतपरिपूर्णब्रह्म प्राप्तिदशायामपि कैवल्यपुरुषार्थभूत प्रकृतिवियुक्तप्रत्यगात्मानुभव लोपाभावेन निवृत्तिलक्षणं भवदभिमतं च्यवनधर्मत्व मपि तस्य न सम्भवदुक्तिकम् ॥ ११९ ॥

नन्वात्ममात्रानुभवस्यैव कैवल्यार्थिपुरुषार्थतया परिपूर्णब्रह्मप्राप्ति दशायां तन्निवृत्ति र्निराबाधैव - ब्रह्मप्राप्तयभावविशिष्ट प्रत्यगात्म प्राप्ते रेवा त्ममात्रानुभवरूपतया तदानीं विशेषणाभावादेव विशिष्टाभावसिद्धे रिति चेत् ? विशेषणप्रक्षेपेण विशिष्टाभावं साधयन्तो भवन्त स्तार्किकशिक्षा इति तु इदं विश्वसिमः ॥ १२० ॥

परन्तु अधिकन्तु प्रविष्टं नतु तद्धानिकरमितिन्यायेन ब्रह्मप्राप्ते रधिकाया स्तदानीं सम्भवेपि स्वपुरुषार्थभूत प्रकृतिवियुक्तात्म प्राप्ते र्विच्छेदाभावेन ब्रह्मप्राप्ति विशिष्टाया आत्मप्राप्ते रधिकाभ्युदय रूपायाः प्रत्युत श्लाघाहेतुत्वेन निन्दाहेतुत्वोत्कीर्तनमेवा संगत मिति विचार्यताम् ॥ १२१ ॥

प्रतियोगिनि सत्येव पूर्वक्षण वृत्तित्व वैशिष्ट्य व्यासज्यवृत्ति धर्मावच्छिन्नस्य तस्या भावसम्पादनव दात्मप्राप्तौ सत्यामेव किञ्चि द्विशेषण विशिष्टायास्तस्या अभावसम्पादनस्या किंचित्करत्वेन निन्दा हेतुत्वं हि दुर्वचं, अन्यथा ज्ञानिनामपीहश यत्किंचि द्विशेषण विशिष्ट तत्पुरुषार्थाभावस्य सुवचतया तेष्वपि च्यवनधर्मत्वेन निन्दाप्रसंगस्य दुर्वारत्वात् ॥ १२२ ॥

किंच यद्विरहेणाधिकार्यन्तराणां निन्द्यत्वं शास्त्राभिप्रेतं – तस्य सद्भावं निन्दाहेतुतया शास्त्रं प्रतिपादयतीति नहि कश्चिदनुन्मत्तो ब्रूयात् ॥ १२३ ॥

ब्रह्मप्राप्ति विरहेणैव हि ज्ञानीतरां श्च्यवनधर्मत्वेन निन्दति शास्त्रम् ॥ १२४ ॥

कैवल्यार्थिनां प्रकृतिवियुक्तात्म प्राप्ते रपेक्षितत्व दर्शनेपि ब्रह्म प्राप्त्यभावेनापि भवितव्य मितीदृशापेक्षानिर्बन्धो न क्वचि दुपलभ्यते· येनेदृश कल्पनापि कथंचित्सम्भवदुक्तिका स्यात् ॥ १२५ ॥

"जरामरण मोक्षाय मामाश्रित्ययतन्तिये" इति गीतायां सप्तमाध्यायैकोनत्रिंशश्लोके – 'जरामरणमोक्षाये' त्येतावन्मात्र निर्देशात् – तद्भाष्ये प्रकृतिवियुक्तात्म स्वरूपदर्शनायेत्येव व्याख्यानात् – "यः प्रयातित्यजन्देहंसयाति परमांगति" मित्यष्टमाध्याय त्रयोदशश्लोकभाष्ये· सयाति परमांगतिं – प्रकृतिवियुक्त म्मत्समानाकार मपुनरावृत्ति मात्मानं प्राप्नोती त्यर्थइति -व्याख्यानात्, 'ते प्राप्नुवन्ति मा मेवे' ति द्वादशाध्याय चतुर्थश्लोकभाष्ये – तेपि मां प्राप्नुवन्त्येव- मत्समानाकार मसंसारिण मात्मानं प्राप्नुवन्त्येवेत्येवकार मयोगव्यवच्छेदपरं व्याख्याय ब्रह्मप्राप्ति व्यवच्छेदाभाव ज्ञापनात्, प्रत्युत पंचाग्निविदां ब्रह्मप्राप्ते-रपि सद्भावस्य भाष्यादिषु सर्वत्रैव भाष्यकारै रुक्तत्वात्, कार्याधिकरण वेदान्तदीपे–"पंचाग्निविदो हि प्रकृति विविक्त ब्रह्मात्मकात्म स्वरूपविदः – तेच तत्प्राप्य पुनर्न निवर्तन्त" इति पङ्क्त्या तेषां प्रकृति विविक्त ब्रह्मात्मकत्व विशिष्टात्मस्वरूप प्राप्तेरभिधानेन – वेदार्थसंग्रहे परमशब्दवाच्यतायाः स्थानविशेष प्रकृतिवियुक्तात्म स्वरूप भगवत्स्वरूपेषु त्रिष्वपि सद्भाव निरूपणप्रकरणे – भगवत्स्वरूपं परम प्राप्यत्वादेव परमम्पदं – इतरयोरपि भगवत्प्राप्ति गर्भत्वादेव परम पदत्वं – सर्वकर्म विनिर्मुक्तात्म स्वरूपावाप्ति भगवत्प्राप्ति गर्भेति

पङ्क्त्या प्रकृतिवियुक्तात्मस्वरूप प्राप्ते ब्रह्मप्राप्ति गर्भत्वाभिधानेनच तेषां जायमानायाः प्रकृतिवियुक्तात्मस्वरूप प्राप्ते ब्रह्मप्राप्ति वैशिष्ट्यस्य तदानीमेव नियतत्वावगमाच्च, पञ्चाग्निविदां ब्रह्मप्राप्त्यभाव विशिष्टात्म स्वरूपावाप्तेः कदा चिदपि सम्भवा दर्शनेन - तेषां पूर्वं प्रकृतिमण्डले क्वचि च्चिरकालमात्म मात्रानुभवः – पश्चादेव ब्रह्मप्राप्तिरिति पूर्वपक्षिणां कथाकल्पनं प्रमाणा परामर्शमूल मत्यन्तहेय मेवेत्यवधेयं ॥ १२६ ॥

प्रकृतिमण्डल एव क्वचि दात्मानुभवस्थाना भ्युपगमाद्देश विशेषा वच्छिन्नत्व विशिष्टात्मानुभव लक्षण स्वप्राप्यपुरुषार्थाभाव रूपं च्यवनधर्मत्वं पञ्चाग्निविदो ब्रह्मप्राप्तिदशायां सम्भवतीतिचे त्सर्वलोक कामचारिणो मुक्तस्यापि देशविशेषावच्छिन्नत्व विशिष्ट ब्रह्मानुभव लक्षण स्वप्राप्यपुरुषार्थाभाववत्त्व लक्षण च्यवनधर्मत्व मस्त्येवेति तादृश च्यवनधर्मत्वस्य प्रतिबुद्धेतर निन्दाहेतुत्वेनाभिधानं न संगच्छते ॥१२७॥

अपिच - च्यवनशब्दस्य क्वचि न्निवृत्तिमात्र औपचारिक प्रयोगसत्त्वेपि-"तत्त्वेनात श्च्यवन्तित" इत्यादिषु सर्वत्रोपरितना द्वस्तुनो ऽर्वाचीनप्राप्तेरेव च्यवनशब्द मुख्यार्थतयाऽ र्वाचीनवस्तुन उपरितन वस्तु प्राप्तिरूपः पंचाग्निविदो भवदभिमत आत्मानुभवा दपगम स्स्वरसत श्च्यवनशब्दार्थएव न भवितुमर्हति ॥ १२८ ॥

यदपि – सर्वे च्यवनधर्माण इत्यत्र – परिमित सुखानुभव विलम्बेन तदानीं निरतिशय सुखाद्भ्रष्टत्वेनापि निन्दोपपत्ति स्स म्भवतीति उपासनदशानुभूते परमात्मनि फलदशायां किंचित्काल मनुभव विच्छेदाद्वा प्राप्त भ्रंशलक्षणं च्यवनधर्मत्वमिति च कथंचि न्निन्दासमर्थनं ॥ १२९ ॥

तदपि हेयं, तथासति तत्र परब्रह्मानुभव लक्षण निरतिशय सुखानुभवांऽश रूपास्मदभिमत च्यवनस्यैव निन्दाहेतुत्वेन ब्रह्मप्रा प्त्यर्थ स्यात्मानुभवा दपगमस्या त्मानुभवस्थाना दूर्ध्वगमनात्मकस्य

भवदभिमतौपचारिक च्यवनरूपस्य प्रत्युत प्रशंसाहेतो निन्दाहेतुत्वा सम्भवे प्रागुक्तासंगते स्तदवस्थत्वात ॥ १२० ॥

यदपि-"प्रतिबुद्धस्तु मोक्षभागि" तिचा व्याहत मोक्षभाक्त्वं प्रति बुद्धस्योच्यते - नता वता ऽन्यस्य मोक्षाभाव इति तद्वचनं प्रतिबुद्धस्य सकलेतर व्यावृत्तत्वाभिधान समर्थनं ॥ १२१ ॥

तदपि हेयमेव, दर्शितवचने मोक्षशब्दस्या व्याहत मोक्षलक्षणा कल्पने गमकाभावात्, निर्मूळ भवदीयकल्पना विशेषस्य वचनप्रतिपन्नमु ख्यार्थ बाधकत्वायोगात्, प्रत्युतवचनेनैव प्रतिबुद्धेतरेषां मोक्षाभावं स्वसा मर्थ्यतः प्रतिपादयता भवदीयकल्पनाविशेषस्य प्रतिरोधसम्भवाच्च॥१२२॥

किञ्चि त्प्रमाणगत शब्दस्य तुल्यबल प्रमाणान्तर प्रतिपन्नार्था नुगुण्येन लक्षणाकल्पन सम्भवेपि निर्मूलभवदीयकल्पना विशेषमात्रं न तस्य स्वानुगुणार्थ विशेषे लक्षणाकल्पना बीज म्भवितुमर्हति ॥१२३॥

पंचाग्निविदां प्रकृतिमण्डलएव क्वचित्स्थानविशेषेप्रथममात्ममात्रा नुभवः, ततः पश्चात्सुचिरविळम्बेन मोक्षप्राप्तिरिति भवदीयकल्पना विशेषेहि न किंचित्प्रमाणमिति; कल्पनाच वचनविरोधेन नप्रभवितु मर्हतीतिच प्रागेवावोचाम ॥ १२४ ॥

एव मव्याहत मोक्षभाक्त्वं नाम प्रतिबन्धकीभूत कर्मविशेषप्र-योज्यविळम्बमन्तरेणैव मोक्षभाक्त्वमितिवक्तव्यं, तद्य प्रतिबुद्धाना-मपि सर्वेषां प्रायशानसंभवत्येव, तेष्वपि शीघ्रमोक्षप्राप्ति प्रतिबन्धक बहुशरीर बहुकालानुभाव्यफलहेतुप्रारब्धकर्मबाहुळ्यसम्भवस्य प्रमाण प्रतिपन्नत्वादिति नायं धर्मस्सर्वेषां प्रतिबुद्धानां स्वेतरसकलव्यावर्तका कारोभवितु मर्हति ॥ १२५ ॥

प्रतिबुद्धानामपि प्रतिबन्धकीभूतप्रारब्धकर्मविशेषप्रयोज्य मोक्षवि-ळम्बः, "भोगेनत्वितरेक्षपयित्वा ऽथसम्पद्यते" ॥ शा - ४ - १ - १९ ॥ इत्यधिकरणेस्पष्टः ॥ १२६ ॥

तथाच - कैवल्यफलानित्यत्वसाधकतया पूर्वपक्ष्यभिमतस्य च्यवनधर्मत्वस्य कस्यचिद्दुर्वचत्वात्, सकलेतरव्यावृत्ततया सकलप्रतिबुद्धसाधारणतयाच्च प्रतिपद्यमानस्य मोक्षभाक्त्वस्य प्रागुक्तहेतुभि रव्याहतमोक्षभाक्त्वरूपताया दुर्वचत्वाच्च, परमप्राप्त्या त्परस्मा द्ब्रह्मण स्से व्यसेवकभावसंयोगनिवृत्तिरूपप्रच्युतिशीलत्वलक्षणं यथोक्तरूपं च्यवनधर्मत्वमेवप्रातिबुद्धेतरेषां निन्दाहेतुतया दर्शितवचनाभिप्रेतं। परमात्मप्राप्तिप्रकृतिवियुक्तप्रत्यगात्मप्राप्तिलक्षण द्विविधमोक्षयोः प्रागुदाहृतै रुत्तरत्रोदाहरिष्यमाणैश्च प्रमाणैःप्रतिपाद्यमानत्वा त्तत्र परमात्मप्राप्तिलक्षणमोक्षस्यैव प्रकृष्टत्वात, " साविद्यायाविमुक्तय " इत्याद्युक्तन्यायेन प्रकृष्टमोक्षस्यैवेह मोक्षशब्दविवक्षितत्वसम्भवाच्च, प्रकृष्टमोक्षभाक्त्वमेवच सकलेतरव्यावृत्त सकलप्रतिबुद्धसाधारणाकारतया दर्शितवचनाभिप्रेत मित्यभ्युपगन्तव्यमिति नेदं वचनं कैवल्यार्थिनः फलानित्यत्व साधकमितिसिद्धम् ॥ १२७ ॥

किं बहुना - सम्प्रदायतश्शास्त्रार्थाग्रहणेन यथावस्थित शास्त्रार्थस्य सर्वशास्त्रैककण्ठ्यस्यचा परिज्ञानाच्च स्वोत्प्रेक्षामात्रविजृम्भितविपरीततर्कैं र्दर्शितमोक्षधर्मवचनशकलस्य प्रागुक्तपरश्शतान्यथासिद्धिसंवलितस्या पुनरावृत्त्यादि प्रतिपादनमुखेन विशदतरकैवल्यपुरुषार्थनित्यता प्रतिपादकसमानप्रकरण श्रुतिस्मृत्यादि बहुप्रमाणविरुद्धाप्रतिष्ठित विपरीतार्थवर्णनं कुर्वाणान् तदानुगुण्येना नन्यथासिद्धानेकप्रमाणान्यथा नयनेच प्रयतमानानेतान् किमहो विपरीत मेतत्पाण्डित्यमिति विद्वांसो विहसंतीति दर्शितमोक्षधर्मवचनशकलं नकिंचिदपि पूर्वपक्ष्यभिमत भिक्षादानदक्षम् ॥ १२८ ॥

यदपि प्राक्पूर्वपक्षभागे तृतीयवाक्योदाहृत रहस्यत्रयसारग्रन्थाभ्यंगते द्वितीयांकचिह्नितवाक्योदाहृतमोक्षधर्मवचने " जिज्ञासुर्लभते भक्ति" मित्यनेन गीताशास्त्रोक्तजिज्ञासुशब्दिताधिकारिण स्स्वप्राप्यपुरुषार्थ

लाभानन्तरं प्राप्यान्तरप्राप्तिहेतुभक्तियोगलाभप्रतिपादनं प्रदर्शयन्तः पूर्वपक्षिणो जिज्ञासुप्राप्यकैवल्यपुरुषार्थस्य दर्शितवचनेना नित्यतासिद्धिम्मन्यन्ते ॥ १३९ ॥

तदप्ययुक्तं –“ मुच्येतार्त स्तथारोगाच्छ्रुत्वे मामादितः कथां । जिज्ञासुर्लभते भक्तिंभक्तोभक्तगतिंलभेदि”ति श्रीभारत शान्तिपर्वस्थ श्रीनारायणीयोपाख्यानान्तर्ग तैकचत्वारिंशदुत्तर त्रिशततमाध्यायस्थ वचने तत्प्रकरणाभिहित कथाविशेषश्रवणफलप्रतिपादनपरे वर्तमानस्य जिज्ञासुशब्दस्य ज्ञानप्राप्तीच्छुविषयत्वेन , कैवल्यार्थिविषयत्वाभावात् । कैवल्यार्थिनो गीताशास्त्रोक्त जरामरणमोक्षलक्षणफलानाभिधानेन भक्तेरेवफलतया निर्देशेनच भक्तियोगरूपज्ञान प्राप्तीच्छुविषयतायाः स्स्पष्टत्वात् । रुग्णविषयार्तपदसाहचर्यादिभि रार्तार्थार्थिज्ञानिरूप गीताशास्त्रोक्ताधिकार्यंतरसाहचर्याभावेनच कैवल्यार्थिविषयत्वासिद्धेः । तथा त्वस्याभ्युपगमेपि कैवल्यप्राप्तिप्रयोजकभक्तियोगलाभप्रतिपादकतायाः एवास्य वचनस्य सुवचत्वसम्भवेन कैवल्यार्थिन स्स्वप्राप्य कैवल्यप्राप्त्यनन्तरं प्राप्यान्तरप्रापकभक्तियोगलाभपरत्वेप्रमाणाभावात । लोकविशेषे कैवल्यपुरुषार्थमनुभवतो ऽधिकारिणो निश्शेषनिर्दग्ध देहेंद्रियादिसर्वोपकरणस्य तदानीं भारतकथाविशेष श्रवणप्रसंगस्यैवाभावेन तस्य तादृशकथाश्रवणायत्तभक्तिलाभकथायाएव सुदूरपराहतत्वाच्च । दर्शितवचनस्य सर्वथैवान्यथा सिद्धस्य कथंचिदपि कैवल्यानित्यता साधकत्वायोगात् ॥ १४० ॥

यदप्युक्तं - प्राक्पूर्वपक्षभागे तृतीयवाक्योदाहृत रहस्यत्रयसार ग्रन्थान्तर्गत तृतीय चतुर्थवाक्ययोः श्रीमुखसुक्ताख्य द्राविडब्रह्मसंहितायां भगवदनुभवस्यानित्यत्वाभिधाने नाप्येतद्व्यवच्छेद्य आत्ममात्रानुभवो नित्योनित्यंशोव्यंजितइति, अस्य षष्ठकाण्डनवमश्रीमुखसुक्त दशमगाधादिषु नाशराहित्योक्तिरपि चातुर्मास्यादिकर्मफलविशेषे ष्वक्षय्यत्वोक्तिवदतिचिरकालस्थायित्वाभिप्रायेतिच ॥ १४१ ॥

नूनमियं मत्काण्डे ताण्डवप्राया सर्वा भवदुक्तिः -"अन्येन्द्रकं भुवनमन्यदनिन्द्रकं वा कर्तुं क्षमे कवि रभूदयमन्ववाये।" इत्युक्तभवद्गोत्रवैभवानुगुणा वैश्वामित्री सृष्टिरेव, इतः पूर्वं द्राविडवेदभाष्यकारेषु केनापि दर्शितशास्त्रस्यानेन वर्त्मना व्याख्यानाकरणाद्स्य वर्त्मन स्स्वरसतो मूलेनाप्यलाभादपूर्वमेव भवद्भि स्स्वोत्प्रेक्षामात्रकल्पितत्वाच्च ॥ १४२ ॥

दर्शितप्रथमकाण्डद्वितीयश्रीमुखसूक्त पंचमगाथायां भवदभिमानानुरोधेनापि कैवल्यपुरुषार्थानित्यतायां लिंगमेव प्रतिपद्य तेन षष्ठकाण्डनवमश्रीमुखसूक्त दशमगाथादिषु प्रतिपन्नां कैवल्यनित्यताश्रुतिं बाधमाने र्भवद्भिः - श्रुतिलिंगवाक्यप्रकरणस्थानसमाख्यानां समवाये परदौर्बल्य मर्थविप्रकर्षात् ॥ ३ ॥ ३ ॥ १४ ॥ इति पूर्वतन्त्रशास्त्रार्थविचारकुशलता सम्य गाविष्कृता ॥ १४३ ॥

द्राविडवेदतदंगोपांगेषु दिव्यसूरिभि स्तत्तद्भाष्यकारै श्च कैवल्यं नित्य मित्येव सोपपत्तिक मन्यथासिद्धिगन्धानर्हं स्पष्टमेव निरूपित मिति सैषा कथा तेषु कथंचिदपि दुरारोपैव ॥ १४४ ॥

दर्शितपंचमगाथायां कैवल्योक्त्यनन्तरं भगवत्प्राप्तिलक्षणपुरुषार्थस्य नित्यत्वोक्त्या कैवल्यस्यानित्यत्वं व्यज्यत· इत्युक्ति स्तावदयुक्ता, तत्र प्रथमं भगवत्प्राप्तिलक्षणपुरुषार्थस्य नित्यत्वाभिधानस्यैवासिद्ध्या ततः कैवल्यस्यानित्यत्वव्यंजनासिद्धेः ॥ १४५ ॥

इद मत्रावधेयं - नह्यत्र कैवल्यस्यानित्यत्वं साक्षा दभिधीयते - अपितु तत्सहचरितभगवदनुभवस्य नित्यत्वोक्त्या कैवल्यस्यानित्यत्वं व्यज्यत इति हि भवद्भि रुच्यते - तदेतन्न सम्भवति - षष्ठकाण्डनवमश्रीमुखसूक्तदशमगाथादिषु प्रस्फुटार्थकेन शब्देन नित्यत्वाभिधानेन तद्विरोधात , नखलु लिंगं श्रुतिं बाधितुं प्रभवति, अनेकप्रमाणगणसंवादिनी नित्यत्वसमर्थकैश्वर्यव्यावृत्तत्वमहादुःखरूपत्व

मोक्षरूपत्वाद्यभिधानलक्षण बहुळानुकूललिंगानुगृहीता चेयं कैवल्य नित्यत्वश्रुति रतिप्रबला नानार्थकतया सन्दिग्धार्थकशब्दाधीनभगव दनुभवानित्यत्वप्रतिपादनरूपेण लिंगेन परमदुर्बलेन कथमिव बाध्येत । तस्मा द्दर्शित गाथायां भगवत्प्राप्तिलक्षणपरमपुरुषार्थवाचिन श्शब्द-स्य नानार्थकस्य समानप्रकरणस्थ कैवल्यनित्यत्वश्रुत्यविरोधाकारेण तादृशपुरुषार्थपरताया एव सिद्ध्या कैवल्यस्य स्वरूपाननुरूपत्वाप कृष्टत्वादिव्यंजन मेव सिद्ध्यति न पुनरनित्यत्वव्यंजन मिति ॥ १४६ ॥

दर्शितपञ्चमगाथाहि – नष्ट स्संग इति चे त्प्राप मोक्ष मात्मा, परिहृत्य तं निश्चलस्थितिं प्रेप्ससि चे त्तदर्थीभूय स्वामिनं भजेत्येव मर्थिका दृश्यते ॥ १४७ ॥

निश्चलस्थितिं प्रेप्ससि चेदिति स्थाने – नित्ययोगं प्रेप्ससि चे दिति वा प्रतिसंस्कारो भवितु मर्हति – तत्रत्यस्य - मन्नुरिलिति द्राविडशब्दस्य नानार्थकस्य द्वेधापि व्याख्यानसम्भवात ॥ १४८ ॥

अस्या श्चाय मर्थः - संगः – प्राकृतविषयसंगः । नष्ट इति चेत । विषयसंगे नष्टे सतीति यावत् । आत्मा । मोक्षं - कैवल्य लक्षणमोक्षम् । प्राप । अत्र प्रापेति भूतकालनिर्देशः प्राप्तिदार्ढ्य ज्ञापनार्थः । तम् - कैवल्यमोक्षम् । परिहृत्य - स्वरूपाननुरूपत्वादि नोपेक्ष्य । निश्चलस्थितिं प्रेप्ससि चेत - स्वरूपानुरूपं परमं च भगवत्प्राप्तिलक्षणं पुरुषार्थं प्राप्य पुरुषार्थान्तरचापलप्रसंगविधुरस्थितिं लब्धु मिच्छसि चेत् । नित्ययोगं प्रेप्ससि चेदिति प्रतिसंस्कार पक्षे - भगवत्सेवनेन स्वरूपाननुरूप मपकृष्टं च पुरुषार्थान्तरं प्राप्य ततः परमप्राप्या द्भगवतः प्रच्युति मन्तरेण तेनैव सह सेव्यसेवक भावेन याव दात्मभाविसम्बन्धं प्राप्तु मिच्छसि चेदित्यर्थः । स्वा-मिनं - परमशेषिभूतं श्रीमन्नारायणम् । तदर्थीभूय - प्रथममेव तच्छे षतैकरसो भूत्वा । भज - प्राप्यतया प्रपद्यस्वेति ॥ १४९ ॥

अत्र द्वितीयपक्षः - गीताशास्त्रे - तेषां ज्ञानी नित्ययुक्त इत्या-दिषु प्रयुक्तनित्ययुक्तशब्दसमानविषयतया तदेककण्ठः चतुर्थकाण्डप्रथम श्रीमुखसूक्तदशमगाथैककण्ठ श्च ॥ १५० ॥

एव मत्र प्रथम मेव भगवतः प्राप्यतया भजनप्रतिपादनं कैवल्य मोक्षप्राप्त्यनन्तरं भगवत्प्राप्तिकथाया असम्भावितत्वाभिप्रायकम् ॥१५१॥

तथा चात्र पक्षद्वयेपि न कैवल्यपुरुषार्थस्या नित्यत्वव्यंजनकथा,-प्रत्युत तत्प्राप्त्यनन्तरं भगवत्प्राप्ते रसम्भावितत्वज्ञापनेन तस्य नित्यत्व मेवावगम्यत इति नास्या गाथायाः कैवल्यानित्यत्वसाधकता ॥ १५२ ॥

षट्सहस्रिकाभाष्ये दर्शितगाथोत्तरार्धं व्याख्यातम् - तत्रानुरज्यभगवच्छेषत्वैकरसं तव स्वरूपं प्राप्य निश्चलस्थितिप्राप्तीच्छायां प्रथमं विषयसंगविसर्जनसमय एव स्वामी प्राप्यतया प्रपदनीयइति ॥ १५३ ॥

नवसहस्रिकाभाष्ये - चतुर्विंशतिसहस्रिकाभाष्ये च मन्नुरिलिति पद मुपादाय व्याख्यातं - निरतिशयपुरुषार्थभूतभगवत्कैंकर्यम्प्राप्य निश्चलं स्थातु मिच्छसि चेदिति ॥ १५४ ॥

षट्त्रिंशत्सहस्रिकाभाष्ये दर्शितपद मुपादाय व्याख्यातम् - स्वप्राप्तौ भूय स्ततोप्युपरितनः कश्चि दनुभवो ऽस्तीति स्थित्यनर्हं निश्चलस्थितियोग्यपुरुषार्थं प्राप्तु मिच्छसि चेदिति ॥ १५५ ॥

द्वादश सहस्रिकाभाष्येतु स्थिरं भगवद्विषययोगं प्राप्तुमिच्छसि चेदिति तत्पदं व्याख्यातं ॥ १५६ ॥

अत्र द्वादशसहस्रिकाभाष्यं दर्शितपदस्य नित्ययोगं प्रेप्ससिचे दित्यर्थकत्वाभिप्रायेण प्रवृत्तं, अन्यत्तु - निश्चलस्थितिं प्रेप्ससिचेदित्यर्थ कत्वाभिप्रायेण प्रवृत्तमित्यवगम्यते ॥ १५७ ॥

अत्र न कुत्रापि कैवल्यपुरुषार्था नित्यत्वव्यंजको भगवदनुभव लक्षण परमपुरुषार्थ नित्यत्व निर्देशः कश्चिद्दृश्यते ॥ १५८ ॥

प्रत्युत तदर्थीभूय स्वामिनं भजेत्यंश व्याख्यानावसरे भाष्येषु कैवल्यप्राप्तेः प्राग्भगवदाश्रयणवेळायामेव भगवान् प्राप्यतयाप्रपदनी य इतिव्याख्यानेन कैवल्यप्राप्त्यनन्तरं भगवत्प्राप्ते रसंभावितत्वाव गमनेन कैवल्यस्य नित्यत्वमेव सुष्टुज्ञापितं भवति ॥ १५९ ॥

एवं – विषयसंगे निवृत्ते प्रकृतिविनिर्मुक्त आत्माभासमानोनि त्यत्वाज्ज्ञानानन्दलक्षणत्वाच्च स्वानुभव एव निर्मज्जये दुपासकमिति दर्शितगाधाभाष्योक्तितो मुक्तकण्ठ मप्यभिहितं भवति कैवल्यस्य नित्यत्वम् ॥ १६० ॥

अतो ऽत्र नकैवल्यपुरुषार्थस्यानित्यत्वव्यंजनावकाशः ॥ १६१ ॥

यत्तु – दर्शितगाधास्थपदविशेषस्य – नित्ययोगं प्रेप्सवि चेदिति प्रतिसंस्कारपक्ष माश्रित्य नित्यपुरुषार्थयोगो नित्ययोग इत्यभिमन्य मानाः पूर्वपक्षिण स्स्वाभिमतार्थसिद्धिं मन्यन्ते ॥ १६२ ॥

तत्तु – गीताशास्त्रे – " तेषां ज्ञानी नित्ययुक्त " इत्यादि ष्वनेकस्थळेषु प्रयुक्तं ज्ञानिविषयं नित्ययुक्त शब्दं नित्यभगवत्सम्बन्धकांक्षिपरतया व्याकुर्वाणै र्भाष्यकारै रेव दूरो त्सारितं – तदेककण्ठत्वा दस्य - नित्ययुक्तशब्दे नित्यशब्द स्येव – मन्नुरिलित्यत्रत्यस्य मन्निति शब्दस्यापि नित्यपर्यायस्य स्वाव्यव हितोत्तरक्रियाविशेषणताया एवावगमेन धात्वर्थे योग एव नित्यत्वभान सम्भवात् भगवदनुभववाचकपदान्तराभावेन तत्र नित्यत्वभानासम्भवाच्च स्वरजतश्शब्दतो ऽप्यलभ्यं चेति न किंचिदेतत् ॥ १६३ ॥

एवं चतुर्थकाण्डप्रथमश्रीमुखसूक्ते कैवल्यपुरुषार्थस्य नित्यत्व मेव स्फुट मवगम्यते ॥ १६४ ॥

तत्र ह्यष्टभि र्गाथाभि रैहिकैश्वर्यस्या ल्पत्वास्थिरत्वाभ्यां हेयत्वं प्रतिपाद्य नवमगाधायां महता तमसा समार्जितस्य स्वर्गाद्यामुष्मिकै श्वर्यस्याप्यतिचिरकालानन्तर मपि वा विनाशित्वलक्षणवस्तुस्वभाववशा

स्पुनरावृत्तिलक्षणत्वस्यावर्जनीयतया हेयत्वं प्रतिपाद्य, दशमगाथाया मात्मप्राप्तिलक्षण संकोच मोक्षावलम्बिनः कैवल्यार्थिन ऐश्वर्यार्थितः प्राप्यवैलक्षण्ये प्यतिश्रमसाध्य आत्मप्राप्तिलक्षण स्संकोचमोक्षोऽपि भगवन्तंमन्तरेण दुस्साधः – भगवत्प्राप्तिरेव च परममोक्षः· एवंस्थिते भगवदपेक्षया ऽ त्यल्पभूते ऽतिश्रमसाध्ये कैवल्यपुरुषार्थे किमर्थं प्रवृत्तिः क्रियते,: तं विहाय भगवत्प्राप्तिलक्षण परममोक्ष एव प्रवृत्तिः क्रियता मित्य त्यल्पत्व श्रमसाध्यत्वादि दोषैरेव हेयत्व प्रतिपादनात्कैवल्यस्य स्थिरत्वमेवेति स्फुटमवगम्यते । स्थिरत्वाभावे सुदूरमपिगत्वा पुन रावृत्ति रवर्जनीयेतिदोषेणा मुष्मिकैश्वर्यस्येव कैवल्यपुरुषार्थस्यापि दूष णीयतया ऽ ल्पत्वादि दोषमात्रेण तद्दूषणायोगात । ऐश्वर्यवत्कैवल्यस्या· प्यस्थिरत्वे नवमगाथोक्तैश्वर्यदूषणेनैवैकोक्त्या; द्वयोरपि दूषणसम्भवेन दशमगाथारम्भ हेतु कैवल्यपुरुषार्थावलम्बनशंकाया एवानुदयेन कैव· ल्यदूषणार्थं दशमगाथाविर्भावस्यैवा नुपयोगित्वापत्तेश्च ॥ १६५ ॥

इयं हि तत्र दशमगाथारम्भिका शंका - अस्थिराचित्तत्त्व निबन्ध नैश्वर्य पुरुषार्थावलम्बने पुनरावृत्ते रपरिहार्यत्वेपि स्थिरभूतात्मप्राप्ति लक्षण कैवल्यपुरुषार्थावलम्बने कोदोष इति ॥ १६६ ॥

षट्सहस्रिकाभाष्ये कुरुकेशार्यैः - अस्थिरत्वादिदोषासम्भिन्नं कैवल्यं प्राप्यतया समाश्रीयत इति चेदित्याशंकयाऽ वतार्य तादृशाशंका परिहारकतया हि दशमगाथा व्याख्याता ॥ १६७ ॥

एवं चतुर्विंशति सहस्रिकाभाष्येपि - ऐश्वर्यमस्थिरंचे त्स्थिरपुरुषार्थ भूतं कैवल्यं प्रतिपद्यामह इत्युक्तौ · कैवल्यपुरुषार्थो दुस्साध इति स्वचा पुरुषार्थइतिच प्रतिपादयतीत्येवंरूपा दशमगाथावतारिकाकृता ॥ १६८ ॥

षट्त्रिंश त्सहस्रिकाभाष्येपि दर्शित दशमगाथावतारिका - भूम्या मैश्वर्यं स्वर्गानुभवश्चेत्ये तदस्थिरमित्यथो च दधस्तात् अनेवंभूत आत्म लाभः स्थिरपुरुषार्थः किलेतिचेत · पूर्वोक्ता त्किंचिद्गुणसद्भावेपि भग·

सदानन्दापेक्षया ऽ स्यैकदेशरूपत्वा त्सोपि क्षुद्रः ततस्तमेव प्राप्तुं प्रयतध्वमित्याहेत्येवंरूपा कृता ॥ १६९ ॥

एव मन्यत्राप्येवंभूतैव दशमगाथावतारिका द्रष्टव्या ॥ १७० ॥

एवं षष्ठकाण्ड नवमश्रीमुखसूक्त दशमगाथायां प्रकृतिविमुक्त स्व स्वरूपावस्थित प्रत्यगात्मतत्त्वानन्दस्य संकोचविकासविनाशादि लक्षण विकार शून्यत्वं प्रतिपादयन्त्यां तत्प्राप्तिलक्षण कैवल्यपुरुषार्थस्य नित्यत्व म्मुक्तकण्ठ मतिस्फुटमेवाभिहितम् ॥ १७१ ॥

अह्रस्वीभव न्नदीर्घीभव न्नविनाशयोग्य नन्ते काळे प्यसंकोच्य विकास्य नन्त आनन्दः प्राप्तोपि, भूयः कदाप्यसम्भावितं मायि स्त-वैव दास्याधिकरण मल्पं काळ मनुकुर्यां किं हन्त निरूपणे, इत्येव मर्थोहि सैषा गाथा ॥ १७२ ॥

अस्या श्चाय मर्थः ।, अह्रस्वीभव न्नदीर्घीभवन् - संकोचविकास लक्षणविकारशीळताविधुरः । अत एव - अविनाशयोगी - विनाश विधुरः । स्थिर इति यावत् । नचेदं स्थिरत्व मतिच्चिरकाळस्था॰ यित्वमात्ररूप मित्याहा नन्त इत्यादिना । अनन्ते काळेपि - अपरि च्छिन्ने काळेपि । असंकोची - अविकासी - न संकोचविकासशीळः । सर्वदैव संकोचविकासशीळतारहित इति यावत् । तथाच - पदा र्थान्तराणा मिवास्य कल्पमध्ये तदातदोत्पत्तिविनाशशीळत्व मपि नास्ति - कल्पाद्यवसानयो रपि तयात्वं नास्तीत्युक्तं भवति । तर्हि कदा पुन रस्य समाप्ति रित्यत्राहानन्त इति । अनन्तः - यथोक्तलक्षणत्वादेव कदाप्यनवसानः, नित्य इति यावत् । आनन्दः- प्रकृतिविमुक्तस्वस्वरूपावस्थित प्रत्यगात्मप्राप्तिलक्षणकैवल्यमोक्षानन्दः। प्राप्तोपि - समागतोपि । हे मायिन् - अनवधिकान्यानन्देपि वैतृष्ण्य मुत्पाद्या त्यल्पकाळस्वानुभवे प्यतिशयितचापलोत्पादनव-धिकातिशयमहाश्चर्यशालिपरमशेषिन् । निरूपणे - सम्यक्परिशीळने

सति । भूयः कदाप्यसम्भावितं - इय मसम्भावितत्वोक्ति रेवं भूत त्वेपीत्यभ्युपगमवादः, पतत्पतंगप्रतिम इतिव दभूतोपमायां तात्पर्यम् । तवैव दास्याधिकरण मल्पकालं - क्षणकालावच्छिन्न त्वदन न्यदास्यरसमुख मपि । अनुकुर्यां किं - उपमिनुयां त्किम् । हन्ते त्यनेन - पर्वतपरमाण्वो रिवातिविलवैषम्ययो रनयोः कैवल्यभगव त्प्राप्तिलक्षणपुरुषार्थयो रपि तारतम्यं वक्तव्यं किलासीदिति खेदा तिशयो ऽभिप्रेत इति ॥ १७३ ॥

इद मत्र तात्पर्यं - ज्ञानानन्दलक्षणप्रत्यगात्मस्वरूपस्य स्वत स्संकोचविकासविनाशादिलक्षणविकारानर्हत्वा त्तद्गतधर्मभूतज्ञानस्य ता दृशविकारार्हत्वेपि विलक्षणप्रकृतिसंसर्गायत्तस्य तादृशविकारस्य निश्शेषप्रकृतिसम्बन्धविनिर्मोक्षदशायां कदाचि दप्यसम्भवाच्च निश्शेष प्रकृतिसम्बन्धनिवृत्त्यनन्तर माविर्भूतानवधिकातिशयविकासज्ञानानन्द मयप्रत्यगात्मस्वरूपप्राप्तिलक्षणकैवल्यस्या विनाशित्वलक्षणमोक्षरूप ताया अवर्जनीयत्वेनैश्वर्या द्व्यावृत्तत्वेपि शेषभूतस्य शेषिपरिचर्याया एव स्वरूपानुरूपत्वा न्निरतिशयाश्चर्यहेयप्रत्यनीकानवधिकातिशया संख्येयकल्याणगुणगणाकरपरमशेषि परिचर्यालक्षणपुरुषार्थ एव सर्व पुरुषार्थकाष्ठाभूत स्स्वरूपानुरूपः परममोक्ष इति स एवोपादेयो विवेकिनां , अतथाविधः कैवल्यपुरुषार्थ स्तु हेय एवेति ॥ १७४ ॥

अत्रापि गीताशास्त्रवदेव पूर्व मैश्वर्यलक्षणपुरुषार्थस्या नित्यत्वेन हेयत्वं ज्ञापयित्वा, ततः स्थिरत्वेन ततो विलक्षणत्वेन कैवल्यपुरु षार्थस्वरूपं ज्ञापयित्वा, तस्यापि हेत्वन्तरेण हेयत्व माभिधीयते ॥ १७५ ॥

अत्रा प्येतद्भाष्येषु कैवल्यपुरुषार्थस्य स्थिरत्व मेव सम्य ग्दर्शितम् ॥ १७६ ॥

षट्सहस्रिकाभाष्ये दर्शितदशमगाथाव्याख्याने , वैषयिकसुख मल्पास्थिरत्वादिदोषदुष्टतया भवदपेक्षितं नचे त्प्राचुर्यस्थिरत्वा द्यनेक

गुणयुक्तस्य केवलात्मानुभवलक्षणसुखस्य परिग्रहः किं न सम्भवती ति चेदित्यादिना कैवल्यस्य नित्यत्व मेवाभिहितम् ॥ १७७ ॥

नवसहस्त्रिकाभाष्ये दर्शितगाथावतारिकायां - वैषयिकसुख मल्प मस्थिर मिति मन्यसे चेदनन्तस्य स्थिरस्य कैवल्यपुरुषार्थस्य परिग्रहे किमिति चेदित्यादिना तन्नित्यत्वं दर्शितम् ॥ १७८ ॥

चतुर्विंशतिसहस्त्रिकाभाष्येपि , वैषयिकसुख मल्प मस्थिरमिति वदसि चे त्ततो ऽधिकस्य स्थिरस्य कैवल्यस्य प्राप्तौ किमिति चे दित्यवतारिकया तन्नित्यत्वं वर्णितम् ॥ १७९ ॥

षट्त्रिंशत्सहस्त्रिकाभाष्येपि , ऐश्वर्यादी न्यल्पास्थिराणीत्यनपेक्षि तानीति वदसि चेत् , तादृशो नखल्वनन्त स्स्थिर श्च खल्वात्मानुभवः, तदनुभवे किंमिति चे दित्यवतारिकया तन्नित्यत्वं कथितम् ॥ १८० ॥

एव मन्यत्रापि तदभिधानं द्रष्टव्यम् ॥ १८१ ॥

सर्वै रेतैः वैषयिकसुखस्या ल्पास्थिरत्वकीर्तनमेव न तद्धेयत्व हेतुतयोक्त मस्माभिः , येन तद्रहितं कैवल्य मादरणीय मापद्येत, अपितु तादृशस्यापि तत्स्वरूपस्य कीर्तनं कृतं , उभयो रविशेषेण हेयत्वे प्रधानहेतुस्तु शेषत्वस्वरूपानुगुण भगवत्प्राप्तिलक्षणपरमपुरुषार्थ व्यतिरिक्तत्व मेवेति श्रीपरांकुशदिव्यसूर्याशयस्य प्रस्फुट मुपपादना त्कैवल्यस्थिरत्व मसन्दिग्ध मभिहितम् ॥ १८२ ॥

एवं सप्तमकाण्डपंचमश्रीमुखसूक्तदशमगाथायां - वार्तां विद न्तो मायिन मन्तरेणा न्यस्य शेषा भवेयुः किं विरोधि जन्मव्याधि जरामरणान्युन्मूल्य , महादुःखं समूलं निवर्त्य स्वचरणाधो निवेश्य तेन क्रियमाणं क्षेम मनुसन्धाय विवेकं प्राप्येत्येव मर्थिकाया म्महा दुःखशब्देन कैवल्यनिर्देशेन कैवल्यस्य यावदात्मभाव्यपुरुषार्थत्वलक्षणं नित्यदुःखत्वमेव विवक्षितं , अन्यथैश्वर्यस्य तथात्व मनभिधायैतस्य परं तथात्वाभिधाने कारणाभावात् ॥ १८३ ॥

तदेव तद्भाष्ये ष्वप्युक्तम् ॥ १८४ ॥

यथोक्तं षट्सहस्रिकाभाष्ये - कैवल्यरूपमहानर्थं स्वप्रवेशं स्वच रणद्वन्द्वाधो निवेश्येति ॥ १८५ ॥

उक्तञ्च चतुर्विंशतिसहस्रिकाभाष्ये - महादुःखं समूलं निवर्त्य- आत्मानुभवरूप महादुःखं सवासनं निवर्त्य, प्रकृतिप्राकृताना मस्थैर्य मिति कश्चिद्गुणोऽस्ति अपुरुषार्थो स्थिरादधिकं नविद्यते खलुमहा दुःखमिति ॥ १८६ ॥

भाषितंच षट्त्रिंशत्सहस्रिका भाष्येपि - महादुःखं समूलं नि- वर्त्य-जन्मनिवृत्तावनन्तर मागन्तुकं कैवल्यं नाममहादुखं सवासनं निवर्त्य, पूर्वस्थितिरेव समीचीनेति मननापादिका खल्वेतस्यक्षुद्र ता, तत्र भूयएकशरीरपरिग्रहं कृत्वापि भगवत्समाश्रयणं कर्तुं यो ग्यतास्तिहि, अयं नित्यविनाशः खल्विति ॥ १८७ ॥

अत्र सर्वत्र कैवल्यस्या नित्यताशंकागन्धस्यापि नावकाश लेशइति स्फुटम् ॥ १८८ ॥

एवं स्वप्रबन्ध प्रथम श्रीसूक्ते प्रथम द्वितीय गाथाभ्यां स्वयं भगवतोमंगळाशासनं कृत्वा तावता पर्याप्तचनुदयेन " चतुर्विधाभज- न्तेमा " मिति श्लोकोक्ता नैश्वर्यकैवल्यभगवत्प्राप्त्यर्थिनस्त्रिविधान प्यधिकारिणो भगवन्मंगळाशासनाय स्वगोष्ठ्यां संयोजयितुमभिसन्धाय तत्र प्रत्यासन्नतया भगवत्प्राप्तिकामान् प्रथमं तृतीयगाथाया माहूय तावतापि पर्याप्तचनुदये नैश्वर्यकैवल्यकामा नप्याह्वयितुं प्रवृत्य चतुर्थगाथायां कैवल्यकामान् ततः पञ्चमगाथाया मैश्वर्यार्थिन श्चाह्व यतो भट्टनाथदिव्यसूरे रैश्वर्यकामेभ्यः कैवल्यकामानां प्रथममाह्वा नबीजं प्रदर्शयद्भिः श्रीमत्कृष्णपादसूरिभिरपि चतुर्थगाथावतारिकाभा ष्ये ऽयमंश स्सुस्पष्टं विस्तरेणभाषितः ॥ १८९ ॥

यथोक्तं तत्र- ईश्वरकरनिरीक्षिणइत्येतावता ऽऽत्मप्राप्ति कामा नैश्वर्यकामां श्राहूवयितु मुद्यम्य तत्र प्रथममात्मप्राप्तिकामानाहूवयति । ऐश्वर्यादात्मप्राप्तिरुत्कृष्टेतिबुद्ध्या नाह्वयति, तादृशमोक्षस्यानेनानर्थ तयानुसन्धानात् ; तर्हि कुतः प्रथममाहूवानमितिचेत् , भगवत्स म्बन्धोपकरणभूतशरीरमोक्षस्य सन्निहितत्वा त्तादृशमोक्षप्राप्तौ पुन रावृत्त्यभावा दैश्वर्यकामस्य कालान्तरेपि वा भगवत्सम्बन्धकरणयो ग्यतासद्भावात् अस्य कैवल्यकामस्य तादृशयोग्यता विळयाच्च दुर्गतिन्दृष्ट्वा प्रथममाह्वयतीति ॥ १९० ॥

एवमन्यत्रापि दिव्यसूरिप्रबन्धतद्भाष्येषु तत्र तत्रायमर्थः प्रति पादितोद्रष्टव्यः ॥ १९१ ॥

तथाच प्रमाणेषु क्वापि पश्चाद्भगवत्प्राप्त्यभिधानानुपलम्भा त्प्रत्यु त महादुःखत्वनित्यत्वाभिधानेन पश्चात्तद्योग्यताराहित्यस्यैवोपलम्भा द्यथो क्तरीत्या पूर्वाचार्यैः पश्चात्तद्योग्यताराहित्यस्य सुस्पष्टमेवाभिधानाच्च द्राविडब्रह्मसंहिता प्रथमकाण्ड द्वितीयश्रीमुखसूक्त पंचमगाथाभाष्येषु कैवल्यं परिहृत्य भगवत्प्राप्तीच्छायां कैवल्यप्राप्तेः प्राग्विषयसंगनिवृ- त्तिकालएव कैवल्यसंगंनिवर्त्य प्राप्यतया भगवदुपासनविधानपरत या व्याख्यानं कैवल्यप्राप्तेः पश्चाद्भगवत्प्राप्तियोग्यताविळयाभिप्रायक तया कैवल्यस्य नित्यत्वमेवावगमयतीति सिद्धम् ॥ १९२ ॥

एतेन दर्शितगाथाभाष्येषु विषयसंगनिवृत्तिकाळएव कैवल्य संगमपि निवर्त्य तदाद्येव भगवतः प्राप्यतयो पासनविधानपरतया व्याख्यानस्य मध्ये विळम्बपरिहारमात्राभिप्रायकतया समर्थनोद्देशेन गीताभाष्य तात्पर्यचन्द्रिकायां सप्तमाध्याय षोडशश्लोकभाष्यव्याख्या ने केवळात्मन्यपर्यवस्यन्निति नगरं प्रविविक्षोरध्वगस्यच्छा यातरुमूळ स्वापवदात्मानुभवविळम्बइतिभाव इत्यनेन, अष्टमाध्याय त्रयोविंश चतुर्विंश श्लोकं भाष्यव्याख्याने कैवल्यं भगवन्तंच मन्त्रोयंसाध

ष्यतीत्यादिष्वपि कैवल्यशब्देनात्मानुभवसुखं तदपेक्षिभिः प्राप्य मुच्यते एतच्चान्तराय कोटिनिविष्टत्वादादितः सावधानं ज्ञानिनः परिहरन्तीत्यनेनच, कैवल्यार्थिनां कैवल्यप्राप्त्यनन्तरं विळम्बेनभगवत्प्राप्तिकल्पनं तादृशविळम्बासहिष्णुतयैव ज्ञानिनामादितएव तत्परिहारित्वाभिधानंच पूर्वपक्षिणां निरस्तम्; तादृशविळम्बेन तेषां पश्चाद्भगवत्प्राप्तौ प्रमाणलेशानुपलम्भा त्प्रत्युत कैवल्यपुरुषार्थस्यान्तकालावध्यभावप्रतिपादनमुखेन नित्यताप्रतिपादनस्यैव प्रागुदाहृतप्रमाणेषु व्यक्तत्वा दतीन्द्रियार्थे केवलतर्कस्या किंचित्करत्वात् कैवल्यस्य पश्चाद्भगवत्प्राप्तियोग्यताविलयहेतुतया महानर्थरूपत्वेनैवात्यन्त परिहरणीयत्वाभिधानात् पश्चाद्भगवत्प्राप्तिस्वरूपयोग्यतासत्त्वे महानर्थत्वाभिधानपूर्वक मत्यन्तपरिहरणीयत्वाभिधाना सांगत्यात्, मधुविद्यानिष्ठस्येदृशात्यन्तपरिहरणीयतायाः क्वाप्यभिधानादर्शनात्, मालाकारादीनामैश्वर्यविशेषप्राप्तिपूर्वकं स्वप्राप्ते र्भगवतैव दीयमानत्वदर्शनेन विळम्बमात्रेणात्यन्तपरिहरणीयत्वाभिधाना सांगत्यस्य दुर्वारत्वाच्च ॥ १९३ ॥

किंच अण्डाधिपत्य लक्षणैश्वर्यस्य कल्पावसानपर्यन्तस्थायितया ऽण्डान्तः पातिलोकानुभाव्यतया भवदभ्युपेतस्य कैवल्यस्य ततोपि विळम्बहेतुत्वायोगेन तादृशैश्वर्यस्यापि महानर्थरूपत्वेना त्यंत परिहरणीयत्वमनभिधाय कैवल्यस्य परं तदभिधानं तस्यनित्य पुरुषार्थरूपत्वं विना कथमिवसंगतं भवेत् ॥ १९४ ॥

एतेन प्रागुदाहृत रहस्यत्रयसारग्रन्थे द्राविडब्रह्मसंहिता षष्ठ काण्ड नवमश्रीमुखसूक्त दशमगाथायां कैवल्यस्य नाशराहित्योक्ते श्चातुर्मास्यादि कर्मफलविशेषाक्षय्यत्वोक्तिव दतिचिरकालस्थायित्वाभिप्रायकत्ववर्णनमपि परास्तं, दर्शित गाथायां कैवल्यस्य प्रथमं संकोच विकासादि विकारशीलतावैधुर्येण विनाशासम्भवं प्रतिपाद्य ततः कल्पावसानादिलक्षण सुचिरकालानन्तरं कदाचिद्विनाशस्स्यादिति

शंकापरिहारकतया ऽ नन्तेपिकाले संकोचविकासादि विकारासम्भव प्रतिपादनपूर्वकं केनापि प्रकारेणान्यथासिद्धिगन्धानर्हं पुनः कदाप्यव- सानराहित्येन नित्यत्व प्रतिपादनदर्शनेन तस्याः कैवल्यस्यापि चिर कालस्थायित्वमात्राभिप्रायकतायाः कथं चिदपि दुर्वचत्वात् । वेदान्तेषु कर्मसाध्यफलानां कृत्स्नानां नश्वरत्वस्य सहस्रधोद्घुष्यमाणतया त द्विरोधेन चातुर्मास्यादिकर्मणा मक्षय्यफलत्वासम्भवेन कर्मान्तरेभ्यस्तेषां श्रैष्ठ्य प्रतिपादनमात्रपरतया निश्चिताया स्तत्फलाक्षय्यत्वोक्ते र्देवामरत्व व्यपदेशव दापेक्षिकचिरकालस्थायित्वपरत्वावश्यकत्वेपि जिज्ञासो र्ब्रह्म विदातुल्यतया ऽ नेकेषु प्रतिपन्नाया अनावृत्तिश्रुते रपवादकाभावेन दर्शिताभिप्रायकत्वकल्पनायोगात् ; तथा सति ब्रह्मविदना वृत्तिश्रुते रपि तथात्व प्रसंगाच्च ॥ १९५ ॥

वेदान्तेषु कर्मसाध्यफलानित्यताप्रतिपादकप्रमाणानां बाहुल्या त्तन्नित्यतास्वीकारस्य वस्तुस्वभावविरुद्धत्वाच्च हि कर्मफलाक्षय्यत्व श्रुते श्चिरकालस्थायित्व मात्रपरतास्थापिता ॥ १९६ ॥

इहतु कैवल्यफलानावृत्ते स्तथानयने किञ्चिदपि व्यवस्थापकं प्रमाणं नोपलभामहे ॥ १९७ ॥

कर्मसाध्यफलस्य प्रकृतितत्त्वनिबन्धनविलक्षणभोगरूपस्य क्षरण शीलप्रकृतितत्त्वस्वभावा देवा नित्यत्वव त्कैवल्यस्या नश्वर प्रकृतिवियुक्त प्रत्यगात्मस्वरूपनिबन्धनविलक्षणानुभवरूपस्य नित्यत्व लक्षणतत्तत्त्वस्व भावादेव नित्यत्वमपि हि दुर्वारम् ॥ १९८ ॥

अपवादकत्वेन भवदभिमतं मोक्षधर्मवचनशकलमपि परश्शता न्यथासिद्धिपराहतं न भवदभिमत मर्थं साधयितुं प्रभवतीति च प्रागेव विस्तरेण प्रतिपादितम् ॥ १९९ ॥

किञ्च – द्वयो रधिकारिणो रपुनरावृत्तिं तुल्यतया प्रतिपाद- यन्तीं बहुलोपबृंहणोपबृंहितां स्फुटार्थां श्रुतिं प्रागुक्तपरश्शतान्यथा

सिद्धिपराहतं स्वरसत एव सम्भवदविरुद्धार्थं स्मृतिरूपं च दर्शित मोक्षधर्मवचनशकलं कथ मिव बाधेत । अन्यथा विरोधाधिकरण विरोधप्रसंगात् ॥ २०० ॥

उक्तं च ज्योतिरधिकरणतृतीयसूत्रटीकायां - स्मृतय श्च श्रुत्यनुरोधेन वर्णनीयाः - अशक्यवर्णना श्चेदनादरणीया इति ॥ २०१ ॥

वर्णितं च दर्शितमोक्षधर्मवचनस्य श्रुत्याद्यविरुद्धस्वारसिकार्थपरत्वम् ॥ २०२ ॥

कैवल्यनिष्ठस्या पुनरावृत्ति श्चान्यथासिद्ध्यनर्हा गीताशास्त्रे भगवतैव न्यायसंचारपूर्वकं स्फुटं निर्णीता ॥ २०३ ॥

गीताशास्त्रे ह्यष्टमाध्याये - ऐश्वर्यार्थिनः पुनरावृत्ति स्तत्प्राप्यभूत ब्रह्माण्डोदरवर्तिसत्यलोकपर्यन्तलोकानां परमपुरुषसंकल्पकृतोत्पत्ति विनाशकालव्यवस्थतया कथंचिदपि दुर्वारैवेति षोडशाद्येकोनविंशान्तश्लोकै र्निरूप्य, विंशैकविंशश्लोकाभ्यां कैवल्यनिष्ठस्य तत्प्राप्यभूत प्रकृतिवियुक्तप्रत्यगात्मतत्त्वस्य महाप्रळयेप्यविनाशित्वेन नित्यतया न पुनरावृत्ति रिति प्राप्यवस्तुविनाशाविनाशाभ्यां पुनरावृत्त्यपुनरावृत्तिसम्भवो दुरपह्नवः प्रतिपाद्यते ॥ २०४ ॥

अत्र प्राप्यवस्तुविनाशाविनाशयोः पुनरावृत्त्यपुनरावृत्तिहेतुत्वोपपादनलक्षणन्यायसंचारपूर्वकं कैवल्यनिष्ठस्याभिधीयमाना ह्यपुनरावृत्ति र्नान्यथासिद्धिगन्धार्हा ॥ २०५ ॥

भाष्यकारैश्च गीताभाष्ये दर्शितमूलाभिहितन्याय मेव स्फुटतरं प्रतिपादयद्भि रय मेवार्थो ऽन्यथासिद्धिवर्णनै रविचाल्य स्सुप्रतिष्ठापितः ॥ २०६ ॥

तथाहि । अष्टमाध्याये - मा मुपेत्य पुन र्जन्मेति पंचदशश्लोकावतारिकायां -" अतःपर मध्यायशेषेण ज्ञानिनः कैवल्यार्थिन श्चापुनरावृत्ति मैश्वर्यार्थिनः पुनरावृत्तिं चाह" त्युक्तम् ॥ २०७ ॥

अत्र ज्ञानिकैवल्यार्थिनो रेकजातीयैवा पुनरावृत्ति रेकेनैव शब्दे नाभिधीयमाना नचिरकाळस्थायित्वलक्षणा मन्यथासिद्धि मर्हति ॥२०८॥

आब्रह्मभुवनाल्लोका इति श्लोकं –" ऐश्वर्यगतिं प्राप्तानां भगवन्तं प्राप्तानां च पुनरावृत्ता वपुनरावृत्तौ च हेतु मनन्तर माह" त्यवतार्य, "ब्रह्मलोकपर्यन्ता ब्रह्माण्डोदरवर्तिन स्सर्वे लोका भोगैश्वर्यालयाः पुन रावर्तिनः – विनाशिनः – अत ऐश्वर्यगतिं प्राप्तानां प्राप्यस्थानविनाशा द्विनाशित्व मवर्जनीयं – मां सर्वज्ञं सत्यसंकल्पं निखिळजगदुत्पत्ति स्थितिलयलीलं परमकारुणिकं सदैकरूपं प्राप्तानां विनाशप्रसंगाभावा त्तेषां पुन र्जन्म नविद्यत " इति हि भाष्यकारा व्याचख्युः ॥ २०९ ॥

अत्र प्राप्यवस्तु विनाशाविनाशयो रेवान्वयव्यतिरेकाभ्यां पुन रावृत्त्यपुनरावृत्तिहेतुता स्पष्ट मुपदर्शिता ॥ २१० ॥

अत्र सदैकरूपमिति भगवतो नित्यत्वं भगवत्प्राप्तिकामाना मपु- नरावृत्ति हेतुतया दर्शितं, परमकारुणिकमित्यनेन निरंकुशस्वतन्त्रेण भगवता स्वेच्छया चेतनदुःख हेत्वावर्तना सम्भवः, निखिलेत्यादि विशेषणेन भगवदन्येनावर्तना सम्भवश्च दर्शितः । सर्वज्ञत्व सत्यसंक- ल्पत्व विशेषणाभ्या मीश्वरस्य निरतिशयसर्वविधानन्दोत्पादन सामर्थ्य संकल्पान्यथाकरणाभावज्ञापनमुखेन स्वापेक्षितानन्द विशेष करवस्त्वन्तर लाभकांक्षया चेतनस्य स्वेच्छया स्वातन्त्र्येण भगव दिच्छया च पुनरावृत्त्यसम्भवश्च दर्शितइति बोध्यम् ॥ २११ ॥

एवं सप्तदशादिश्लोकत्रयं "ब्रह्मलोकपर्यन्तानां तदन्तर्वर्तिनां च परमपुरुष संकल्पकृता मुत्पत्तिविनाशकाल व्यवस्था माह" त्यवतार्य व्याख्याय, "एवम्मद्व्यतिरिक्तस्य कृत्स्नस्य काळव्यवस्थयामत्त उत्पत्तेर्मयि प्रळयाच्चोत्पत्तिविनाशयोगित्व मवर्जनीय मित्यैश्वर्यगतिं प्राप्तानां पुनरा- वृत्ति रपरिहार्या मामुपेतानांतु नपुनरावृत्तिप्रसंग" इत्युपसंहृतं ॥२१२॥

अत्रापि पूर्वोक्तलक्षण हेतु हेतुमद्भाव एव दर्शितः ॥२१३॥

अनन्तरं विंशैक विंशश्लोकौ "अथ कैवल्यं प्राप्तानामपि पुनरावृत्ति र्नविद्यत इत्याह" त्यवतार्य, तद्व्याख्याने "सनातनः- उत्पत्तिविनाशानर्हतयानित्यः, यस्सर्वेषु वियदादिभूतेषु सकारणेषु सकार्येषु नश्यत्सुतत्र तत्रास्थितोपि नविनश्यतिसो ऽ व्यक्तोऽ क्षर इत्युक्त" इति कैवल्यार्थि प्राप्यशुद्ध प्रत्यगात्मस्वरूपस्य नित्यत्वं प्रळयकाला विनाशित्वंचाभिधाय, तदेवहेतु मभिसन्धाया पुनरावृत्तित्व म्मूलेऽभिहित मित्यभिप्रायेण तद्धाम परमम्ममेत्यंश व्याख्यानावसरे "अचि त्संसर्गवियुक्तं स्वरूपेणावस्थित म्मुक्तस्वरूपं परमं नियमनस्थान मित्यर्थः, तच्चा पुनरावृत्तिरूप" मिति तदेवोपपादितम् ॥ २१४ ॥

एव मुपपादयतां भाष्यकृताचार्य माशयः – देवतिर्यङ्मनुष्यस्थावरात्मना ऽ वस्थितस्य प्रत्यगात्मनो जननमरणयोगित्व लक्षणोत्पत्ति विनाशदर्शनेन कथं तस्याविनाशित्वं कथं वा तस्या पुनरावृत्तित्व मित्युक्ते – सर्वमिदं प्रकृतिसम्बन्धनिबन्धनं प्रकृतिसंसृष्टस्य विशिष्टात्मस्वरूपस्यैव नतु तद्वियुक्तस्य स्वरूपेणावस्थितस्य तस्य, तच्चा पुनरावृत्त्येवेति न दर्शिताशंकावकाश इति ॥ २१५ ॥

एवं कैवल्यार्थि प्राप्यभूत प्रकृतिवियुक्त प्रत्यगात्मस्वरूप प्रदर्शनस्थलेष्व पुनरावृत्तिशब्दं प्रयुंजानै र्भाष्यकारैः कैवल्यार्थिनो ऽ पुनरावृत्तिरेव प्रदर्श्यते ॥ २१६ ॥

यथोक्त मष्टमाध्याय द्वादश त्रयोदशश्लोकभाष्ये-"सयाति परमां गतिं - प्रकृतिवियुक्त म्मत्समानाकार मपुनरावृत्ति मात्मानं प्राप्नोतीत्यर्थः" इति ॥ २१७ ॥

एवं शारीरकभाष्यादिष्वपि कार्याधिकरणे श्रूयमाणा-पुनरावृत्तिकस्य पञ्चाग्निविदः प्रकृतिमिश्रात्मोपासने पुनरावृत्तिप्रसंगं अत एव हेतो स्तद्वियुक्तात्मोपासकत्वंच प्रतिपादयद्भि र्भाष्यकारै रुत्पत्तिविनाशयोगि प्रकृतितत्त्वस्य पंचाग्निवित्प्राप्यकोटि प्रवेशपरिहारेण दर्शित गीता

शास्त्रोक्तरीत्या प्राप्यविनाशायिनाशयोरेव पुनरावृत्त्य पुनरावृत्ति हेतुत्वं दर्शितम् ॥ २१८ ॥

किं बहुना, द्वादशाध्याये कैवल्यप्राप्यपरतृतीयादि श्लोकत्रय भाष्ये "य एव मक्षरमुपासते तेपि मां प्राप्नुवन्त्येव मत्समानाकार मसंसारिणमात्मानं प्राप्नुवन्त्येवेत्यर्थः, ममसाधर्म्यमागताइति हि वक्ष्यते, श्रूयते च निरंजनः परमं साम्य मुपैतीति, तथा ऽ क्षर शब्दनिर्दिष्टा स्कूटस्थादन्यत्वं परस्य ब्रह्मणोवक्ष्यत" इति भाषमाणै भाष्यकारैः कैव- ल्यार्थिनो ऽ पुनरावृत्त्यादिक म्पस्फुटमेवभाषितं भवतीतिनास्मिन्विषये भाष्यकाराशय विज्ञानाय तद्ग्रन्थान्तरं गवेषणीयम् ॥ २१९ ॥

अत्र स्वप्राप्यप्राप्त कैवल्यार्थिविषये मम साधर्म्यमागता इति चतुर्दशाध्याय द्वितीयश्लोकस्य निरञ्जनः परमं साम्य मुपैतीति श्रुतेश्च प्रमाणतया प्रदर्शनेन परेण ब्रह्मणा परमसाम्यापन्नं प्रत्यगात्म स्वरूप मेव कैवल्यार्थिनः प्राप्यं पुनरावृत्तिगन्धासहमिति सुष्ठु निरूपितं भवति; तादृशसाम्यस्य मोक्षदशामात्रसिद्धतायाः सर्वशास्त्रैरवगमात् २२०

"इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः । सर्गेपिनोपजायन्ते प्रळये नव्यथंतिचे" त्येवं रूपे चतुर्दशाध्याय द्वितीयश्लोके चेदृश साम्यापन्नस्य मुक्तकण्ठमेव पुनरावृत्त्यभावो ऽ विचाल्यो ऽ भिधीयते ॥२२१॥

दर्शित श्लोकश्रुत्यादिकं शारीरकभाष्यादिषु मुक्तैश्वर्यविषयतये- वा नेकस्थलेषूदाहृतम् ॥ २२२ ॥

मुक्तैश्वर्यविषये शारीरकशास्त्रचतुर्थाध्यायचतुर्थपादे – अविभा- गेन दृष्टत्वात् ॥ ४ ॥ ४ ॥ ४॥ इत्यधिकरणसूत्रभाष्ये परञ्ज्योति रूपस म्पन्नसर्वबन्धविनिर्मुक्तप्रत्यगात्मस्वरूपविषयतया दर्शितश्लोकश्रुत्यादिक मुदाहृतं भाष्यकारैः ॥ २२३ ॥

एव मन्यत्रा प्युक्तविषयतयो क्तश्लोक श्रुत्याद्युदाहरणं द्रष्टव्यम् ॥ २२४ ॥

किंच – आत्मानुभवलक्षणकैवल्यपुरुषार्थ स्सनकसनन्दनाद्या वासभूतलोकानुभाव्य इति हि भवन्मतम् ॥ २२५ ॥

यथोक्तं भवद्भि स्स्तोत्ररत्नचतुर्थश्लोकभाष्ये – योगिना ममृतं स्थानं स्वात्मसन्तोषकारिणा मित्यनेन स्वात्मानुभवपराणां स्थान मप्युक्तं – सनकादियोगिना ममृतं स्थानं स्वात्मसन्तोषकारिणामपि स्थानं भवतीत्यर्थ इति ॥ २२६ ॥

सनकसनन्दनाद्यावासभूतो लोकश्च जनलोकः, " द्वे कोट्यौ तु जनो लोको यत्र ते ब्रह्मण स्सुताः । सनन्दनाद्याः कथिता मैत्रेया मलतेजस " इति श्रीविष्णुपुराणद्वितीयांशसप्तमाध्यायवचनात् ॥२२७॥

तदुपरि च तपोलोकसत्यलोकौ द्वौ वर्तेते ॥ २२८ ॥

इत्थं च आब्रह्मभुवना ल्लोकाः पुनरावर्तिनोऽर्जुनेत्यादिना भग वता सत्यलोकशब्दित ब्रह्मलोकपर्यन्तानां तदन्तर्वर्तिनां च पुनरा वृत्तिप्रतिपादनप्रकरणे सत्यलोका धराधरजनलोकानुभाव्यपुरुषार्थस्य चिरकालस्थायित्वाभिप्रायकापुनरावृत्तिव्यपदेशः कथमिव संघटेत ॥२२९॥

यस्मा ल्लोका दूर्ध्वा र्ध्वलोकानुभाव्यपुरुषार्थः पुनरावृत्तिलक्षण स्सर्वनैव यस्मिन् प्रकरणे ऽभिधीयते ॥ २३० ॥ तल्लोकानुभाव्यपुरुषार्थ मपुनरावृत्तिलक्षणं तस्मिन्नेव प्रकरणे नह्यनुन्मत्तः कश्चि द्ब्रूयात् ॥२३१॥

ब्रह्मलोकान्तलोकानुभाव्य पुरुषार्थान्तराणां तत्प्राप्यस्थाननाशेन विनाशवत्तादृशलोकान्तःपातिजनलोकानुभाव्य पुरुषार्थस्यापि प्राप्य स्थानविनाशतो विनाशावश्यंभावेन तदनुभाविनां पुनरावृत्ति र्दु र्वर्जनीया ॥ २३२ ॥

किञ्च - पुनरावृत्तिलक्षणतया ऽभिहितपुरुषार्था दतिशयितदीर्घ कालावस्थायित्वाभिप्रायेणैव हि कैवल्यस्या पुनरावृत्तिलक्षणत्व मुक्त मिति भवद्भि र्वक्तव्यं, अन्यथा विलक्षणनिर्देशायोगात ॥ २३३ ॥

एवं च सत्यलोकान्तब्रह्माण्डोदरवर्तिकृत्स्नलोकानुभाव्य सर्वपुरु षार्थानां पुनरावृत्तिलक्षणत्वाभिधानपूर्वक मपुनरावृत्तिलक्षणतया ऽभि धीयमान मिदं मात्मप्राप्तिलक्षणं कैवल्यं ब्रह्माण्डोदरानुभाव्यकृत्स्न पुरुषार्थां द्ब्रह्माण्डविनाशकालनियतविनाशा दतिशयितचिरकालस्थायि ब्रह्माण्डबहिर्भूतलोकानुभाव्य पुरुषार्थरूपं सन्मोक्षरूपमेव पर्यवस्यति ; कैवल्यापुनरावृत्त्युक्ते रतिचिरकालावस्थायित्वाभिप्रायकत्वक भवदु त्त्यनुरोधेनापि - कैवल्यार्थिप्राप्यस्थानपरतया भवदुदाहृतेन तादृश स्थानस्याविनाशित्वरूपामृतत्वप्रतिपादनमुखेन ब्रह्माण्डबहिर्भूतत्वमेव ज्ञापयता - योगिना ममृतं स्थान मित्यादिश्रीविष्णुपुराणवचनेनापि चेति तस्य जनलोकानुभाव्यत्वकथन मनित्यत्वकथनं च स्ववचन भंगीप्रतिकूलं पूर्वोत्तरग्रन्थसन्दर्भा पर्यालोचनमूलं च स्फुट मवगम्य मानं विदग्धविबुधजनपरिहास्य मेव ॥ २३४ ॥

एवं भाष्यकारै रप्यष्टमाध्यायषोडशश्लोकभाष्ये - " ब्रह्मलोकपर्य- न्ता ब्रह्माण्डोदरवर्तिन स्सर्वे लोका भोगैश्वर्यालयाः पुनरावर्तिनः विनाशिनः - अत ऐश्वर्यगतिं प्राप्तानां प्राप्यस्थानविनाशा द्विनाशित्व मवर्जनीय " मिति ब्रह्माण्डोदरवर्तिकृत्स्नलोकानां भोगैश्वर्यानुभवस्थानत्वं तदनुभाव्यपुरुषार्थस्य पुनरावृत्तिलक्षणत्वं च प्रतिपादयद्भि रात्मप्राप्ति लक्षणकैवल्यपुरुषार्थस्य भवदभिमतरीत्या जनलोकानुभाव्यभोगैश्वर्य रूपत्वे कथ मपुनरावृत्तिलक्षणत्व मुच्येत ॥ २३५ ॥

अनित्यत्वेनाभिप्रेते स्फुटस्फुरद्विरोधायाः कैवल्यपुरुषार्थविषयिण्या मूलोक्ते रनेकस्थलस्थितायाः कथं वा विरोधो भाष्यकारै र्न परिह्रियेत ॥ २३६ ॥

सप्तमाध्यायषोडशश्लोकभाष्ये भेदेन निर्दिष्टयो रार्तार्थिनोः तयो र्मुखभेदमात्रं - ऐश्वर्यविषयतयैक एवाधिकार इत्येकजातीयाधि कारित्वमेव हि तै रुक्तं, निमित्तैक्यात् ॥ २३७ ॥

प्राक्चतुर्थवाक्योदाहृतस्तोत्ररत्न चतुर्थश्लोकभाष्यग्रन्थेन - भोग इह स्वर्गस्वाराज्यादिसुखानुभव स्स्वात्मानन्दानुभव श्चेत्येवंरूपेण कैवल्यस्य भोगैश्वर्य एव ह्यन्तर्भावो भवद्भिः कृतः ॥ २३८ ॥

भवदभिमतरीत्या कैवल्यस्य भोगैश्वर्यान्तर्भूततया भाष्यकारा भिमतत्वे चार्तार्थार्थिनो रिव कैवल्यार्थिनोपि भोगैश्वर्यार्थिलक्षणैक विधाधिकारिकोटावेव निवेशो भाष्यकारैः क्रियेत ॥ २३९ ॥

नच तथा निवेशः कृतः ॥ २४० ॥

तस्मा दार्तार्थार्थिनो र्भोगैश्वर्यार्थित्वलक्षणैकजातीयाधिकारिता मभिधाय जिज्ञासुशब्दितस्य कैवल्यार्थिन स्तत्रान्तर्भाव मनभिधाय पृथगधिकारिता मेवाभिदधतां भाष्यकृतां कैवल्यंनानित्यपुरुषार्थभूत भोगैश्वर्यान्तर्भूत मपितु नित्यपुरुषार्थभूतापवर्गैश्वर्य एवान्तर्भूत मित्ये वाभिमतमिति स्पष्ट मवगम्यते ॥ २४१ ॥

स्पष्टीभविष्यतिचेद मुपरिष्टा त्तृतीयविप्रतिपत्तिविचारे ॥ २४२ ॥

एव मष्टमाध्याये दशमश्लोके "भ्रुवोर्मध्ये प्राणमावेश्य"त्यैश्वर्यार्थिनः प्रयाणकाले भ्रूमध्ये प्राणस्थापनस्य, द्वादशश्लोके "मूर्ध्न्याधायात्मनः प्राण" मिति कैवल्यार्थिनो मूर्ध्निप्राणस्थापनस्य चाभिधानात् प्रयाणकाले तथा प्राणस्थापनस्य तत्तत्प्रदेशस्थनाडीतो निष्क्रमणार्थत्वाच्च मूर्धन्य नाड्या निष्क्रमण मपुनरावृत्तिलक्षण मोक्षपुरुषार्थहेतुः, तदन्य नाड्या निष्क्रमणं पुनरावृत्तिलक्षण पुरुषार्थान्तर हेतुरित्युपनिष त्प्रसिद्धरीते रेवोच्यमानत्वादपि कैवल्यार्थिन श्शताधिक मूर्धन्यनाड्या निष्क्रान्तस्य प्राप्यभूतं कैवल्यं नित्यपुरुषार्थभूता पुनरावृत्तिलक्षण मोक्षरूपमेवेत्यभि हितं भवति ॥ २४३ ॥

श्रूयते हि छान्दोग्याष्टमप्रपाठके षष्ठखण्डे षष्ठखण्डिकायां " शतंचैकाच हृदयस्यनाड्यस्तासां मूर्धानमभिनिस्सृतैका । तयोर्ध्वमायन्नमृतत्व मेति विष्वङ्ङन्या उत्क्रमणे भवन्ती " ति ॥ २४४ ॥

स्मर्यतेचायमर्थः –"ऊर्ध्वमेक स्थित स्तेषांयोभित्वा सूर्यमण्डलम् । ब्रह्मलोकमतिक्रम्य तेनयातिपरांगति" मिति याज्ञवल्क्यस्मृति तृतीया ध्याय सप्तषष्ट्यधिकशततमश्लोके ॥ २४५ ॥

अत्र श्रुतिस्मृत्योरमृतत्व परगतिशब्द प्रतिपन्नमोक्षं प्रत्येव हेतु ताया मूर्धन्यनाडीनिष्क्रमणस्य प्रतीत्या तादृशनाडीनिष्क्रान्तेन कैवल्यार्थिना प्राप्य णस्य कैवल्यपुरुषार्थस्य नित्यपुरुषार्थभूत मोक्षरूताहि स्पष्टा ॥ २४६ ॥

नच – मूर्धन्यनाडीनिष्क्रान्तस्यापि कैवल्यनिष्ठस्य मध्ये कैवल्य लक्षण नश्वरपुरुषार्थान्तरसत्त्वेपि नक्षतिः, अन्ततो ब्रह्मप्राप्तिलक्षण मोक्ष फला भ्युपगमेनतदर्थतया नाडीविशेष निष्क्रमणसार्थक्यसम्भवात्, अतोमध्ये सम्भावितस्य कैवल्यस्या नित्यत्वाभ्युपगमे नेदं बाधकमिति वाच्यं; दर्शित श्रुतिस्मृतिभ्यां मूर्धन्य नाडीनिष्क्रान्तस्य मध्ये फलान्तरानुभवविलम्ब मन्तरेणैव मोक्षफलावाप्तेः प्रतिपाद्यमानतया दर्शित कल्पनाया अत्रावकाशासम्भवात् । दर्शितकल्पनायाः प्रमाणलेश स्पर्शाभावस्य प्रागेवाभिहितत्वात् । मोक्षेतरपुरुषार्थार्थितादशायामपि मूर्धन्य नाडीनिष्क्रमणार्चिरादिगत्यादि स्वीकारे मधुविद्यानिष्ठानां ब्रह्म लोकस्यैश्वर्यं मनुभूय ब्रह्मणासह मोक्षकांक्षिणामपि च स्वप्राप्यार्वाचीनफलप्राप्त्यर्थं गमनारम्भदशायामेव तत्स्वीकारप्रसंगा त्तत्रप्रमाणलेशाभावा त्प्रत्युतप्रमाणविरोधाच्च ॥ २४७ ॥

तदिदं व्यक्ती भविष्यत्युपरिष्टात् ॥ २४८ ॥

इदमत्रावधेयं, कैवल्यपुरुषार्थस्या नित्यत्वं सर्वथैवासम्भावितं- तदनित्यत्वस्य तद्विच्छेदरूपत्वात् । कैवल्यार्थिनाम पुनरावृत्ते र्गीताशास्त्रादिषु बहुधोद्घुष्यमाणत्वात । तत्तत्पुरुषार्थार्थिनां पुनरावृत्त्यपुनरावृत्ति व्यपदेशस्य तत्तत्पुरुषार्थविच्छेद तदभावपरत्वात् । कैवल्यार्थिनां तत्प्राप्त्यनन्तरं तद्विच्छेदस्य दुर्वचत्वाच्च ॥ १ ॥

तत्तत्पुरुषार्थविच्छेदश्च तत्तत्पुरुषार्थहेतुप्राप्यवस्तुनश्वरत्वस्वभावप्रयुक्तो वा तदनुभवस्थानाविनाशप्रयुक्तो वा वाच्यः ॥ २ ॥ तत्र प्राप्यवस्तु नश्वरत्वस्वभावप्रयुक्त स्ताव त्तस्य विच्छेदो न सम्भवति, कैवल्य पुरुषार्थस्य प्रकृतिवियुक्तप्रत्यगात्मस्वरूपानुभवलक्षणतया तादृशात्म स्वरूपस्य कदापि नाशासम्भवात् ; प्रकृतिविशिष्टप्रत्यगात्मस्वरूपस्य प्राप्यत्व एव क्षरणशीलप्रकृतिरूपविशेषणनाशप्रयुक्त विशिष्टप्राप्यानु भवलक्षणपुरुषार्थविनाशप्रसंगावकाशसम्भवा च्च ॥ ३ ॥ अत एवोक्तं श्रीविष्णुपुराणे प्रथमांशे द्वाविंशाध्याये – " तत्रान्यज्ञानरोधेन योगिनो यान्ति ये लयम् । संसारकर्षणोप्तौ ते यान्ति निर्बीजतां द्विजे"ति ॥ ४ ॥ कैवल्यार्थ्यपुनरावृत्तिविषयस्या स्य श्लोकस्याय मर्थः । ये योगिनः - आत्म योगिनः । तत्र – पूर्वोक्तलक्षणे प्रत्यगात्मस्वरूपे । अन्यज्ञान रोधेन - पदार्थान्तरस्मृतिनिरोधेन - तदेकविषयान्तिमस्मृत्येति यावत् । लयं - उपाधिवियोगेन स्वस्वरूपेणा वस्थानम् । यान्ति – स्थूलसूक्ष्मा चित्संसर्गलक्षणसकलोपाधिविनिर्मुक्ताविर्भूत स्वस्वरूपा भवन्तीति यावत् । हे द्विज । ते – प्रकृतिविनिर्मुक्तप्रत्यगात्मस्वरूपावाप्तिलक्षण कैवल्याख्यपुरुषार्थं प्राप्तवन्त आत्मयोगिनः । संसारकर्षणोप्तौ – कृष्यत इति कर्षणं क्षेत्रं, संसारकर्षणे – प्राकृतविषयभोगहेतुसंसार रूपक्षेत्रे, उप्तौ – सस्यावापे । निर्बीजतां - तत्प्रयोजकवासनारेणु लक्षणबीजरहिततां । यान्ति - वितुषव्रीहीणा मंकुरणहेतुतुषांशाभावेन सस्यारम्भहेतुताविलयव त्सकलोपाधिविनिर्मोक्षदशापन्नप्रत्यगात्मनामपि पुनश्शरीरारम्भहेतुभूत वासनारेणुलक्षणसूक्ष्मतम प्रकृतिसंसर्गस्यापि निश्शेषनिवृत्त्या पुनस्संसारारम्भहेतुताविलीयतएवेतियावत् । तथाचै तेषां पुनरावृत्तिस्वरूपयोग्यतागन्धस्व नाविद्यतइति ॥ ५ ॥ इमंश्लोकं- "आत्मयोगिनामन्तिमप्रत्ययेनावश्यंभाव्यं, अन्यथा पुनरावृत्ते" रित्यर्थतया व्याकुर्वद्भि श्श्रीविष्णुचित्तार्यैरपि "कृष्यतइति कर्षणं केदा रः, संसारकेदारे, उप्तौ - सस्यावापे, वितुषव्रीहिवदबीजतां यान्ती" ति

वद्भिरयमर्थः स्पष्टं ज्ञापितः ॥ ६ ॥ तथाच - कैवल्यं प्रमानांसंसारमण्डळे पुनरावृत्तिप्रसंगस्यैव नावकाशइत्यवगम्यते कैवल्यपुरुषार्थस्व रूपपरामर्शे॥ ७ ॥ प्राप्यस्थानविनाशेनापि नैतेषां पुनरावृत्तिः स्तुयत्वा, पंकमध्यएव पंकलेपनिश्शेषनिवृत्तिव त्प्रकृतिमण्डलएव निश्शेषप्रकृति संसर्गनिवृत्ते रप्यसम्भावितत्वेन निश्शेषप्रकृतिसंसर्गविमुक्त प्रत्यगात्म स्वरूपलक्षणकैवल्यपुरुषार्थस्य प्रकृतिमण्डळे दुष्प्रापतया तत्प्राप्तिस्थानस्य प्रकृतिमण्डलबहिर्भूत नित्यविभूत्येकदेशरूपतायाः एव वक्तव्यतया तथाभूतस्या नित्यत्वप्रसंगाभावेन नित्यत्वात् । योगिनाममृतस्थानमित्यादि वचनेनापि तथात्वस्यैव ज्ञापनात् । अन्यथा ब्रह्मनिष्ठानामपि निश्शेषाविद्यानिवृत्ते र्देशविशेषसापेक्षतायाः विलयप्रसंगाच्च ॥ ८ ॥ व्यक्तीभविष्यति चैतत्तत्त्वमुपरिष्टा द्यथावसरम् ॥ ९ ॥ तस्मात्कैवल्यपुरुषार्थस्या नित्यत्वं सर्वथैवासम्भवदुक्तिकमिति ॥ २४९ ॥

तथाच - कैवल्यार्थिनां गीता तद्भाष्यादि ष्वसकृदनावृत्ति प्रतिपादनमेव प्रमाणान्तरनिरपेक्षं कैवल्यपुरुषार्थस्य नित्यत्वं दुरपह्नवं साधयतीति प्रमाणान्तरोपन्यास प्रयासो प्यनुपादेय एवेति सिद्धम् ॥ २५० ॥

अत्र पूर्वपक्षिणो वदन्ति - द्वौतावत्कैवल्यनिष्ठौ । तत्र ब्रह्मात्मकस्वात्मानुसन्धान लक्षणोपासननिष्ठः पञ्चाग्निविच्छब्दित एकः, तस्यापि मध्ये कतिपयकालानुभाव्यतया कैवल्यपुरुषार्थाभ्युपगमात् । आत्ममात्रोपासकोन्यः । तत्र प्रथमस्य मध्ये चिरकालं कस्मिंश्चि ल्लोकविशेषे कैवल्यपुरुषार्थानुभवा त्पश्चाद्ब्रह्मप्राप्तिस्वीकारा द्वितीयस्य तु पुनरावृत्तेरेव स्वीकाराच्च द्वयोरप्यधिकारिणोः किंचित्कालानुभवगोचरस्य पश्चान्निवर्तमानस्य च कैवल्यपुरुषार्थस्यानित्यत्वं सर्वथैव दुरपह्नवम् । तत्र पंचाग्निविच्छब्दितस्य प्रथमस्यैव गीतासप्तमाध्याय षोडशश्लोके - आर्तो जिज्ञासु रर्थार्थी त्यत्र जिज्ञासुशब्देन निर्देशः । तस्यैवच गीता तद्भाष्ययो र्मूर्धन्य नाडीनिष्क्रमणा पु-

त्वरावृत्त्यर्चिरादिगतीना मभिधानम् , नतु द्वितीयस्य । प्रथमस्याप्य पुनरावृत्त्यभिधानं पुनरवरोहाभावमात्रा भिप्रायकम् । नच तावता कैवल्यपुरुषार्थस्य नित्यत्वसिद्धिः , तन्निवृत्तिपूर्वकमेव तस्य ब्रह्म प्राप्तेः पश्चादभ्युपगमादिति ॥ २५१ ॥

तदिदमुक्तं तै गीताष्टमाध्याये त्रयोविंशचतुर्विंशश्लोकभाष्य तात्पर्यचन्द्रिकायां - "अयं पंचाग्निविद्यानिष्ठो न केवलात्मोपासकः - अपितु ब्रह्मात्मक स्वात्मानुसन्धायीतिभाव" इति, "पंचाग्निविदोपि ब्रह्म प्राप्तिरस्त्येवेति स्वीकर्तव्यम् । तत्र प्राप्तौ ज्ञानिनां परमात्मा स्ववि-शिष्टो भोग्यः । अक्षरयाथात्म्यनिष्ठानान्तु स्वस्वरूपमेव पूर्वं भोग्यम् । वस्वादिपदप्राप्तिपूर्वक मधुविद्यान्याया दन्ततो ब्रह्मप्राप्ति"रिति , " नचा त्र जिज्ञासो रन्यएवात्म याथात्म्यविदिति भाष्यते - जिज्ञासुवेद्यतयो क्त स्वभावविसर्गयो रत्र च पंचाग्निविद्योदाहरणात् । मध्येच कैव-ल्यार्थिनएव मूर्धन्यनाड्यानिष्क्रमण मनावृत्ति श्चोक्ते" ति , "अतएव सप्तमे प्रकान्तो जिज्ञासुः परमात्मप्राप्तिकाम ज्ञानिव्यतिरिक्तत्वा दत्र ब्रह्मात्मक स्वात्मानुसन्धायीति नभ्रमितव्य"मिति , "अर्चिरादिगतिनिषेध स्तु ब्रह्मात्मकस्वात्मानुसन्धानरहित स्वात्मोपासनविषय" इति, " यत्पु नरुच्यते - येतु शिष्टा स्त्रयो भक्ताः फलकामाहि तेमताः । सर्वे च्य वनधर्माण इति - तत्राप्यात्ममात्रानुभव सुखस्या स्थिरत्वादेव च्यव नधर्मत्व मुच्यते - नच तावता पुनस्संसारप्रसंग" इति , "एवमव्यक्ता दितत्वचिन्तकानामिव प्रत्यगात्मतत्वचिन्तकानामपि तदुचितदेश कालं ततो तिशयितं फलमुपपद्यते , अतएव हि भूमविद्यायां प्रत्य गात्ममात्रोपासकस्या प्यतिवादित्व मुक्तम् । ब्रह्मात्मकस्वात्मानुसन्धा नेतु ब्रह्मप्राप्तौ विश्रमादपुनरावृत्ति रिति विशेषः । अतएवाक्षरानुभव स्यां तवत्त्वे तदर्थिनः कथं कैवल्यार्थिव दपवर्गाधिकार्यन्तरत्वमित्य पि निरस्तम् - बाह्यान्तरभोक्तव्यविभागा दावृत्त्यनावृत्ति योग्यता-भेदाच्च तद्भेदोपपत्ते"रिति च ग्रन्थेन ;- विंशैकविंशश्लोकभाष्यतात्पर्य

न्द्रिकायां - "वक्तव्याच कैवल्यार्थिनामवरोहाभावा दपुनरावृत्तिः । अत एव तत्परमेवेदं श्लोकद्वय"मिति, "नकेवलं भगवत्प्राप्तिरेवा पुनरावृत्तिरूपा - किन्तु परिशुद्धजीवप्राप्तिर प्यवरोहणाभावात्तथेति भाव'' इति-च;- ग्रन्थेनच ॥ २५२ ॥

तदेतत्सर्वं पूर्वपक्षिणां भाष्यव्याख्याकरग्रन्थविरुद्धं स्वोक्तीनामेव परस्परविरुद्धं प्रमाणलेशविधुरं केवल स्वोत्प्रेक्षाविजृम्भित विपरीत तर्कमूल मसमंजसंचे त्यनादरणीयमेव प्रामाणिकैः ॥ २५३ ॥

द्विविधकैवल्यनिष्ठकल्पनं तावदमूलकमेव, प्राचीनभाष्यव्याख्याकर ग्रन्थेषु प्रमाणेषु चैकविधस्यैव कैवल्यनिष्ठ स्योपलम्भेन द्विविधयोः कैवल्यनिष्ठयोः क्वाप्यनुपलम्भात । द्वयोः प्रामाणिकत्वे गीताभाष्ये भाष्यकारै रसकृ त्कैवल्यनिष्ठस्वरूप तत्फलोपासनादिस्वरूपं वर्णयद्भिः - एकस्य स्वरूपादिक मीदृशम् - अन्यस्यान्यादृशमिति विवेकस्या वश्यप्रदर्शनीयस्याकथने सामान्यत एकस्यैव कथनेच्च कारणाभावात् । श्रीभाष्यघटकस्य कस्यचिद्वाक्यविशेषस्या न्यादृशकैवल्यनिष्ठविषयकत्वाभिमानस्या दर्शीयस्य यथावस्थितभाष्यार्थापरिज्ञान निबन्धनत्वाच्च ॥ २५४ ॥

तदिदं व्यक्तीभविष्य त्युपरिष्टादितीह तत्प्रपंचनादुपरम्यैतदभ्युपगमानुरोधेप्यदर्शीय वाक्यार्थासामंजस्यं ताव न्निरूप्यते ॥ २५ ॥

गीता तद्भाष्ययोः कैवल्यनिष्ठस्या पुनरावृत्तिवर्णनं पुनरवरोहाभावमात्रविषयतया न कैवल्यनित्यत्वसाधकमिति कथनं त्वयुक्तं, तत्रस्था पुनरावृत्तिशब्दस्य तदधिकारि प्राप्तपुरुषार्थस्य पश्चाद्विनाशापरपर्याय तन्निवृत्त्यभावमात्र बोधकत्वेना वरोहाभावपरत्वाभावात् ॥ २५६ ॥

अत एव - आब्रह्म भुवनाल्लोकाः पुनरावृत्तिनोऽर्जुने त्यष्टमाध्याय षोडशश्लोकभाष्ये - "ब्रह्मलोकपर्यन्ता ब्रह्माण्डोदरवर्तिनस्सर्वे लोका भोगैश्वर्यालयाः, पुनरावर्तिनः - विनाशिनः । अत ऐश्वर्यगतिं प्रा

मानां प्राप्यस्थानविनाशाद्विनाशित्वमवर्जनीय " मिति व्याकुर्वद्भि र्भाष्य कारैः पुनरावृत्ति र्विनाशरूपैव व्याख्याता ॥ २५७ ॥

इत्थ मैश्वर्यार्थिनां प्राप्यपुरुषार्थस्य पुनरावृत्तिशब्देन विनाशं प्रतिपाद्य तत्प्रतिकोटितया कैवल्यार्थिनां पुरुषार्थस्य ततो वैलक्षण्य प्रतिपादनार्थं मेकविंशादिश्लोक तद्व्याप्यप्रयुक्तस्या पुनरावृत्तिशब्दस्या विनाशित्वपरता हि दुर्वारा ॥ २५८ ॥

किञ्च – ऐश्वर्यार्थि पुरुषार्थस्यैव प्राप्यवस्तु विनाशप्रयुक्त विनाशावर्जनीयत्तायाः कैवल्यार्थि पुरुषार्थस्यापि प्रसक्तायाः परिहारार्थं विंशश्लोके – यस्ससर्वेषु भूतेषु नश्यत्सुन विनश्यतीति तत्प्राप्यात्मवस्तुनो विनाशाभाव प्रतिपादनपूर्वकं तत्पुरुषार्थस्या विनाशित्वप्रदर्शनायकृत एकविंशश्लोके – यं प्राप्यननिवर्तन्ते तद्धाम परमम्ममेत्य पुनरावृत्ति निर्देशः – कैवल्यपुरुषार्थस्य प्राप्यवस्तु विनाशप्रयुक्त विनाशितायां नावकाश इत्येतत्पर इत्यत्रत्या पुनरावृत्तिपरशब्दाना मविनाशित्वपरता-हि दुरपह्नवा ॥ २५९ ॥

एवं – कैवल्यपुरुषार्थस्य ब्रह्माण्डोदरवर्तिजन लोकानुभाव्यतया भवद्भिस्स्वीकारेण तदनुभव क्लृप्तकालात्प्रागेव कदाचि न्महाप्रळय प्रसक्तौ ब्रह्माण्डस्यैव विनाशेनैश्वर्यपुरुषार्थनिष्ठानामिव पंचाग्निविद्रूप कैवल्यपुरुषार्थनिष्ठानामपि स्वप्राप्यपुरुषार्थस्थानभूतजन लोकविनाशात्त त्पुरुषार्थनाश प्रत्यवरोहरूप पुनरावृत्त्यो र्दुर्वारतदा तदीयापुनरावृत्तेः प्रत्यवरोहाभाव रूपतया समर्थनमपि न निर्वहत्येव ॥ २६० ॥

एवम पुनरावृत्ते रवरोहाभावमात्ररूपतां वर्णयित्वा कैवल्यानुभव स्थाना त्परमव्योमाधिरोहिणां पंचाग्निविदां कैवल्यानुभव निवृत्त्या कैवल्यस्यानित्यत्तानिरूपण मप्य साधु, प्रकृतिवियुक्तात्मानुभवरूप कैवल्यपुरुषार्थस्याधो ऽवरोहे प्रकृत्यावरणविशेषवशा त्कथंचि न्निवृत्तेस्स-म्भवद्वुक्तिकावे प्यूर्ध्वाधिरोहे प्रकृत्यावरणप्रसंगस्यै वाभावेन – अधि-

कंश्चिदिति न्यायेन भगवदनुभवस्याधिकस्य सम्भवेपि प्राक्प्राप्तस्य प्रकृतिवियुक्तप्रत्यगात्मानुभव लक्षण कैवल्यपुरुषार्थस्य विच्छेद कथा प्रसंगस्यैवाभावात् ॥ २६१ ॥

एवं प्रागुदाहृत श्रीविष्णुपुराण द्वाविंशाध्यायवचनेन कैवल्यस्य विषयप्रावण्य हेतु पुनर्लेपक्लेश प्रसंगासहिष्णु निश्शेष प्रकृतिसंसर्ग विलयरूपतया स्स्पष्टमेवावगमेन प्रकृतिवियुक्त प्रत्यगात्मस्वरूपानुभवलक्षण कैवल्यपुरुषार्थस्य सकृत्प्राप्तौ पुनर्विच्छेदस्यैव न प्रसंगावकाशः – प्रकृत्या प्रत्यगात्मतिरोधान प्रसंगस्यैवाभावात् ॥ २६२ ॥

अत एव भाष्यकारैरपि – गीता द्वादशाध्यायस्थ कैवल्यार्थि प्राप्यभूत प्रकृतिवियुक्त परिशुद्ध प्रत्यगात्मस्वरूपपर तृतीयादिश्लोकभाष्ये – "अपरिणामित्वेन स्वासाधारणाकारान्नचलति न च्यवतइत्यचलं-तत एव ध्रुवं नित्य" मित्यनेन – यादृशावस्थापन्न प्रकृतिवियुक्त परिशुद्ध प्रत्यगात्मस्वरूपस्य प्राप्तस्य पुनस्स्वासाधारणाकारा च्यवनं विना नित्यैकरूपत्वं – तादृशप्रत्यगात्मस्वरूपस्यैव कैवल्यार्थिना मुपास्यतावर्णनं, "य एव मक्षरमुपासते तेपि मां प्राप्नुवन्त्येव –. मत्समानाकार मसंसारिणमात्मानं प्राप्नुवन्त्येवेत्यर्थः। ममसाधर्म्यमागता इति हि वक्ष्यते। श्रूयतेच – 'निरंजनः परमंसाम्य मुपैती' ती"त्यनेन – तेषां यथोपासनमेव – प्रकृतिसम्बन्ध गन्धराहित्यलक्षण निरंजनत्वेन परेण ब्रह्मणापरमसाम्यापन्न पुनस्संसारगन्धा सहिष्णुदशापन्ना संसार्यात्मस्वरूप प्राप्तिवर्णनं च संगच्छते ॥ २६३ ॥

अत्र – "इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः। सर्गेपि नोप जायन्ते प्रळये नव्यथंतिचे" ति चतुर्दशाध्याय द्वितीयश्लोकोदाहरणेन " निरंजनः परमं साम्यमुपैतीति श्रुत्युदाहरणेन च कैवल्यनिष्ठानां स्वोपासनानुगुण स्वप्राप्यभूत प्रकृतिवियुक्त परिशुद्ध प्रत्यगात्मस्वरूप प्राप्तिः पुनस्संसारसम्बन्ध गन्धासहिष्णु निश्शेषप्रकृतिसम्बन्ध विलय लक्षण मुक्तिरूपनित्य पुरुषार्थएवेति स्पष्टमुपदर्शितं भाष्यकारैः ॥२६४॥

तदिदमेव - " यं प्राप्य ननिवर्तन्ते तद्धाम परमं मम " इत्यष्टमाध्यायश्लोकेन - " तन्मम परमंधाम परमं नियमनस्थानं " अचेतनप्रकृतिरेकं नियमनस्थानम् - तत्संसृष्टरूपा जीवप्रकृतिर्द्वितीयं नियमन स्थानम् - ' अचित्संसर्गवियुक्तं स्वरूपेणावस्थितं मुक्तस्वरूपं परमं नियमनस्थानमित्यर्थः , तच्चा पुनरावृत्तिरूप " मित्येवं रूपेण तद्भाष्येण च दर्शितमित्यतोऽत्रत्या पुनरावृत्तिप्रतिपादनस्यावरोहाभावमात्र विषयतावर्णनेन कैवल्यपुरुषार्थस्यानित्यतावर्णनं पूर्वपक्षिणां पूर्वोत्तरग्रन्थ परामर्शाभावमूलमेव - तत्परामर्शे पूर्वोक्तरीत्या तन्नित्यताया एव सिद्धेः ।। २६५ ॥

इत्थं कैवल्यपुरुषार्थस्वरूप शोधकप्रमाणै स्तत्स्वरूपस्य पुनस्संसारसम्बन्धगन्धानर्ह मुक्तिलक्षण नित्यपुरुषार्थरूपताया एव सिद्ध्या स्वैरं द्विविधानां कैवल्यनिष्ठानां कल्पनं तेषां बाह्यान्तरभोक्तव्यविभागकल्पनम् - तत्र केषांचित्पुनरावृत्तेरेव कल्पनम् - अन्येषा मूर्ध्वाधिरोह मङ्गीकृत्या धोऽवरोहाभावमात्रेणा पुनरावृत्ति समर्थनम् - अन्तत उभयेषामपि कैवल्यपुरुषार्थस्या नित्यतावर्णनं चे त्येवमादिकं सर्वं पूर्वपक्षिणां स्वोत्प्रेक्षामात्रविजृम्भित विपरीततर्कमूलमेवेति सिद्धम् ॥ २६६ ॥

किंच - सर्वे च्यवनधर्माण इति मोक्षधर्मवचनप्रकरणस्य - चतुर्विधा भजन्ते मामित्यादि गीतासप्तमाध्याय वचनप्रकरणस्य चै ककण्ठतायाः सप्तमाध्यायसप्तदशश्लोक भाष्यतात्पर्यचन्द्रिकायां पूर्वपक्षिभिरेवाभिहिततया सर्वे च्यवनधर्माणइत्यत्र ज्ञानीतराधिकारित्रयविषय सर्वशब्दस्य पंचाग्निविद्रूपकैवल्यनिष्ठ संग्राहकत्वेपि तदितरकैवल्यनिष्ठासंग्राहकत्वेन तस्य पुनरावृत्तिमत्व मनित्यत्वंच पूर्वपक्ष्यभिमानानुरोधेपि सुतरामेव न केनापि प्रमाणेन सिद्ध्यति, दर्शित- मोक्षधर्मवचनस्य तद्विषयकत्वाभावात् - तद्ग्राहकप्रमाणान्तरस्य कस्यचित्तै रनुदाहरणाच्च ॥ २६७ ॥

एवं केषांचित्कैवल्यनिष्ठाना मूर्ध्वाधिरोहेणान्येषा मधोवरोहेणञ्च तदीयपुरुषार्थानित्यत्ववर्णनं प्रमाणविरुद्धम प्युपलभ्यते स्पष्टम् ॥ २६८ ॥

भगवच्छास्त्रे वृद्धब्रह्मसंहितायां प्रथमपादे द्वितीयाध्याये – " सं-प्राप्याचार्य चरण मुपाय मवगत्य च । मदाज्ञाकारिणो भूत्वाह्याजीवं प्राकृतान्तनुम् । हित्वा मुक्तायेभवन्ति द्विविधास्ते प्रकीर्तिताः । केवलास्सेवकाश्चेति केवलास्तनुवर्जिताः । सेवकाद्विविधाज्ञेयाः किं-कराश्रूपसेवकाः । कैंकर्यं गन्धमाल्यादि मार्जनालेपवर्तनम् । पक्ष्म-पाताखह प्रेमवीक्षणं रूपसेवनम् । एवम्मुक्ता महादेवि मम लोके विशन्ति हि । " इत्यादिना केवल सेवकभेदेन मुक्तद्वैविध्यं तत्र केव-लानामशरीरत्वं सेवकानां सेवनौपयिक शरीरयोगं द्विविधानामपि नित्य विभूतिप्रवेश सद्भावंचाभिधाय; ततः किञ्चिदुपरिष्टात् - "मामेवशरणंयाता स्सर्वभावेनासिन्धुजे । अतीतादुस्तरान्मायां केवला स्सेवकाहिवा । ब्रह्मोमत्पदंयाता स्सेवका स्सेवकामम । गमना गमनैर्मुक्ताः केव-लास्तुभवन्ति ही " ति केवलानां सेवकानांच द्विविधानामपि मुक्तानां भगवन्तमेव शरणमुपगम्य भगवत्सम्बन्धिनित्य विभूत्याख्य महालोक प्रवेशनिबन्धन दुस्तरमायातीतत्वं परमविशेषेणाभिधाय, तत्र सेवका-ख्यानां परं भगवदनुभवा साधारणस्थानरूप परमपदं प्राप्य भगव त्सेवकभावेनावस्थानमभिधाय, केवलाख्यानांतु तदधस्ता त्संसारमण्ड-लोपरिष्टाच्च मध्य एवोर्ध्वस्थित परमपदाधिरोहलक्षण गमनाभावस्थिता संसार मण्डलावरोह लक्षणागमन विनिर्मुक्ततयैवावस्थानं च ाह स्पष्टमभिधीयते ॥ २६९ ॥

तदिदं सर्व मभिसन्धायैवोक्तं लोकगुरुभिरपि स्पष्टमर्थ पंचक रहस्ये - "केवलोनामे" त्यारभ्य तत्स्वरूप प्रपंचनपूर्वकं – "योगफलभूता-त्मानुभवमात्रमेव पुरुषार्थतयानुभूय पश्चा त्संसारसम्बन्ध भगवत्प्राप्ति स्वरूपयोग्यताविळयंप्राप्य यावदात्मभाग्यशरीरचारी काश्च" दिति॥२७०॥

तस्मात्प्रत्युत प्रमाणविरोधादपि कैवल्यनिष्ठाना मूर्ध्वाधिरोहाथो ऽवरोहकल्पनासम्भवेन कैवल्यपुरुषार्थस्य नित्यताया दुरपह्नवंसिद्ध्या तदनित्यत्ववर्णनं सर्वथैवासम्बद्धम् ॥ २७१ ॥

अतो गीतादौ कैवल्यार्थिना मपुनरावृत्तिवर्णनं नावरोहा भाव मात्राभिप्रायकं- अपितु पूर्वोक्तरीत्या कैवल्यपुरुषार्थ नित्यत्वाभिप्रायकमेवेति सिद्धम् ॥ २७२ ॥

तदनुभवस्थानमपि संसारमण्डलादूर्ध्वं परमव्योमैकदेशरूपं नित्य मेवेति व्यक्तीभविष्यत्युपरिष्टात् ॥ २७३ ॥

यत्तु- वेदान्ताचार्यकुमारै र्वरदाचार्यैः रहस्यत्रय सारसंग्रह चरमाधिकारे- कैवल्यार्थिनः पूर्वकर्मावशेषा त्पुनर्विषयानुभवस्वीकारेण च्यवनधर्मत्वोपपादनं पश्चात्कर्मपरिपाकविशेषवशेन भगवदुपासनेतदर्थी नाचिरादिगति भगवत्प्राप्तिस्वीकारेणा पुनरावृत्त्युपपादनञ्चकृतम् ॥२७४॥

तदत्यन्तासेयं- तथासति संसारिमात्रस्या पुनरावृत्तिस्य कथन सम्भवे मैश्वर्यार्थिनां पुनरावृत्तेः कैवल्यार्थिना मपुनरावृत्तेश्च विभज्य कथने कारणाभावात् ॥ २७५ ॥

तत्फलोद्देश्यक तदुपासन निष्ठस्या पुनरावृत्तिकथनं तदुपासन साध्य तत्फल सिद्ध्य व्यवहितोत्तर काल विषयमेवाहि वाच्यं ॥२७६॥

इत्थं च कैवल्यप्राप्ति पश्चात्सन ब्रह्मोपासन साध्य ब्रह्मप्राप्ति लक्षण फलानन्तर मपुनरावृत्ति सम्भवे तस्याः ब्रह्मोपासन फलभूतायाः [illegible] फल रूपत्वाभावेन कैवल्यार्थिनो ब्रह्मोपासकेभ्यः पार्थक्येना पुनरावृत्तिकथनं निरर्थकमेव ॥ २७७ ॥

गीताष्टमाध्याय चर्योविंश चतुर्विंशश्लोकद्वयभाष्येन्च- पृथक्पृथ गात्यपुनरावृत्ति [illegible] हेतुनैव- तत्र इत्थं विदुरित्यादिश्रुते [illegible] भाष्यकारै स्समर्थितम् ॥ २७८ ॥

अतः कैवल्यार्थिविषये पृथग्गत्यपुनरावृत्त्यभिधानं कैवल्यार्थिनां [illegible] तदायत्तगति [illegible] नातिव्यवहितोत्तरकाला पुनरावृत्तिविषयकत्वमन्तरेण न कथंचिद् प्युपपद्यत इति न किञ्चिदेतत् ॥ २७९ ॥

कैवल्यनिष्ठस्यैव पंचाग्निविद्रूपतायाः वक्ष्यमाणत्वा त्तस्यचार्चिरादि गत्या निष्प्रत्यूहं एवभवतः स्वमाप्यपुरुषार्थं प्राप्यपुनरावृत्ती ब्रह्म निष्ठवदेवेति च व्यक्तीभविष्यत्युपरिष्टात् ॥ २८० ॥

यद्यपि क्रममुक्त्यधिकारिविषये कथंचिद् पुनरावृत्तिव्यपदेशः क्वचित्सम्भवति ॥ २८१ ॥

तथापि कैवल्यार्थिविषया पुनरावृत्तिव्यपदेशो न क्रममुक्तिज्ञापको वक्तुं शक्यः- द्वयोरधिकारिणो विभज्यनिर्दिष्टयो स्तुल्यतया पृथग पुनरावृत्तिव्यपदेशस्य तुल्यकालविषयस्यैव वक्तव्यत्वेन तद्विरोधात्- सूत्रकारैरपि तद्य इत्थं विदुर्येचेमे ऽरण्ये श्रद्धातपइत्युपक्रम्य इत्याद्य पुनरावृत्तिश्रुते रव्यवधानेन ब्रह्मप्राप्तिं प्रतिपादयन्त्याः क्रममुक्तिपरत्वासम्भव मभिप्रेत्यैववादरिपक्षस्य- तत्रापि तुल्यतया द्विविधाधिकारिणा मव्यवधानेन ब्रह्मप्राप्तिमपुनरावृत्तिं च प्रतिपादयन्त्या स्तस्या एकविधाधिकारिणां क्रममुक्तिपरतायाः - अन्यविधाधिकारिणा मव्यवहित मुक्तिपरतायाश्चसुतरामेवा सम्भवमभिप्रेत्यैव जैमिनिपक्षस्य च निरासदर्शनाच्च ॥ २८२ ॥

एवं कैवल्यपुरुषार्थस्या नित्यत्वकथनं सकलप्रमाण पूर्वाचार्यश्रीसूक्तीनां विरुद्धमित्युपपादितमेव खलु प्राक् ॥ २८३ ॥

स्वोक्तिविरुद्धमप्युपलभ्यत इत्यतोपीदमनित्यत्व वचनं त्याज्यं हेयम् ॥ २८४ ॥

इदमत्रावधेयं, पूर्वपक्षिभिर्हि रहस्यत्रयसार स्तोत्रभाष्यतात्पर्यचन्द्रिकादिषु कैवल्यपुरुषार्थस्यानित्यत्वं वर्णितं, न्यायसिद्धांजन जीवपरिच्छेदान्तेतु- " अनपायि योगसाध्यमैश्वर्य" मिति वरदविष्णुमिश्रवाक्य मुदाहरद्भिरेभिरेव तस्य नित्यत्वं निरूपितं, एवं - तात्पर्यचन्द्रिकायां गीतायां सप्तमाध्याय षोडशश्लोके तद्भाष्ये च- जिज्ञासुशब्देन प्रकृतो ऽष्टमाध्याय द्वाविंशश्लोक तद्भाष्यपर्यन्तग्रन्थेन स्वानुगुण स्वरूप फलोपासनादिभि निरूप्यमाणः प्रस्तुतोयः कैवल्यनिष्ठः- स एव तदुपरितन श्लोकावतारिकाभाष्ये- अथात्मयाथात्म्यविदः परमपुरुषनिष्ठस्य च साधारणीमर्चिरादिकां गतिमाहेत्यादिरूपे आत्मयाथात्म्य विच्छब्देना प्युच्यतइत्यभिहितं, न्यायसिद्धांजनतु- यस्त्वयं- आत्मयाथात्म्यविदः परमपुरुष निष्ठस्य च साधारणीमर्चिरादिकां गतिमाहेत्यादिग्रन्थः- सतुप्रस्तुतत्वमात्रेण कैवल्य निष्ठ परमपुरुष निष्ठविषय इतिनमन्तव्यं, किंतुपरमात्मात्मक स्वात्मानुसन्धातृ स्वात्मशरीरकपरमात्मानुसन्धातृभेदभिन्न ब्रह्मविद्विषय एवेत्यादि ग्रन्थे दर्शिताष्टमाध्याय द्वाविंशश्लोक तद्भाष्यपर्यंतग्रन्थे पूर्वप्रस्तुतः केवल प्रत्यगात्मोपासकः कैवल्यनिष्ठः तस्मादन्य आत्मयाथात्म्य विद इत्युपरितनग्रन्थ निर्दिष्टः

पंचाग्नि विच्छेदितो ब्रह्मविदिति निरूपितं- अतः परस्पर विरुद्धो ऽदर्शीयग्रन्थइति ॥ २८५ ॥

इदं पुनरत्रावधेयं- इदमत्र पूर्वपक्षिणः प्रष्टव्याः- केनप्रमाणेन कैवल्य पुरुषार्थस्या नित्यत्वं भवन्तोवर्णयंतीति ॥ १ ॥ नतावत्प्राप्य विनाशात्तत्साधयितुं शक्यं ॥ २ ॥ नहि तदर्थिनः कर्मसाध्यं न श्वरमचिद्वस्तु तन्मिश्रं वा प्राप्यं ॥ ३ ॥ येन पुनरावृत्ति स्सम्भाव्येत ॥ ४ ॥ अपितु प्रकृतिवियुक्तं स्वस्वरूपावस्थितं प्रत्यगा त्मवस्तु ॥ ५ ॥ तच्च न क्षरणशीलं ॥ ६ ॥ क्षरस्सर्वाणि भूतानि कूटस्थोऽक्षरउच्यतइति हि मुक्तस्वरूपं गीतं ॥ ७ ॥ कैवल्यार्थिनः प्राप्यंत्र- कूटस्थाक्षरादि शब्दवाच्यं प्रकृति वियुक्तं स्वरूपेणा वस्थितं प्रत्यगात्म वस्त्वितिच गीता तद्भाष्यादिषु च समन्ततो भिहितं ॥ ८ ॥ नापि प्राप्यस्थानविनाशा दनित्यत्वं साधयितुंशक्यं- योगिनाममृतं स्थानं स्वात्म सन्तोषकारिणामिति प्रागुदाहृत विष्णु पुराणवचने कैवल्यार्थि प्राप्यस्थानस्या मृतशब्देन नित्यताया एवा वगमः सनित्यताया स्सप्रपंच मुत्तरत्रस्थापयिष्यमाणत्वाच्च ॥ ९ ॥ नापिच- सर्वे च्यवनधर्माण इति मोक्षधर्मवचन प्रामाण्या त्कैवल्य पुरुषार्थस्या नित्यत्वं सुवचम् - दर्शितवचनघटितप्रकरणस्य - गीता सप्तमाध्याये तेषां ज्ञानी नित्ययुक्त इत्यादिसप्तदशश्लोकभाष्यतात्पर्य चन्द्रिकायां तत्प्रकरणैककण्ठतया भवद्भि रेवोदाहृततया · तच्छ्लोक भाष्ये - तेषां ज्ञानी विशिष्यते - कुतः - नित्ययुक्त एकभक्ति रिति च - तस्य हि मदेकप्राप्यस्य मयायोगो नित्यः - इतरयोस्तु याव त्स्वाभिलषितप्राप्तिमयायोग इति ग्रन्थेन ज्ञानीतरयो रधिकारिणो र्यावत्स्वाभिलषितप्राप्तेयेव वर्तमानतया प्रतिपादितस्य सेव्यसेवकभाव लक्षणस्य भगवता सह योगस्य स्वाभिलषितप्राप्त्यनन्तरं निवृ- त्तेरेव प्रतिपन्नतया तदेककण्ठस्य दर्शितमोक्षधर्मवचनस्यापि सेव्य सेवकभावलक्षण भगवद्योगानिवृत्तिरूप च्यवनधर्मत्वपरताया एव सिद्ध्या तादृशवचनेन कैवल्यपुरुषार्थनिवृत्ते रसिद्धेः ॥ १० ॥ स्थला न्तरे ऽष्टमाध्यायत्रयोविंशादिश्लोकभाष्यतात्पर्यचन्द्रिकायां पंचाग्निवि द्रूपस्य कैवल्यनिष्ठस्य भगवत्प्राप्त्यर्थं तत ऊर्ध्वगमनवशा त्कैवल्य निवृत्त्या च्यवनधर्मत्वोपपादनमपि प्रागेव प्रत्युक्तं - प्रकृतिवियुक्त प्रत्यगात्मस्वरूपावाप्तिलक्षणकैवल्यपुरुषार्थस्य पश्चा द्विच्छेदासम्भव- स्योपपादितत्वात , भगवत्प्राप्त्यर्थोर्ध्वगमनस्य प्रत्युत श्लाघाहेतुत्वेपि

